*Sources of Indo-Aryan Lexicography*

*13*

# CĀNDRA VYĀKARANA
# OF
# CANDRAGOMIN

EDITED BY

K C CHATTERJI

DECCAN COLLEGE
POSTGRADUATE & RESEARCH INSTITUTE,
POONA

# CANDRAVYAKARANA
# OF
# CANDRAGOMIN

**Part II (Chapters 4-6)**

EDITED BY

KSHITISH CHANDRA CHATTERJI, SASTRI M A, D.LITT
Lecturer in Sanskrit, University of Calcutta, Calcutta
Formerly Editor, *Calcutta Oriental Journal*, *Surabhārat*, *Oriental Literary Digest*, etc.



POONA
1961

# PREFACE

The first part of the *Cāndravyākarana* comprising chapters 1–3 was published by the Institute in 1953 The second part of the work which consists of the remaining three chapters of the text followed by the Cāndravarnasūtras and an alphabetical index of the sūtras is now being published after a lapse of about eight years The second volume was to contain an elaborate introduction by its learned Editor Dr Kshitish Chandra Chatterji along with Candra's Dhātupātha, alphabetical index of roots, Unādisūtras with index etc , but because of his ill-health he could not attend to these matters. We hope he will soon recover to complete his learned and elaborate introduction to this edition of the *Cāndravyākarana*, which is considered to be the first revised edition of the *Astādhyāyī* of Pānini, embodying all the suggestions and corrections of Kātyāyana and Patañjali

Poona 15th October, 1961 S M Katre

॥ श्रीः ॥

## चतुर्थोऽध्यायः

**प्राक् क्रीताच्छः** ॥ १ ॥ [ पा० ५।१।१, स० ४।४।१८२ ]

प्राक् क्रीतावधेश्छो वेदितव्य· ।

**उगवादिभ्यो यत्** ॥ २ ॥ [ पा० ५।१।२ ]

उवर्णाद् गवादिभ्यश्च छविषये यद् भवति। शङ्कव्यं दारु। पिचव्यः कार्पास । सनङ्गव्यं चर्म। चरव्यास्तण्डुलाः। सक्तव्या धानाः। गव्यं चनम्। हविष्यास्तण्डुला· ॥ गो। हविस्। अष्टका। बर्हिस्। युग। मेधा। स्रुच्। नाभेर्नभश्च। नभ्यं काष्ठम्। शुनो यण इगू वा च दीर्घत्वम्। शुन्यम् शून्यम्। ऊधसो नश्च। ऊधन्यः कूप.। अक्षर। दर। वेद। स्वद। विष। गोरचि यद् [ २।४।१५ ] इति· सिद्धे पुनर्वचनं तदन्तविधि-ज्ञापनार्थम्। सुगव्यम्। प्रतिगव्यम्। कम्बल्यमूर्णापलशतमिति विस्ता चितकम्बल्याद् [ २।३।२४ ] इति सिद्धम्।

[ उ-गो-हवि-बर्हिरष्टका-मेधा-स्रुग्-युग-स्वदाक्षरासुर-खर-दर-विषाध्व-कूपेभ्यो यत्। नाभेर्नभश्चादेहांशात्। ऊधसो नश्च। शुनः सम्प्रसारणं दीर्घश्च वा। स० ४।४।१८३-१८६। कम्बलाच्च संज्ञायाम्। पा० ५।१।३, कम्बलात् संज्ञा-याम्। स० ४।४।१८७ ]

**वा हविर्यूपादिभ्यः** ॥ ३ ॥

हविर्वचनेभ्यो यूपादिभ्यश्च यद् वा भवति छविषये। पुरोडाश्यास्तण्डुला·, पुरोडाशीया। हवि शब्दात् पूर्वेण नित्यम्। यूप्य काष्ठम्, यूपीयम्। दीप्यम् दीपीयम् ॥ यूप। दीप। अपूप। तण्डुल। पृथुक। अभ्यूष। अभ्योष। अवोष। किण्व। मुसल। कटक। कर्णवेष्टक। इर्गल। स्थूणा। अश्वपत्र।

अन्नविकाराच्च। सुर्यम् सुरीयम्। तदन्तविधिना प्रदीप्यम् प्रदीपीयम्। यवापूप्यम् यवापूपीयम्।

[ विभाषा हविरपूपादिभ्य । पा० ५।१।४, हविर्भ्यो वा। यूपदीपाश्वपत्रस्थूणार्गलामुसलकटककर्णवेष्टकापूपसूपौदनपृथुकाभ्युषापोषतण्डुलकिण्वान्नविकारेभ्यश्च । स० ४।४।१८८-१८९ ]

**तस्मै हितम्** ॥ ४ ॥ [ पा० ५।१।५, स० ४।४।१९० ]

चतुर्थ्यन्ताद्धितेऽर्थे यथाविधि छयतौ भवत । वत्सेभ्यो हितो गोधुक् वत्सीयः। अवत्सीयः। पटव्यः।

**न राजाचार्यवृषन्ब्राह्मणात्** ॥ ५ ॥ [ ० न्ब्राह्मणेभ्यः। स० ४।४।१९१ ]

एभ्यो हितेऽर्थे छो न भवति। राज्ञे हितम्, आचार्याय हितम्, वृष्णे हितम्, ब्राह्मणाय हितम्।

[ वृषाय हितमिति विगृह्य वृष्यमिति भविष्यति, वृष्णे हितमिति विगृह्य वाक्यमेव। तथा ब्रह्मणे हितमिति विगृह्य ब्रह्मण्यमिति भविष्यति, ब्राह्मणेभ्यो हितमिति विगृह्य वाक्यमेव भविष्यति। महाभाष्यम्। ५।१।७। वृष्णे हितं ब्राह्मणेभ्यो हितमिति वाक्यमेव भवति। काशिका। तस्मै हितेऽराजाचार्यब्राह्मणवृष्णः। जै० ३।४।७ ]

**देहांशाद् यत्** ॥ ६ ॥

शरीरावयवाद्धितेऽर्थे यद् भवति। दन्तेभ्यो हितम् दन्त्यम्। राजदन्त्यम्। नाभ्यम्। नभादेशोऽत्र नास्ति, प्राण्यङ्गत्वात्[*]।

[ शरीरावयवाद्यत्। पा० ५।१।६, स० ४।४।१९२ ]

**खलयवमाषतिलवृषब्रह्मरथात्** ॥ ७ ॥ [ ० रथेभ्यः। स० ४।४।१९३ ]

---

[*] L. notes that in his Ms the word was originally शरीरांशत्वात् which was corrected in the margin to प्राण्यङ्गत्वात् According to grammarians नाभेर्नभश्च (iv .1 2 Vrtti) applies to रथावयव.

खलादिभ्यो हितेऽर्थे यद् भवति। खलाय हितम् खल्यम्। यव्यम्। माष्यम्। तिल्यम्। वृषाय हितम् वृष्यम्। ब्रह्मभ्यो हितम् ब्रह्मण्यम्। रथाय हिता रथ्या।

[ खलयवमाषतिलवृषब्रह्मणश्च। पा० ५।१।७, चकारोनुक्तसमुच्चयार्थ.। रथाय हिंता रथ्या। काशिका। ]

**अजाविभ्यां थ्यन्** ॥ ८ ॥ [ पा० ५।१।८, स० ४।४।१९४ ]

आभ्या हितेऽर्थे थ्यन् भवति। अजथ्या अविथ्या।

**भोगान्तात्मनः खः** ॥ ९ ॥ [ स० ४।४।१९५ ]

भोगान्तादात्मनश्च हितेऽर्थे खो भवति। मातृभोगीनः राजभोगीनः आचार्यभोगीन·। आत्मनीन ।

[ आत्मन्विश्वजनभोगोत्तरपदात् ख । पा० ५।१।९ ]

**पञ्चविश्वाज्जनान्तात्तदर्थात्** ॥ १० ॥

पञ्चविश्वाभ्या जनान्ताभ्या जनार्थवाचिभ्या हितेऽर्थे खो भवति। पञ्चभ्यो जनेभ्यो हित. पञ्चजनीन.। विश्वजनीन·। तदर्थादिति किम्? विश्वो जनोऽस्य विश्वजनस्तस्मै हितो विश्वेषा जनाय वा हितो विश्वजनीयः।

[ खविधाने पञ्चजनादुपसंख्यानम्। पा० ५।१।९।४। पञ्चविश्वाभ्यां जनात् कर्म्मधारये। स० ४।४।१९६। कर्मधारय इति चन्द्रवर्धमानजयादित्यादीनां मतम्। समानाधिकरण इति भाष्यमित्युक्तं बहुव्रीहावपि सूचनार्थम्। गोयोचन्द्रः (सं० त० ८५१)। ]

**सर्वात्** ॥ ११ ॥ [ स० ४।४।१९७ ]

सर्वशब्दाज्जनान्ताद्धितेऽर्थे खो भवति। सर्वजनीनः। तदर्थादित्येव। सर्वजनीय.।

[ सर्वजनाट् ठञ्। पा० ५।१।९।५ ]

**महतश्च ठञ्** ॥ १२ ॥ [ स० ४।४।१९८ ]

महत. सर्वशब्दाच्च जनान्ताद्धितेऽर्थे ठञ् भवति। माहाजनिकः। सार्वजनिक·। तदर्थादित्येव। महाजनीयः। सर्वजनीयः।

[ महाजनान्नित्यम्। पा० ५।१।९।६ ]

**सर्व्वाण्णो वा** ॥ १३ ॥ [ स० ४।४।१९९ ]

सर्वशब्दाद्धितेऽर्थे णो वा भवति। सर्वस्मै हित सार्वम् सर्वीयम्। पुनः सर्वग्रहणं जनान्तनिवृत्त्यर्थम्। •

[ सर्वपुरुषाभ्यां णढञौ। पा० ५।१।१० ]

**पुरुषाड् ढञ्** ॥ १४ ॥ [ स० ४।४।२०० ]

पुरुषाद्धितेऽर्थे ढञ् भवति। पुरुषाय हित पौरुषेयम्।

**माणवचरकात् खञ्** ॥ १५ ॥

एताभ्या हितेऽर्थे खञ् भवति। माणवीनः। चारकीणः।

[ माणवचरकाभ्यां खञ्। पा० ५।१।११, स० ४।४।२०१ ]

**विकृतेः प्रकृतौ** ॥ १६ ॥

विकृतिवाचिनश्चतुर्थ्यन्तात् प्रकृतावभिधेयाया यथाविधि छयतौ भवतः। अङ्गारेभ्यः काष्ठानि अङ्गारीयाणि। पिचव्य कार्पास। विकृतेरिति किम्? उदकाय कूपः। प्रकृतिग्रहणेन कारणमात्रग्रहणादिहापि स्याताम्। विकृतिसाहचर्याद्धि तदुपादानकारणग्रहणम्। प्रकृताविति किम्? असये कोशी। प्रकृतिग्रहणाभावे तदन्यविकृतेरपि तदर्थमात्रे स्याताम्। तस्मै इत्येव। सक्तूनां धानाः। इह कस्मान्न भवति—मूत्राय कल्पते यवागूरिति? सापेक्षत्वात्।

[ तदर्थं विकृतेः प्रकृतौ। पा० ५।१।१२, स० ४।४।२०२ ]

**ऋषभोपानहो ञ्यः** ॥ १७ ॥ [ ०नहोर्ञ्यः। पा० ५।१।१४ ]

ऋषभादुपानहश्च प्रकृतावभिधेयाया ञ्यो भवति। ऋषभाय वत्स आर्षभ्यः। औपानह्यो मुञ्जः, औपानह्यं चर्म।

[ ऋषभोपानद्भ्यां ञ्यः। स० ४।४।२०३ ]

**चर्मण्यञ्** ॥ १८ ॥ [ स० ४।४।२०४ ]

चर्मणि प्रकृतावभिधेयाया तद्विकृतिवाचिनोऽञ् भवति। वारत्रं चर्म।

**छदिर्बलिभ्यां ढञ्** ॥ १९ ॥ [ स० ४।४।२०५ ]

आभ्या ढञ् भवति प्रकृतावभिधेयायाम्। छादिषेयाणि तृणानि, छादिषेयं चर्म। बालेयास्तण्डुलाः।

[ छदिरुपधिबलेर्ढञ्। पा० ५।१।१३ ]

**उपधेः** ॥ २० ॥ [ उपधेः स्वार्थे। स० ४।४।२०६ ]

उपधिशब्दात् स्वार्थे ढञ् भवति योगविभागात्। उपधिरेव औपधेयः।

[ उपध्यर्थमिति प्रत्ययानुपपत्तिरुपध्यभावात्। सिद्धन्तु कृदन्तस्य स्वार्थे-ञ्वचनात्। पा० ५।१।१३।१-२ ]

**तदस्यात्र स्यादिति** ॥ २१ ॥ [ स० ४।४।२०७ ]

प्रथमान्तात् षष्ठ्यर्थे सप्तम्यर्थे च छयतौ भवतः, यत्तत् प्रथमान्तं स्याच्चेत्। स्यादिति सम्भावने लिङ्, इतिशब्दो विवक्षार्थः। प्रासादोऽस्य स्यात् प्रासादीय दारु। परशव्यम् अयः। प्रासादोऽत्र स्यात् प्रासादीयो देशः। स्यादिति किम्? प्रासादोऽत्रास्ति। इतिशब्दः किम्? प्रासादोऽस्य देवदत्तस्य स्यात्।

[ तदस्य तदस्मिन् स्यादिति। पा० ५।१।१६ ]

**परिखाया ढञ्** ॥ २२ ॥ [ पा० ५।१।१७, स० ४।४।२०८ ]

परिखायाः प्रथमान्ताया अस्यात्र स्यादित्यस्मिन्नर्थे ढञ् भवति। पारिखेयो देशः।

**प्राग्वतेष्ठञ्** ॥ २३ ॥ [ पा० ५।१।१८, स० ५।१।१ ]

वतिसंशब्दनात् प्राक् ठञ् वेदितव्यः।

**संख्यादेश्चालुकः** ॥ २४ ॥ [ स० ५।१।२ ]

अतः परं प्राग्वतेरलुगन्तात् संख्यादेरसंख्यादेश्च विधिर्वेदितव्यः। द्वैपारायणिकः। अलुक इति किम्? द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्। द्विशूर्पेण क्रीतं द्विशौर्पिकम्।

[ प्राग्वते. संख्यापूर्वपदानां तदन्तग्रहणमलुकि।

**आर्हात्** ॥ २५ ॥

आ अर्हशब्दाद् [७४] येऽर्थास्तेष्वत उत्तरो विधिर्वेदितव्य ।

[ आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् । पा० ५।१।१९, स० ५।१।३ । असमासे निष्कादिभ्य. । पा० ५।१।२०, निष्कपाणिपादमाषवाहद्रोणषष्टिभ्यश्चासमासे । स० ५।१।४ ] .

**कंसार्धाद् ठट्** ॥ २६ ॥

कंसार्धाभ्या ठड् भवति, आर्हात् । कंसिकः कंसिकी । अर्धिकः अर्धिकी ।

[ कंसाट् टिठन् । पा० ५।१।२५, टिठनर्धाच्च ५।१।२५।१, कंसार्धाभ्यां टिठन् । स० ५।१।५ ]

**कार्षापणात्** ॥ २७ ॥

कार्षापणादार्हीयेष्वर्थेषु ठड् भवति । कार्षापणिक. कार्षापणिकी ।

**प्रतिर्वास्य** ॥ २८ ॥

कार्षापणशब्दस्य ठटि प्रतिरादेशो वा भवति । प्रतिक प्रतिकी ।

[ कार्षापणाद्वा प्रतिश्च । पा० ५।१।२५।२, कार्षापणात् प्रतिश्चास्य वा । स० ५।१।६ ]

**शूर्पादञ्** ॥ २९ ॥ [ स० ५।१।७ ]

शूर्पादञ् वा भवति । शौर्पं शौर्पिक· शौर्पिकी ।

[ शूर्पादञन्यतरस्याम् । पा० ५।१।२६ ]

**सहस्रवसनविंशतिकशतमानादण्** ॥ ३० ॥ [ ० मानेभ्योऽण् । स० ५।१।८ ]

एभ्योऽण् भवति । साहस्र· । वासन. । वैंशतिक· । शातमानः ।

[ शतमानविंशतिकसहस्रवसनादण् । पा० ५।१।२७ ]

**शतात् केवलाद् ठन्यतावतस्मिन्** ॥ ३१ ॥ [ स० ५।१।९ ]

शतशब्दात् केवलाट् ठन्यतौ भवत, न चेत्तदेव शतमभिधेयं

तेन क्रीत द्विशतकम्। अतस्मिन्निति किम्? शतकं निदानम्। अन्यस्मिंस्तु शते भवत्येव। शतेन क्रीतं शाटकशतं शतिक शत्यम्।

[शताच्च ठन्यतावशते। पा० ५।१।२१, शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः। वा० १]

**संख्याया अतिशतः कन्** ॥ ३२ ॥ [स० ५।१।१०]

संख्याया. कन् भवति त्यन्त शदन्तं च वर्जयित्वा। पञ्चकः बहुकः। अतिशत इति किम्? आशीतिकः चात्वारिंशत्कः।

[संख्याया अतिशदन्ताया कन्। पा० ५।१।२२]

**कतिगणौ तद्वत्** ॥ ३३ ॥

कतिशब्दो गणशब्दश्च सर्वत्र संख्यावद् द्रष्टव्य। कतिकः गणकः। अन्यत्रापि। कतिधा गणधा। कतिशः गणशः। कतिकृत्व गणकृत्वः।

[३३-३४। बहुगणवतुडति संख्या। पा० १।१।२३। विप्रतिषेधाड्डतिग्रहण-मिति चेदर्थवद्ग्रहणात् सिद्धम्। पा० ५।१।२२।१। बहुगणवतुडतयश्च संख्या। स० १।१।१७। कतेश्च। स० ५।१।११]

**वतोः** ॥ ३४ ॥

वत्वन्तस्य संख्यावत् कार्यमन्यत्रापि भवति। तावत्क तावत्कृत्वः।

**इड् वा** ॥ ३५ ॥

वतुप्सम्बन्धिनः कन इड् वा भवति। तावतिकः तावत्कः।

[वतोरिड् वा। पा० ५।१।२३, वतोरिट् च वा। स० ५।१।१२]

**विंशतित्रिंशद्भ्याम्** ॥ ३६ ॥ [स० ५।१।१३]

एताभ्या कन् भवति। विंशतिक त्रिंशत्कः।

[योगविभाग करिष्यते। विंशतित्रिंशद्भ्यां कन् भवतीति। ततो ड्वुन-संज्ञायामिति। महाभाष्यम् ५।१।२८]

**अनाम्नि ड्वुन्** ॥ ३७ ॥ [असंज्ञाया ड्वुन्। स० ५।१।१४]

असंज्ञाया विंशतित्रिंशद्भ्या ड्वुन् भवति। विंशकः त्रिंशकः। अनाम्नीति किम्? विंशतिकः त्रिशत्क.।

[विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम्। पा० ५।१।२४]

**संख्याध्यर्धादेः संख्येयाल्लुगद्विः ॥ ३८ ॥**

संख्यादेरध्यर्धादेश्च संख्येयान्ताद्विहितस्य सक्लुग्भवति, न तु द्वि·। द्विशूर्प· पञ्चशूर्प· अध्यर्धशूर्प·। अर्धप्रञ्चम· अध्यर्धपञ्चम·। संख्याध्यर्धदेरिति किम्? परमनैष्किकम्। संख्येयादिति किम्? एकादशक। अद्विरिति किम्? द्विशूर्पेण क्रीतं द्विशौर्पिकम्। अनाम्नीत्येव। पाञ्चलोहितिक. पाञ्चकार्षापणिक। अध्यर्धग्रहणमन्यत्र संख्याकार्यनिवृत्त्यर्थम्।

[ अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्। पा० ५।१।२८, उक्तं सख्यात्वे प्रयोजनं तस्मादिहाध्यर्धग्रहणानर्थक्यम्। पा० ५।१।२८।३, द्विगोर्लुगद्वि। स० ५।१।१५, अध्यर्धार्धपूर्वपूरणा समासकन्विधौ। स० १।१।१८ ]

**कार्षापणसहस्रसुवर्णशतमानाद्वा ॥ ३९ ॥** [ स० ५।१।१६ ]

एतेभ्य संख्याध्यर्धपूर्वेभ्यो विहितस्य लुग् वा भवति। द्विकार्षाण्णः द्विकार्षापणिक.। अध्यर्धकार्षापणः अध्यर्धकार्षापणिक·। द्विसहस्रम् द्विसाहस्रम्। अध्यर्धसहस्रम् अध्यर्धसाहस्रम्। द्विसुवर्णम् द्विसौवर्णिकम्। अध्यर्धसुवर्णम् अध्यर्धसौवर्णिकम्। द्विशतमानम् द्विशातमानम्। अध्यर्धशतमानम् अध्यर्धशातमानम्।

[ विभाषा कार्षापणसहस्राभ्याम्। पा० ५।१।२९, कार्षापणसहस्राभ्यां सुवर्णशतमानयोरुपसंख्यानम्। पा० ५।१।२९।१ ]

**द्वित्रिबह्वादेर्निष्कविस्तात् ॥ ४० ॥** [स० ५।१।१७]

द्व्यादिपूर्वाभ्या निष्कविस्ताभ्या विहितस्य लुग् वा भवति। द्विनिष्कम् द्विनैष्किकम्। त्रिनिष्कम् त्रिनैष्किकम्। बहुनिष्कम् बहुनैष्किकम्। द्विविस्तम् द्विवैस्तिकम्। त्रिविस्तम् त्रिवैस्तिकम्। बहुविस्तम् बहुवैस्तिकम्।

[ द्वित्रिपूर्वान्निष्कात्। विस्ताच्च। पा० ५।१।३०-३१। तत्र च बहुग्रहणम्। ५।१।३०।२। ]

**विंशतिकात् खः ॥ ४१ ॥** [ पा०५।१।३२, स०५।१।१८ ]

संख्याध्यर्धपूर्वाद् विंशतिकात् खो भवति। द्विविंशतिकीन अध्यर्धविंशतिकीनः।

**खारीकाकणीभ्य ईकन्** ॥ ४२ ॥

खारीकाकणीभ्या संख्याध्यर्धपूर्वाभ्या बहुवचननिर्देशात् केवलाभ्यां च ईकन् भवति। द्विखारीक. अध्यर्धखारीक खारीक। द्विकाकणीकम् अध्यर्धकाकणीकम् काकणीकम्।

[ खार्या ईकन्। पा० ५।१।३३, खार्या ईकन् केवलायाश्च। काकिण्याश्चोपसंख्यानम्। केवलायाश्च। पा० ५।१।३३।१-३, केवलाभ्यां च खारीकाकणीभ्यामीकन्। स० ५।१।१९ ]

**पणपादमाषाद् यत्** ॥ ४३ ॥ [०माषेभ्यो यत्। स०५।१।२०]

एभ्य संख्याध्यर्धपूर्वेभ्यो यद् भवति। द्विपण्य· अध्यर्धपण्य.। द्विपाद्यम् अध्यर्धपाद्यम्। अप्राण्यङ्गत्वान्न पदादेश.। द्विमाष्यम् अध्यर्धमाष्यम्।

[ पणपादमाषशताद् यत्। पा० ५।१।३४ ]

**शताद्वा** ॥ ४४ ॥ [ स० ५।१।२१ ]

सख्याध्यर्धपूर्वाच्छतशब्दाद् यद् वा भवति। द्विशत्यम् द्विशतम्। अध्यर्धशत्यम् अध्यर्धशतम्।

**शाणात्** ॥ ४५ ॥ [ स० ५।१।२२ ]

संख्याध्यर्धपूर्वाच्छाणाद् यद्वा भवति। द्विशाण्यम्, द्विशाणम्। अध्यर्धशाण्यम्, अध्यर्धशाणम्।

[ ४४-४५। शाणाद्वा। पा० ५।१।३५, शतशाणाभ्यां वा। पा० ५।१।३५।१ ]

**द्वित्र्यादेरण् च** ॥ ४६ ॥ [ स० ५।१।२३ ]

शाणाद् द्वित्रिपूर्वादण् भवति, यच्च वा। द्वैशाणम्, द्विशाण्यम्, द्विशाणम्। त्रैशाणम्, त्रिशाण्यम्, त्रिशाणम्।

[ द्वित्रिपूर्वादण् च। पा० ५।१।३५।२, काशिका ५।१।३६ ]

**तेन क्रीतं मूल्यात्** ॥ ४७ ॥ [ स० ५।१।२४ ]

मूल्यवाचिनस्तृतीयान्तात् क्रीतमित्यस्मिन्नर्थे यथाविहितं ठञादयो भवन्ति। प्रास्थिक । शत्य शतिक: । पञ्चक । मूल्यादिति किम्? पाणिना* क्रीतम्, देवदत्तेन क्रीतम्। वृत्तौ संख्याविशेषानवगमादिह— प्रस्थाभ्या पस्यैर्वा क्रीत न भवति। तदर्थावगमे तु भवत्येव। द्विकम्, त्रिकम्, पञ्चकम्। मुद्रै क्रीतम् मौद्रिकम्।

[ तेन क्रीतम्। पा० ५।१।३७। तेन क्रीतमिति करणात्। अकर्त्रैकान्तात्। पा० ५।१।३७।१-२ ]

**तस्य वापः** ॥ ४८ ॥ [ पा० ५।१।४५, स० ५।१।२५ ]

षष्ठयन्ताद्वापेऽर्थे यथाविधि ठञादयो भवन्ति। उप्यतेऽस्मिन्निति वाप: । प्रास्थिक ।

**पात्रात् ष्ठन्** ॥ ४९ ॥ [ पा० ५।१।४६, स० ५।१।२६ ]

षष्ठयन्तात् पात्राद् वापेऽर्थे ष्ठन् भवति। पात्रिक: पात्रिकी।

**वातपित्तश्लेष्मसन्निपाताच्छमनकोपने** ॥ ५० ॥

वातादिभ्य: षष्ठयन्तेभ्य· शमने कोपने चार्थे ठञ् भवति। वातिक: पैत्तिक· श्लैष्मिक सान्निपातिक ।

[ तस्यनिमित्तप्रकरणे वातपित्तश्लेष्मभ्य शमनकोपनयोरुपसंख्यानम्। सन्निपाताच्च। पा० ५।१।३८।१-२, वातपित्तश्लेष्मसन्निपातेभ्य शमनकोपनयो· । स० ५।१।२७ ]

**निमित्ते संयोगोत्पाते** ॥ ५१ ॥

षष्ठयन्तान्निमित्ते सयोगोत्पातस्वरूपे ठञादयो भवन्ति। शतस्य निमित्तं संयोग उत्पातो वा शत्य·, शतिक· । साम्रामिक· । सयोगोत्पात इति किम्? शतस्य निमित्तं देवदत्त. ।

[ तस्य निमित्तं सयोगोत्पातौ। पा० ५।१।३८, स० ५।१।२८ ]

---

*Ms has पाणिनिना which is supported by Hrdayahārinī, but पाणिना is distinctly better, and we find in the Bhāsya: देवदत्तेन पाणिना क्रीतम्।

**द्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्** ॥ ५२ ॥

द्व्यचः षष्ठ्यन्तात् सख्यापरिमाणाश्वादिवर्जितान् निमित्ते संयोगोत्पाते यद्भवति। धनस्य निमित्तं सयोग उत्पातो वा धन्यः। संख्यादिवर्जितादिति किम्? पञ्चकः प्रास्थिकः। आश्विकः आश्मिकः। कथं गव्यम्? गोरचि यद् [ २।४।१५ ] इत्येव सिद्धम्॥ अश्व। अश्मन्। गण। ऊर्णा। उमा। भङ्गा। वर्षा। वसु।

[ गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्। पा० ५।१।३९। द्व्यचोऽसंख्यापरिमाण-श्वगणवसूर्णोमाभङ्गावर्षाश्मनो यत्। स० ५।१।२९ ]

**ब्रह्मवर्चसात्** ॥ ५३ ॥ [ स० ५।१।३० ]

ब्रह्मवर्चसात् षष्ठ्यन्तान्निमित्ते सयोगोत्पाते यद् भवति। ब्रह्मवर्चस्यः।

[ यत्प्रकरणे ब्रह्मवर्चसाच्च। पा० ५।१।३९।१ ]

**पुत्राच्छश्च** ॥ ५४ ॥

पुत्रात् षष्ठन्तान्निमित्ते सयोगोत्पाते छो भवति, यच्च। पुत्रीयः पुत्र्यः।

[ पुत्राच्छ च। पा० ५।१।४०, स० ५।१।३१ ]

**पृथिवीसर्वभूमेरञणौ** ॥ ५५ ॥

एताभ्यां षष्ठ्यन्ताभ्यां निमित्ते सयोगोत्पातेऽञणौ भवतः। पार्थिवः। सार्वभौमः।

[ सर्वभूमिपृथिवीभ्यामणञौ। पा० ५।१।४१, पृथिवीसर्वभूमिभ्यामञणौ। स० ५।१।३२ ]

**ईश्वरे** ॥ ५६ ॥

पृथिवीसर्वभूम्योः षष्ठ्यन्तयोरीश्वरेऽर्थेऽञणौ भवतः। पार्थिवः सार्वभौमः।

[ तस्येश्वरः। पा० ५।१।४२, ईश्वरः। स० ५।१।३३ ]

**तत्र विदिते** ॥ ५७ ॥

पृथिवीसर्वभूमेः सप्तम्यन्ताद्विदितेऽञणौ भवतः। पार्थिवः। सार्वभौमः।

[ तत्र विदित इति च। पा० ५।१।४३, तत्र विदितः। स० ५।१।३४ ]

**लोकसर्वलोकात्** ॥ ५८ ॥

एताभ्यां सप्तम्यन्ताभ्यां विदिते ठञ् भवति। लौकिक.। सार्वलौकिक.।

[लोकसर्वलोकाट्ठञ्। पा० ५।१।४४, लोकसर्वलोकाभ्यां ठञ्। स० ५।१।३५]

**तदत्रास्मै वृद्ध्यायलाभशुल्कोपद दीयते** ॥५९॥ [स०५।१।३६]

प्रथमान्तादत्रास्मै दीयत इत्यनयोरर्थयोर्यथाविधि ठञादयो भवन्ति, यत्तत् प्रथमान्त वृद्ध्यादि चेत्तद्भवति। पञ्चास्मिन्नस्मै वा वृद्धिर्वायो वा लाभो वा शुल्को वोत्कोचो वा दीयते पञ्चक.। शत्य· शतिकः। वृद्ध्यादिग्रहणं किम्? पञ्च मूल्यमस्मिन् दीयते।

[तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते। पा० ५।१।४७]

**पूरणार्धाट्ठन्** ॥ ६० ॥ [पा० ५।१।४८, स० ५।१।३७]

पूरणवाचिनोऽर्धाच्च प्रथमान्तादत्रास्मै दीयत इत्यनयोरर्थयोष्ठन् भवति, तच्च प्रथमान्तं वृद्ध्यादि चेद्भवति। पञ्चमोऽस्मै वास्मिन् वा वृद्ध्यादि दीयते पञ्चमिक.। अर्धिक·। पञ्चमिका, अर्धिका।

**भागाद् यच्च** ॥ ६१ ॥ [पा० ५।१।४९, स० ५।१।३८]

भागात् प्रथमान्तादस्मिन्नस्मै वा दीयत इत्यनयोरर्थयोर्यद् भवति ठंश्च, स चेद्वृद्ध्यादीनामन्यतमोऽर्थो भवति। भागोऽस्मिन्नस्मै वा दीयते भाग्यः भागिकः। भाग इति रूपकार्धे रूढिः।

**तदस्य परिमाणम्** ॥ ६२ ॥ [पा०५।१।५७, स०५।१।३९]

प्रथमान्तादस्येत्यस्मिन्नर्थे यथाविधि ठञादयो भवन्ति, तच्चेत् प्रथमान्तं परिमाण भवति। प्रास्थिको व्रीहि.। खारशतिकः। खारसहस्रिक·। पञ्चकः सङ्घः। अष्टकं पाणिनीयं सूत्रम्। पञ्चकः पाठोऽधीत·। पञ्चकाः शकुनय इति पञ्च परिमाणमेषामित्यङ्गीकृतावयवभेदः समुदायः प्रकृत्यर्थः

तद्विशिष्टा· समुदायिन· कशब्दस्यार्थ· । पुन· प्रथमानिर्देशः पुनर्विधानार्थः । अतः संख्यादे·° [३८] इति लुग् न भवति । द्वे षष्टी जीवितपरिमाणमस्य द्विषाष्टिकः । पङ्क्ति विंशति· त्रिंशत् चत्वारिंशत् पञ्चाशत् षष्टिः·सप्ततिः अशीति· नवति· शतमिति संख्याशब्दा एवैते, अयुतप्रयुतनियुतादिवत्, लोकप्रसिद्धा· ।

[ पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् । पा० ५।१।५९, पङक्ति· । विंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् । स० ५।१।४३-४४ ]

**पञ्चद्दशद्वर्गे वा ॥ ६३ ॥**

पञ्चद् दशदिति वर्गेऽभिधेये वा निपात्यते । पञ्चद् वर्गः पञ्चकः । दशद् वर्ग दशकः ।

[ पञ्चद्दशतौ वर्गे वा । पा० ५।१।६०, स० ५।१।४६ ]

**स्तोमे डट् ॥ ६४ ॥** [ स० ५।१।४७ ]

प्रथमान्तात् परिमाणवाचिनोऽस्येत्यस्मिन्नर्थे स्तोमेऽभिधेये डड् भवति । पञ्चदशः स्तोम·, पञ्चदशी पङ्क्ति· । स्तोमस्य संख्यैव परिमाणं भवति नान्यत् ।

[ स्तोमे डविधि· पञ्चदशाद्यर्थं । ५।१।५७-५८।८, डट् स्तोमे । जै० ३।४।७२, स्तोमे ड । डडिति चान्दा । सं० त० ६४२-६४३ ]

**त्रिंशच्चत्वारिंशतो ब्राह्मणाख्यायां डण् ॥ ६५ ॥**

एताभ्या प्रथमान्ताभ्यामस्येत्यस्मिन्नर्थे ब्राह्मणे तन्नाम्न्यभिधेये डण् भवति । त्रैंशानि ब्राह्मणानि । चात्वारिंशानि । आख्याग्रहणं किम्? चात्वारिंशत्कः[*] ।

[ त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् । पा० ५।१।६२, त्रिंशच्चत्वारिंशद्भ्यां ब्राह्मणाख्यायां डण् । स० ५।१।४८ ]

**भूतिवत्सांशाः ॥ ६६ ॥** [ स० ५।१।४९ ]

---

[*] चत्वारिंशत्क.—Ms , Hṛdayahāriṇī

प्रथमान्तादस्येत्यस्मिन्नर्थे यथाविधि ठञादयो भवन्ति यत्तत् प्रथमान्तं भृत्यादि चेद् भवति। पञ्च भृतिर्वा वस्नो वाशो वास्य पञ्चकः।

[ सोऽस्यांशवस्नभृतयः। पा० ५।१।५६ ]

**तत् पचति द्रोणादण् च ॥ ६७ ॥** [ स० ५।१।५० ]

द्वितीयान्तात् पचतीत्येतस्मिन्नर्थे द्रोणादण् भवति, ठञ् च। द्रौणी द्रौणिकी।

[ सम्भवत्यवहरति पचति। पा० ५।१।५२, तत्पचतीति द्रोणादण् च। ५।१।५२।१ ]

**सम्भवत्यवहरति च ॥ ६८ ॥** [ स० ५।१।५१ ]

सम्भवत्यवहरति पचतीत्येतेष्वर्थेषु द्वितीयान्ताद् यथाविधि ठञादयो भवन्ति। प्रस्थं सम्भवत्यवहरति पचति वा प्रास्थिकः। खारीकः।

[ सम्भवत्यवहरति पचति। पा० ५।१।५२ ]

**पात्राचिताढकात् खो वा ॥ ६९ ॥**

पात्रादिभ्यो द्वितीयान्तेभ्यः सम्भवत्यादिष्वर्थेषु खो वा भवति। पात्रीणा पात्रिकी। आचितीना आचितिकी। आढकीना आढकिकी।

[ आढकाचितपात्रात् खोऽन्यतरस्याम्। पा० ५।१।५३। पात्राचिताढकेभ्यः खो वा। स० ५।१।५२ ]

**संख्यादेः ष्ठंश्च ॥ ७० ॥**

संख्यादेः पात्राद्यन्तात् सम्भवत्यादिष्वर्थेषु ष्ठन् भवति खश्च वा। द्विपात्रिकी द्विपात्रीणा द्विपात्री। द्व्याचितिकी द्व्याचितीना द्व्याचिता। द्व्याढकिकी द्व्याढकीना द्व्याढकी।

[ द्विगोः ष्ठंश्च। पा० ५।१।५४, सं० ५।१।५३ ]

**कुलिजाद्वा ॥ ७१ ॥**

कुलिजात् संख्यादेः सम्भवत्यादिष्वर्थेषु ष्ठन् भवति खो वा, यथाप्राप्तं च। खो वा [ ६९ ] इत्यनुवर्तमाने पुनर्वावचनं लुकोऽपि विकल्पार्थम्। द्विकुलिजिकी द्विकुलिजीना द्वैकुलिजिकी द्विकुलिजी।

[ कुलिजाल्लुक्खौ च। पा० ५।१।५५, कुलिजाल्लुक् च वा। स० ५।१।५४ ]

**वंशादिभ्यो हरति वहत्यावहति भारात्** ॥ ७२ ॥

वंशादिभ्यः परात् भारात् द्वितीयान्ताद्धरत्यादिष्वर्थेषु ठञ् भवति। वंशभारं हरति वहत्यावहति वा वांशभारिकः। कौटजभारिकः। वंशादिभ्य इति किम्? भारं वहति। अथवा वंशादिभ्यो भारभूतेभ्यो द्वितीयान्तेभ्यो वहत्यादिष्वर्थेषु ठञ् भवति। वंशान् भारभूतान् हरति वहत्यावहति वा वांशिकः। कौटजिकः। भारादिति किम्? वंशं हरति॥ वंश। कुटज। बल्बज। मूल। स्थूणा। अक्ष। अश्मन्। इक्षु। खट्वा।

[ तद्धरति वहत्यावहति भाराद्वंशादिभ्यः। पा० ५।१।५०, हरतिवहत्यावहति वंशकुटजबल्बजमूलखट्वास्थूणाश्लक्ष्णाक्षाश्मेक्षुभ्यो भारात्। स० ५।१।५५ ]

**द्रव्यवस्त्रात् कन्ठनौ** ॥ ७३ ॥

द्रव्याद् द्वितीयान्ताद्धरत्यादिष्वर्थेषु कन् भवति वस्त्राट्ठन्। द्रव्यकः वस्त्रिकः।

[ वस्त्रद्रव्याभ्यां ठन्कनौ। पा० ५।१।५१, द्रव्यवस्त्राभ्यां कन्ठञौ। स० ५।१।५७ ]

**अर्हति** ॥ ७४ ॥ [ स० ५।१।५८ ]

अर्हत्यर्थे द्वितीयान्ताद् यथाविधि ठञादयो भवन्ति। वस्त्रमर्हति वास्त्रिकः। शत्यः, शतिकः।

[ तदर्हति। पा० ५।१।६३ ]

**छेदादिभ्यो नित्यम्** ॥ ७५ ॥ [ पा० ५।१।६४ ]

छेदादिभ्यो द्वितीयान्तेभ्यो नित्यमर्हतीत्येतस्मिन्नर्थे ठञ् भवति। सर्वदा छेदमर्हति छैदिकः। भैदिकः॥ छेद। भेद। द्रोह। दोह। नर्त। कर्ष। सम्प्रयोग। विप्रकर्ष। संप्रश्न। विराग विरङ्ग च।

[ छेद-भेद-द्रोह-दोह-नर्त-कर्ष-सम्प्रयोग-विप्रयोग-विप्रकर्ष-प्रेषण-सम्प्रश्नेभ्यो नित्यम्। विरागाद्विरङ्गश्च। स० ५।१।५९-६० ]

**शीर्षच्छेदाद् यच्च** ॥ ७६ ॥ [पा० ५।१।६५, स० ५।१।६१]

शीर्षच्छेदाद् द्वितीयान्तान्नित्यमर्हतीत्येतस्मिन्नर्थे यद् भवति, ठञ् च। शीर्षच्छेद्य शैर्षच्छेदिक.।

**यज्ञाद् घः** ॥ ७७ ॥

यज्ञाद् द्वितीयान्तादर्हतीत्येतस्मिन्नर्थे घो भवति। यज्ञिय। योऽपि यज्ञकर्मार्हति यज्ञमसावर्हति।

[ यज्ञर्त्विग्भ्या घखञौ। पा० ५।१।७१, यज्ञाद् घस्तत्कर्मं च। स० ५।१।६२ ]

**पात्राद् यश्च** ॥ ७८ ॥ [ स० ५।१।६३ ]

पात्राद् द्वितीयान्तादर्हत्यर्थे घो भवति, यश्च। पात्रिय पात्र्य·।

[ पात्राद् घश्च। पा० ५।१।६८ ]

**दण्डादिभ्यः** ॥ ७९ ॥ [ पा० ५।१।६६ ]

दण्डादिभ्यो द्वितीयान्तेभ्योऽर्हत्यर्थे यो भवति। दण्ड्यः। मुसल्य ॥ दण्ड। मुसल। मधुपर्क। कशा। अर्घ। मेधा। मेघ। उदक। वध। युग। इभ।

[ दण्ड-मुसल-मेध-वध-मधुपर्का-ऽर्घ-मेघोदकेभ-कशा-युगेभ्य। स० ५।१।६४ ]

**दक्षिणाकडङ्गरस्थालीबिलाच्छश्च** ॥ ८० ॥

दक्षिणादिभ्यो द्वितीयान्तेभ्योऽर्हत्यर्थे छो भवति, यश्च। दक्षिणामर्हति दक्षिणीय· दक्षिण्य·। कडङ्गरीय कडङ्गर्य.। स्थालिबिलीय· स्थालीबिल्य.।

[ कडङ्गरदक्षिणाच्छ च। स्थालीबिलात्। पा० ५।१।६९-७०। दक्षिणकडङ्गर-स्थालीबिलेभ्यश्छ च। स० ५।१।६५ ]

**आर्तिजीनः** ॥ ८१ ॥

अयं शब्दो निपात्यते ऋत्विजमर्हति ऋत्विक्कर्म वार्हतीत्येतस्मिन्नर्थे।

[ यज्ञर्त्विग्भ्यां घखञौ। पा० ५।१।७१, यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम्। वा० १, आर्त्विज्यं चर्त्विज खञ्। स० ५।१।६६ ]

**अधृष्टाकार्ययोः शालीनकौपीने** ॥ ८२ ॥ [ स० ५।१।६७ ]

शालामर्हति प्रवेष्टुम् शालीन इत्यधृष्टे निपात्यते, कूपमर्हति प्रवेष्टुं कौपीन इत्यकार्ये।

[ शालीनकौपीने अधृष्टाकार्ययो·। पा० ५।२।२० ]

**पारायणतुरायणचान्द्रायणं वर्तयति** ॥ ८३ ॥ [पा० ५।१।७२]

एतेभ्यो द्वितीयान्तेभ्यो वर्तयतीत्यस्मिन्नर्थे ठञ् भवति। पारायणिकः तौरायणिकः चान्द्रायणिकः।

[ **पारायणतुरायणचान्द्रायणेभ्यो वर्तयति। स० ५।१।६८** ]

**संशयमापन्नः** ॥ ८४ ॥ [ पा० ५।१।७३ ]

संशयाद् द्वितीयान्तादापन्न इत्यस्मिन्नर्थे ठञ् भवति। सांशयिकः॥

[ **संशयादापन्नः। स० ५।१।६९** ]

**योजनं गच्छति** ॥ ८५ ॥ [ पा० ५।१।७४ ]

योजनाद् द्वितीयान्ताद् गच्छतीत्यस्मिन्नर्थे ठञ् भवति। यौजनिकः॥

[ **योजनाद् गच्छति। स० ५।१।७०** ]

**क्रोशयोजनादेः शतादभिगमनार्हे च** ॥ ८६ ॥

क्रोशादेर्योजनादेश्च शताद् गच्छतीत्यस्मिन्नर्थे ततोऽभिगमनार्हे च ठञ् भवति। क्रोशशतं गच्छति क्रौशशतिकः। यौजनशतिकः। क्रोशशतादभिगमनमर्हति क्रौशशतिकः। यौजनशतिकः।

[ **योजनं गच्छतीति क्रोशशतयोजनशतयोरुपसंख्यानम्। ततोऽभिगमनमर्हतीति च। पा० ५।१।७४।१-२, क्रोशयोजनादेः शतात् ततोऽभिगमनार्हे च॥ स० ५।१।७१** ]

**पथः ष्ठन्** ॥ ८७ ॥ [ स० ५।१।७२ ]

पथो द्वितीयान्ताद् गच्छतीत्यस्मिन्नर्थे ष्ठन् भवति। पथिकः पथिकी॥

[ **पथः ष्कन्। पा० ५।१।७५** ]

**णः पन्थश्च नित्यम्** ॥ ८८ ॥ [ स० ५।१।७३ ]

पथो द्वितीयान्तान्नित्यं गच्छतीत्यस्मिन्नर्थे णो भवति पन्थादेशश्च। नित्यं पन्थानं गच्छति पान्थः, पान्था।

[ **पन्थो ण नित्यम्। पा० ५।१।७६** ]

**अजशङ्कूत्तरवारिजङ्गलकान्तारादिनाहृते च ॥ ८९ ॥**

अजादिपूर्वात् पथिशब्दात् तृतीयान्ताद् गच्छतीत्यस्मिन्नर्थ आहृते च ठञ् भवति। अजपथेन गच्छति अजपथेनाहृतः आजपथिकः। शाङ्कुपथिकः। औत्तरपथिकः। वारिपथिकः। जाङ्गलपथिकः। कान्तारपथिकः।

[ उत्तरपथेनाहृतं च। पा० ५।१।७७। आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम्। अजपथशङ्कुपथाभ्यां च। पा० ५।१।७७।१-२, अजशङ्कूत्तरवारिजाङ्गलकान्तारादेस्तेनाहृते च। स० ५।१।७४ ]

**स्थलादिना ॥ ९० ॥**

स्थलपूर्वात् पथिशब्दात् तृतीयान्ताद् आहृतं गच्छतीत्यनयोरर्थयोष्ठञ् भवति। स्थालपथिकः।

[आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम्। पा० ५।१।७७।१, स्थलादेः। स० ५।१।७५ ]

**मधुकमरीचयोरण् ॥ ९१ ॥** [ स० ५।१।७६ ]

स्थलपथेनाहृते मधुके मरीचे चाण् भवति। स्थालपथं मधुकं मरीचं च।

[ मधुकमरिचयोरण् स्थलात्। पा० ५।१।७७।३ ]

**कालात् ॥ ९२ ॥** [ पा० ५।१।७८, स० ५।१।७७ ]

अयमधिकारः।

**तेन निर्वृत्तः ॥ ९३ ॥**

कालवाचिनस्तृतीयान्तान्निर्वृत्त इत्यस्मिन्नर्थे ठञ् भवति। मासेन निर्वृत्तं मासिकम्। आह्निकम्।

[ तेन निर्वृत्तम्। पा० ५।१।७९, स० ५।१।७८ ]

**तस्मै भृतोऽधीष्टः ॥ ९४ ॥** [ स० ५।१।७९ ]

चतुर्थ्यन्तात् कालवाचिनो भृतोऽधीष्ट इत्यनयोरर्थयोष्ठञ् भवति। मासाय भृतोऽधीष्टो वा मासिकः। सांवत्सरिकः।

[ तमधीष्टो भृतो भूतो भावी। पा० ५।१।८० ]

**तं भूतो भावी** ॥ ९५ ॥ [ स० ५।१।८० ]

द्वितीयान्तात् कालवाचिनो भूतो भावीत्यनयोरर्थयोष्ठञ् भवति। मासं भूतो भावी वा मासिकः। सांवत्सरिकः। अत परं निर्वृत्तादिष्वर्थेषु यथासम्भवं विधिर्वेदितव्यः।

[ तमधीष्टो भृतो भूतो भावी। पा० ५।१।८० ]

**मासाद्वयसि यत्खञौ** ॥ ९६ ॥ [ पा०, स० ५।१।८१ ]

मासाद् द्वितीयान्ताद्वयसि गम्यमाने भूतेऽर्थे यत्खञौ भवतः। मासम् भूतो मास्य मासीन·। मासीना दुहितास्य मासीनादुहितृकः। °आदैज्झेतु·° [ ५।२।३६ ] इति पुंवद्भावो न भवति।

**संख्यादेर्यप्** ॥ ९७ ॥

सख्यादेर्मासाद् वयसि गम्यमाने यप् परो भवति। द्वौ मासौ भूतः द्विमास्य।

[ द्विगोर्यप्। पा०, स०। ५।१।८२ ]

**षषो ण्यच्च वा** ॥ ९८ ॥

षडादेर्मासाद् वयसि गम्यमाने ण्यद् भवति, यप् च वा। षड् मासान् भूतः षाण्मास्य षाण्मासिक· षण्मास्य·।

[ षण्मासाण् ण्यच्च। पा० ५।१।८३, षण्मासाण् ण्यच्च वा। स० ५।१।८३ ]

**ठंश्चान्यत्र** ॥ ९९ ॥

वयसोऽन्यत्र षडादेर्मासान् निर्वृत्तादिष्वर्थेषु ठन् भवति, ण्यच् च। षड्भिर्मासैर्निर्वृत्त· षड्भ्यो मासेभ्यो भृतोऽधीष्टो वा षड् मासान् भूतो भावी वा षण्मासिकः षाण्मास्यः।

[ अवयसि ठंश्च। पा०। स० ५।१।८४ ]

**समायाः खः** ॥१००॥ [ पा०, स० ५।१।८५ ]

निर्वृत्तादिष्वर्थेषु समायाः खो भवति। समया निर्वृत्तः, समायै भृतोऽधीष्टो वा, समा भूतो भावी वा· समीनः।

**संख्यादेर्वा** ॥१०१॥

संख्यादेः समाया निर्वृत्तादिष्वर्थेषु खो वा भवति। द्विसमीनः द्वैसमिकः।

[ द्विगोर्वा। पा०, स० ५।१।८६ ]

**रात्र्यहःसंवत्सरात्** ॥१०२॥

रात्र्यह सवत्सरेभ्यः सख्यादिभ्यो निर्वृत्तादिष्वर्थेषु खो वा भवति। द्विरात्रीणः द्वैरात्रिक। द्व्यहीनः द्वैयह्निक। द्विसंवत्सरीणः द्विसावत्सरिकः।

[ रात्र्यह सवत्सराच्च। पा०, स० ५।१।८७ ]

**वर्षाल्लुक् च** ॥१०३॥ [ पा०, स० ५।१।८८ ]

वर्षात् संख्यादेर्निर्वृत्तादिष्वर्थेषु खो वा भवति ठञो लुक् च वा। द्विवर्षीण द्विवर्षः द्विवार्षिक। भाविनि तु द्वैवर्षिक।

**प्राणिनि** ॥१०४॥

संख्यादेर्वर्षात् प्राणिनि खस्यापि लुगेव भवति पुनर्विधानात्। द्विवर्षः त्रिवर्ष। षष्टिका इति पूर्वेणैव कना सिद्धम्। षष्टिर्दिनानि पाकपरिमाणमेषामिति पष्टिकाः शालयः। रूढत्वान्न मुद्गादिष्वतिप्रसङ्ग।

[ चित्तवति नित्यम्। पा०, स० ५।१।८९, षष्टिका. षष्टिरात्रेण पच्यन्ते। पा० ५।१।९०। तेन पच्यन्ते षष्टिरात्रात् कन् रात्रलोपश्च संज्ञायाम्। स० ५।१।९० ]

**तेन सुकरकार्यलभ्यपरिजय्यम्** ॥१०५॥

तृतीयान्तात् कालवाचिन सुकरादिष्वर्थेषु ठञ् भवति। मासेन सुकरं वा कार्यं वा लभ्यं वा परिजय्यं वा मासिकम्।

[ तेन परिजय्यलभ्यकार्यसुकरम्। पा० ५।१।९३, परिजय्यलभ्यकार्यसुकराणि। स० ५।१।९१ ]

**तदस्य ब्रह्मचर्ये** ॥१०६॥

द्वितीयान्तात् कालवाचिनोऽस्येति षष्ठ्यर्थे ठञ् भवति ब्रह्मचर्ये गम्यमाने। मासमस्य ब्रह्मचर्य मासिको ब्रह्मचारी। अथवा तदिति प्रथमान्ता-

दस्येति षष्ठ्यर्थे ब्रह्मचर्येऽभिधेये ठञ् भवति। मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम्।

[ तदस्य ब्रह्मचर्यम्। पा० ५।१।९४, स० ५।१।९६, सोऽस्य ब्रह्मचर्ये। स० ५।१।९३ ]

**महानाम्न्यादीनाम् ॥१०७॥**

महानाम्न्यादीना षष्ठ्यन्ताना ब्रह्मचर्येऽभिधेये ठञ् भवति। महानाम्नीनामृचा ब्रह्मचर्य माहानाम्निकम्। आदित्यव्रतिकम्। गौदानिकम्।

[ तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसंख्यानम्। पा० ५।१।९४।१, तस्य महानाम्न्यादित्यव्रतगोदानादिभ्य । स० ५।१।९४ ]

**तच्चरति ॥१०८॥**

महानाम्न्यादिभ्यो द्वितीयान्तेभ्यश्चरतीत्यस्मिन्नर्थे ठञ् भवति। महानाम्नीना व्रतं तच्छब्देनोच्यते। तच्चरति माहानाम्निकः।

[ तच्चरतीति च। पा० ५।१।९४।२, तच्चरतीति चैतेभ्यो व्रतवृत्तिभ्यः। स० ५।१।९५ ]

**देवव्रतादिभ्यो डिनिः ॥१०९॥**

देवव्रतादिभ्यो द्वितीयान्तेभ्यश्चरतीत्यस्मिन्नर्थे डिनिर्भवति। देवव्रती तिलव्रती अवान्तरदीक्षी।

[ अवान्तरदीक्षादिभ्यो डिनि । पा० ५।१।९४।२, देवव्रत-तिलव्रता-ऽवान्तर-दीक्षादिभ्यो डिनि । स० ५।१।९६ ]

**अष्टाचत्वारिंशतो ड्वुंश्च ॥११०॥** [ पा० ५।१।९४।४ ]

द्वितीयान्तादष्टाचत्वारिंशतश्चरतीत्यस्मिन्नर्थे ड्वुन् भवति, डिनिश्च। अष्टाचत्वारिंशत वर्षाणि व्रतं चरति अष्टाचत्वारिंशकः अष्टाचत्वारिंशी।

[ ड्वुंश्चाष्टाचत्वारिंशतो वर्षाणाम्। स० ५।१।९७ ]

**चातुर्मास्याद् यलोपश्च ॥१११॥**

चातुर्मास्याद् द्वितीयान्ताच्चरतीत्यस्मिन्नर्थे ड्वुन् भवति, डिनिश्च, यकारस्य च लोपः। चातुर्मास्य व्रत-चरति चातुर्मासकः चातुर्मासी।

[ चातुर्मास्यानां यलोपश्च। पा० ५।१।९४।५, चातुर्मास्येभ्यो यलोपश्च। स० ५।१।९८ ]

**तस्य दक्षिणा यज्ञेभ्यः ॥११२॥** [ स० ५।१।९९ ]

षष्ठ्यन्तेभ्यो यज्ञवाचिभ्यो दक्षिणायामर्थे ठञ् भवति। अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी। वाजपेयिकी।

[ तस्य च दक्षिणा यज्ञाख्येभ्यः। पा० ५।१।९५ ]

**तत्र दीयते ॥११३॥** [ स० ५।१।१०० ]

तत्रेति सप्तम्यन्तेभ्यो यज्ञवाचिभ्यो दीयत इत्यस्मिन्नर्थे ठञ् भवति। अग्निष्टोमे दीयते आग्निष्टोमिकः। वाजपेयिकः। राजसूयिकः।

[ तत्र च दीयते कार्यं भववत्। पा० ५।१।९६ ]

**कालात् कार्यं च भववत् ॥११४॥** [ स० ५।१।१०१ ]

कालवाचिभ्यः सप्तम्यन्तेभ्यः कार्यं दीयत इत्यनयोरर्थयोर्भव इव ठञादयो भवन्ति। मासे कार्यं दीयते वा मासिकम्। वासन्तम्*। प्रावृषेण्यम्। वार्षिकम्। हैमन्तम्, हैमनम्। सायन्तनम्।

[ योगविभागोत्तरकालमिदं पठितव्यम्। तस्य दक्षिणा यज्ञाख्येभ्यः [ ९५ ] तत्र च दीयते। ततः कार्यं भववत् कालादिति। ५।१।९६ भाष्यम्। ]

**व्युष्टादिभ्योऽण् ॥११५॥** [ पा० ५।१।९७ ]

व्युष्टादिभ्यः सप्तम्यन्तेभ्यः कार्यं दीयत इत्यनयोरर्थयोरण् भवति। व्युष्टे कार्यं दीयते वा वैयुष्टम्। नैत्यम्॥ व्युष्ट। नित्य। निष्क्रमण। प्रवेशन। तीर्थ। संग्राम। सङ्घात। अग्निपद। पीलुमूल†। आकृतिगणश्चायम्।

[ व्युष्ट-नित्य-निष्क्रमण-प्रवेशन-तीर्थ-संग्राम-सङ्घाता-ऽग्निपद-पीलुमूलादिभ्योऽण्। स० ५।१।१०२ ]

**यथाकथाचाण् णः ॥११६॥** [ स० ५।१।१०३ ]

---

*Ms has वासन्तिकम् which is found in the printed Kāś. also. But, as the Nyāsa shows, the correct form is वासन्तम्.

†पीलु। मूल। Ms.

यथाकथाचशब्दात् कार्यं दीयत इत्यनयोरर्थयोर्णो भवति। यथाकथाच कार्यं दीयते वा याथाकथाच कार्यम्, याथाकथाचा दक्षिणा।

[तेन यथाकथाचहस्ताभ्यां णयतौ। पा० ५।१।९८]

**तेन हस्ताद् यत्** ॥११७॥ [सं० ५।१।१०४]

तृतीयान्ताद्धस्तात् कार्यं दीयत इत्यनयोरर्थयोर्यद् भवति। हस्तेन कार्यं दीयते वा हस्त्यम्।

[तेन यथाकथाचहस्ताभ्यां णयतौ। पा० ५।१।९८]

**शोभते** ॥११८॥ [स० ५।१।१०५]

तृतीयान्ताच्छोभत इत्यस्मिन्नर्थे ठञ् भवति। कर्णवेष्टकाभ्या शोभते कार्णवेष्टकिक मुखम्। वास्त्रयुगिकं शरीरम्।

[सम्पादिनि। पा० ५।१।९९, जै० ३।४।११५, शा० ३।२।९८। शोभमाने। है० ६।४।१०२]

**कर्मवेशाद् यत्** ॥११९॥

कर्मवेशाभ्या तृतीयान्ताभ्या शोभत इत्यस्मिन्नर्थे यद् भवति। कर्मण्यं शौर्यम्। वेश्यो नट·।

[कर्मवेषाद्यत्। पा० ५।१।१००। कर्मवेशाभ्यां यत्। स० ५।१।१०६, वेषोऽत्र नेपथ्यवाची मूर्धन्यषकारः। सं० वृ०। It is the practice in Bengal to spell वेष with the palatal sibilant ]

**तस्मै प्रभवति सन्तापादिभ्यः** ॥१२०॥ [पा०५।१।१०१]

चतुर्थ्यन्तेभ्य· सन्तापादिभ्य प्रभवतीत्यस्मिन्नर्थे ठञ् भवति। सन्तापाय प्रभवति सान्तापिकः। सान्नाहिकः॥ सन्ताप। सन्नाह। संग्राम। संयोग। सम्पराय। संवेश। निर्घोष। निसर्ग। विसर्ग। उपसर्ग। प्रवास। उपवास। सङ्घात। सम्पाद। सक्तु। मांसौदनाद् विगृहीतादपि।

[तस्मै प्रभवति समस्ताप-नाह-ग्राम-योग-वेश-पेष-घात-पराय-मोदनेभ्यः। निरः पेषघोषाभ्याम्। निव्युपेभ्य· सर्गात्। प्रोपाभ्यां वासात्। सक्तुमांसौदनमांसौदने-भ्यश्च। स०५।१।१०७-१११। 'Kāś' and Bhoja read सम्मोदन for सम्पाद.]

**योगाद् यच्च** ॥१२१॥ [ पा०५।१।१०२, स०५।१।११२ ]

चतुर्थ्यन्ताद् योगात् प्रभवतीत्यस्मिन्नर्थे यद् भवति, ठञ् च। योगाय प्रभवति योग्यम्, यौगिकम्।

**कर्मण उकञ्** ॥१२२॥ [पा०५।१।१०३, स०५।१।११३ ]

कर्मणश्चतुर्थ्यन्तात् प्रभवतीत्यस्मिन्नर्थ उकञ् भवति। कार्मुकम्।

[This derivation does not apply to कार्मुक in the sense of a bow See Mañjusā Vol. VIII, No 4]

**सोऽस्य प्राप्तः समयात्** ॥१२३॥ [ स० ५।१।११४ ]

समयशब्दात् प्रथमान्तादस्येति षष्ठ्यर्थे ठञ् भवति, स चेत् प्राप्तो भवति। समय· प्राप्तोऽस्य सामयिक ।

[ समयस्तदस्य प्राप्तम्। पा० ५।१।१०४ ]

**ऋत्वादिभ्योऽण्** ॥१२४॥

ऋत्वादिभ्य प्रथमान्तेभ्योऽस्येति षष्ठ्यर्थेऽण् भवति प्राप्ताश्चेत्ते भवन्ति। ऋतु· प्राप्तोऽस्य आर्तवम्। औपवस्त्रम्। प्राशित्रम्।

[ ऋतोरण्। पा० ५।१।१०५, अण्प्रकरणेऽग्निपदादिभ्य उपसंख्यानम्। ५।१।९७।१। समयस्तदस्य प्राप्तमृतोरण्। अग्निपदादिभ्यश्चेति वक्तव्यम्। उपवस्ता प्राप्तोऽस्यौपवस्त्रम्। प्राशिता प्राप्तोऽस्य प्राशित्रम्। भाष्यम् ॥ तदस्य प्रकरण उपवस्त्रादिभ्य उपसख्यानम्। काशिका। ऋतूपवस्तृप्राशित्रादिभ्योऽण्। स०५।१।११५]

**कालाद्यत्** ॥१२५॥ [ पा०५।१।१०७, स०५।१।११६ ]

कालशब्दात् प्रथमान्तादस्येति षष्ठ्यर्थे यद् भवति, स चेत् प्राप्तो भवति। काल्यं हिमम्।

**प्रकृष्टः** ॥१२६॥

कालात् प्रथमान्तादस्येति षष्ठ्यर्थे ठञ् भवति, स चेत् प्रकृष्टो भवति। कालः[1] प्रकृष्टोऽस्य कालिकमृणम्।

[ प्रकृष्टे ठञ्। पा० ५।१।१०८, प्रकृष्टष्ठञ्। स० ५।१।११७। J, Śāk, Hc. and others have दीर्घं for प्रकृष्ट. [1]कालो विप्रकृष्ट Ms ]

**प्रयोजनम्** ॥१२७॥ [ पा०५।१।१०९, स०५।१।११८ ]

प्रथमान्तादस्येति षष्ठ्यर्थे ठञ् भवति, तच्चेत् प्रयोजनं भवति। इन्द्रमह. प्रयोजनमस्य ऐन्द्रमहिक ।

**एकागाराच्चौरे** ॥१२८॥ [ स० ५।१।११९ ]

एकागारात् तदस्य प्रयोजनमित्यस्मिन् विषये चौर एव ठञ् भवति। ऐकागारिकश्चौर. । चौर इति किम्? एकागारं प्रयोजनमस्य भिक्षो ।

[ ऐकागारिकट् चौरे। पा० ५।१।११३ ]

**आकालाद् ठंश्च** ॥१२९॥ [पा०५।१।११४।२,स०५।१।१२०]

आकालशब्दात् तदस्य प्रयोजनमित्यस्मिन् विषये ठन् भवति, ठञ् च। य एव तस्योत्पत्तिकाल स एव यावद् भवति। आकालिकोऽनध्यायः। आकालिका विद्युत्। आकालिकी।

[ आकालिकडाद्यन्तवचने। पा० ५।१।११४ ]

**चूडादिभ्योऽण्** ॥१३०॥

चूडादिभ्यस्तदस्य प्रयोजनमित्यस्मिन्नर्थेऽण् भवति। चूडा प्रयोजनमस्य चौडं श्राद्धम्।

[ अण्प्रकरणेऽग्निपदादिभ्य उपसंख्यानम्। ५।१।९७।१। प्रयोजन विशाखाषाढादण्मन्थदण्डयो । अग्निपदादिभ्यश्चेति वक्तव्यम्। चूडा प्रयोजनमस्य चौडम्। श्रद्धा प्रयोजनमस्य श्राद्धम्। भाष्यम्। चूडादिभ्य उपसंख्यानम्। काशिका। ५।१।११०। चूडाश्रद्धादिभ्योऽण्। स० ५।१।१२१ ]

**विशाखाषाढान्मन्थदण्डयोः** ॥१३१॥

विशाखाषाढाभ्या तदस्य प्रयोजनमित्यस्मिन् विषये मन्थदण्डयोरभिधेययोरण् भवति। वैशाखो मन्थः। आषाढो दण्डः। मन्थदण्डयोरिति किम्? वैशाखिकः आषाढिक. ।

[ विशाखाषाढादण् मन्थदण्डयो । पा० ५।१।११०, विशाखाषाढाभ्यां मन्थदण्डयो । स० ५।१।१२२ ]

**उत्थापनादिभ्यश्छः ॥१३२॥**

उत्थापनादिभ्यस्तदस्य प्रयोजनमित्यस्मिन् विषये छो भवति। उत्थापनीयम्। उपस्थापनीयम्॥ उत्थापन। उपस्थापन। अनुप्रवचन। प्रवेशन। संवेशन। अनुवेशन। अनुवचन। अनुवासन। अनुरोहण। आरोहण। आरम्भण। विशिपूरिपदिरुहिसमापिप्रकृतेरनात् सपूर्वपदात्। गृहप्रवेशनीयम् प्रपापूरणीयम् अश्वप्रपदनीयम् प्रासादारोहणीयम् व्याकरणसमापनीयम्।

[ अनुप्रवचनादिभ्यश्छः। पा० ५।१।१११, छप्रकरणे विशिपूरिपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसंख्यानम्। ५।१।१११।१, समापनात्सपूर्वपदात्। पा० ५।१।११२। उदुपाभ्यां स्थापेरनान्ताच्छ.। अनोर्वचि-प्रवचि-वासि-विशिभ्य.। रुहेः प्राङ्भ्या च। समाङो विशिरभिभ्याम्। विशिपूरिपदिरुहिसमापिभ्य सपूर्वपदेभ्यः। स० ५।१।१२३-१२७। As उत्थापन was a more common word than अनुप्रवचन at the time of Candra, he changed Pāṇini's अनुप्रवचनादि to उत्थापनादि Śāk iii 2 121, Hc vi 4 121 follow Candra Printed J iii 4 128 has अनुपानादि. ]

**स्वर्गादिभ्यो यत् ॥१३३॥** [ पा० ५।१।१११।२ ]

स्वर्गादिभ्यस्तदस्य प्रयोजनमित्यस्मिन्नर्थे यद् भवति। स्वर्ग्यम्। धन्यम्। यशस्यम्। आयुष्यम्। काम्यम्।

[ स्वर्गधनायुर्यश.कामेभ्यो यत्। स० ५।१।१२८ ]

**पुण्याहवाचनादिभ्यो लुक् ॥ १३४ ॥** [पा०५।१।१११।३]

पुण्याहवाचनादिभ्यस्तदस्य प्रयोजनमित्यस्मिन् विषये ठञो लुग् भवति। पुण्याहवाचनम्। स्वस्तिवाचनम्। शान्तिवाचनम्।

[ पुण्याहस्वस्तिशान्तिभ्यो वाचनाल्लुक्। स० ५।१।१२९ ]

**इवे वतिः ॥१३५॥**

इवार्थे वतिर्भवति। राजेव वर्तते राजवत्। राज्ञेव व्यवहर्तव्यमनेन राजवत्। ब्राह्मणस्येव वृत्तमस्य ब्राह्मणवत्। मथुरायामिव पाटलिपुत्रे प्रासादाः मथुरावत्। देवमिव भवन्तं पश्यामि देववत्। पर्वताद् इवासनादवरोहति पर्वतवत्। ब्राह्मणायेव देवदत्ताय ददाति ब्राह्मणवत्। अत्रापि तदर्हम्

[पा० ५।१।११७] इत्येतेनेष्यत एव—देवमर्हति यद्दर्शनम्, पर्वतमर्हति यदवरोहणम्, ब्राह्मणमर्हति यद्दानमिति। यद्येवमिवार्थोऽस्त्येवेत्यनेनैव सिद्धः[1]। गुणसाम्येऽपि। देवदत्त इव स्थूलः देवदत्तवत् स्थूलः। गुणादपि। अन्धवत्, जडवत्। द्रव्यसाम्येऽपि। देवदत्तवद् गोमान्। अत्रापि वतिर्भवति। सद्भावात्[2] क्रियासाम्यमस्तीति सर्वत्र भवितव्यम्।

[तेन तुल्यं क्रिया चेद्वति। तत्र तस्येव। तदर्हम्। पा० ५।१।११५-११७, स० ५।१।१३०-१३२। उपमाने वति। कातन्त्रम्। Candra's rule is of wider scope than the three rules of Pānini [1]सिद्धो गुणः L. [2]अत्रापि वा भवति सम्भवात् L ]

**तस्य भावस्त्वतलौ**॥१३६॥ [पा०५।१।११९,स०५।१।१३३]

षष्ठयन्ताद् भावे त्वतलौ भवतः। कः पुनर्भावः? भवतोऽस्मादभिधान-प्रत्ययाविति भावः। शब्दस्य प्रवृत्तिनिमित्तम्। शुक्लस्य पटस्य भावः शुक्लत्वम् शुक्लतेति गुणो भावः। शुक्लस्य गुणस्य भावः शुक्लत्वं शुक्लतेति शुक्लगुण-जातिः। गोत्वम् गोतेति गोजातिः। पाचकत्वम् दण्डित्वम् विषाणित्वम् राजपुरुषत्वमिति क्रियादिसम्बन्धित्वम्। देवदत्तत्वम् चन्द्रत्वम् सूर्यत्वम् इति तदवस्थाविशेषसामान्यम्। आकाशत्वम् अभावत्वम् इत्युपचरितभेद-सामान्यम्।

**नञोऽनन्यार्थे** ॥१३७॥

नञः परादनन्यपदार्थे वर्तमानाद् भावे त्वतलावेव भवतः। अमृदुत्वम् अमृदुता। नञ इति किम्। मार्दवम्। अनन्यार्थ इति किम्? नास्य पटुरस्ति अपटुः, अपटोर्भावः आपटवम्।

[आ च त्वात्। न नञ्पूर्वात् तत्पुरुषादचतुरसङ्गतलवणवटबुधकतर-सलसेभ्यः। पा० ५।१।१२०-१२१। नञादेस्तत्पुरुषात्। स० ५।१।१३४ ]

**चतुरसङ्गतलवणवडबुधकतरसलसाद् वा** ॥१३८॥ [०लसेभ्यो वा। स० ५।१।१३५]

चतुरादिभ्यो नञ्पूर्वेभ्यो भावे त्वतलौ वा भवतः। अचतुरत्वम् अचतुरता आचतुर्यम्। असङ्गतत्वम् असङ्गतता आसङ्गत्यम्। अलवणत्वम्

अलवणता आलवण्यम् । अवडत्वम् अवडता आवड्यम् । अबुधत्वम् अबुधता आबुध्यम् । अकनत्वम् अकनता आकन्यम् । अरसत्वम् अरसता आरस्यम् । अलसत्वम् अलसता आलस्यम् ।

[ See under 137 ]

**पृथ्वादिभ्य इमनिच् ॥१३९॥**

पृथ्वादिभ्यो भाव इमनिज् भवति । प्रथिमा पार्थवम् पृथुत्वम् पृथुता । म्रदिमा मार्दवम् मृदुत्वम् मृदुता ॥ पृथु । मृदु । महत् । पटु । तनु । लघु । बहु । साधु । आशु । उरु । गुरु । बहुल । खण्ड । चण्ड । अकिञ्चन । बाल । होड । पाक । वत्स । मन्द । स्वादु । ऋजु । ह्रस्व । दीर्घ । क्षुद्र । क्षिप्र । प्रिय ।

[ पृथ्वादिभ्य इमनिज् वा । पा० ५।१।१२२ । पृथु-मृदु-पटु-पाण्डु-खण्ड-चण्ड-स्वादु-साधु-बहु-महद्-अणु-तनूरु-गुरु-लघुभ्य इमनिच् । होड-वत्स-पाका-ऽकिञ्चनर्जु-चार्वाशु-वक्र-वृद्ध-काल-तृप्र-क्षिप्र-क्षुद्र-ह्रस्व-प्रियेभ्यश्च । स० ५।१।१३६-१३७ Ms has अनु for तनु. L corrects it to अणु, but Kāś has तनु and not अणु Śāk and others have both तनु and अणु ]

**वर्णदृढादिभ्यः ष्यञ् च ॥१४०॥** [ पा० ५।१।१२३ ]

वर्णविशेषवाचिभ्यो दृढादिभ्यश्च भावे ष्यञ् भवति, इमनिज् वा । शौक्ल्यम् शुक्लिमा शुक्लत्वम् शुक्लता । दार्ढ्यम् द्रढिमा दृढत्वं दृढता । षकारो ङीपर्थः । औचिती । याथाकामी ॥ दृढ । परिवृढ । वृष । भृश । कृश । चुक्र । आम्र । आम्ल । कृष्ण । लवण । शीत । उष्ण । जड । बधिर । मूक । मूर्ख । पण्डित । मधुर ।

[ वर्ण-दृढ-परिवृढ-कृश-भृशा-ऽम्ल-चुक्र-लवण-मधुर-शीतोष्णजडेभ्य ष्यञ् च । बालतरुणमन्दमूकमूलकालमूर्खपण्डितस्थिरबहुलबधिरदीर्घेभ्यश्च । वेर्यातलात-शारदेभ्य । समश्च मतिमनोभ्याम् । स० ५।१।१३८-१४१ । वृष is read in the पृथ्वादिगण by most grammarians Could it have been वृद्ध which is found in Sam ? अम्ल is found for आम्ल in Sam etc L emends कृष्ण to तृष्णा found in Śāk and Hc , but तृष्णा itself is an abstract noun ]

**गुणवचनब्राह्मणादिभ्यः कर्मणि च** ॥१४१॥ [पा०५।१।१२४]

गुणमुक्तवद्भयो ब्राह्मणादिभ्यश्च कर्मणि भावे च ष्यञ् वा भवति। जडस्य कर्म भावो वा जाड्यम्, जडिमा, जडत्वम्, जडता। ब्राह्मण्यम् ब्राह्मणत्वम् ब्राह्मणता। माणव्यम् माणवत्वम् माणवता॥ ब्राह्मण। माणव। वाडव। अर्हतो नुम् च। आर्हन्त्यम्। चोर। धूर्त। दूत। आराध्य। उपराध्य। एकभाव। द्विभाव। त्रिभाव। अन्यभाव। क्षेत्रज्ञ। संवादिन्। सवेशिन्। सम्भाषिन्। बहुभाषिन्। शीर्षघातिन्। समस्थ। विषमस्थ। परमस्थ। मध्यस्थ। अनीश्वर। कुशल। चपल। निपुण। पण्डित। निष्कुल। पिशुन। बालिश। अलस। दुष्पुरुष। राजन्। वणिज्। पुरोहित। खण्डिक। पत्यन्त। राजपुरुप। गणपति। अधिपति। गडुल। दायाद। विशस्ति। वियात। चातुर्वर्ण्यादीना स्वार्थे। चत्वार एव वर्णा-श्चातुर्वर्ण्यम् चातुर्वैद्यम् चातुराश्रम्यम्। त्रैलोक्यम्। सर्ववेदस्योभयपदादादैच्च। सार्ववैद्यम्। आकृतिगणोऽयम्।

[ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसंख्यानम्। अर्हतो नुम् च। पा०५।१।१२४।१-२। गुणवचनेभ्योऽसमासकृत्तद्धिताव्ययसर्वनामसंख्याभ्य कर्मणि च। ब्राह्मण-माणव-बाडव-धूर्त-चोर-चपल-कुशल-निपुण-सुहित-पिशुन-बालिशालसेभ्य। गडुल-दीन-दायाद-विदग्धोचित-समग्र-शील-तत्परेदम्पर-यथायथ-यथापर-पुन पुनर्-अभीक्ष्ण-तरतम-प्रकाम-यथाकामेभ्यश्च। एकद्वित्रिस्वान्येभ्यो भावात्। तत्-स्व-सम-विषम-परम-मध्येभ्य स्थात्। निर्दुर्भ्यां कुलात्। दुष्-का-राजभ्य. पुरुषात्। व्याङुपेभ्यो रावयात्। गणाधिभ्यां पत्यु। वे शायशस्तिभ्याम्। स्वधिस्वर्जनमहद्युवभ्यो राज्ञ.। सम्राज। अर्हतो नुम् च। समो वदिविशिभ्यां णिन। बहोश्च भाषः। शीर्षनिविभ्यो हन। नञ क्षेत्रज्ञेश्वर-विदूर-पिशुन-नृशंस-यथातथ-यथापुरेभ्यः। सधर्मा-ऽनुकूल-परिमण्डल-विश्वरूपर्त्विग्-उदासीनेश्वर-प्रतिभू-साक्षि-मानुषा-ऽऽस्तिक-नास्तिकेतिह-युगपत्-पूर्वापरोत्तराधरादिभ्यश्च। चातुर्वर्ण्य-चातुराश्रम्य-चातुर्वैद्य-त्रैलोक्य-त्रैसन्ध्य-त्रैकाल्य-त्रैशब्द्य-त्रैस्वर्य-षाड्गुण्य-सैन्य-सान्निध्य-सामीप्यौ-पम्य-सौख्य-सार्ववैद्यादीनां स्वार्थे। स० ५।१।१४२-१६०। See under 144]

**सखिदूतवणिग्भ्यो यः** ॥१४२॥ [स० ५।२।१६२]

सख्यादिभ्यो भावे कर्मणि च यो भवति वा। सख्यम् सखित्वम्

सखिता। दूत्यम् दूतत्वम् दूतता दौत्यम्। वणिज्या वणिक्त्वम् वणिक्ता वाणिज्यम्।

[सख्युर्यः। पा० ५।१।१२६। दूतवणिग्भ्यां चेति वक्तव्यम्। काशिका। सखिवणिग्दूताद् य। जैनेन्द्र ५।१।१२६। दौत्यम् is not found in the *Kāśikā* nor in the *Amarkośa* ]

स्तेयम् ॥१४३॥

स्तेनस्य भावे कर्मणि च स्तेयमिति निपात्यते वा। स्तेयम् स्तैन्यम् स्तेनत्वम् स्तेनता।

[स्तेनाद्यन्नलोपश्च। पा० ५।१।१२५, स० ५।१।१६३। स्तेनादिति केचिद् योगविभाग कुर्वन्ति। स्तेनात् ष्यञ् भवति। स्तैन्यम्। ततो यलोपश्च। स्तेयम्। काशिका। पक्षे स्तेनत्व स्तेनतेत्याद्यपि भवति। हृदयहारिणी। स्तैन्य occurring in the epics and Purānas, is not accepted by orthodox grammarians Jainendra does not recognise स्तैन्य. स्तैन्यशब्दो धर्मदासवर्धमानादिभिरिष्टस्तदर्थं ब्राह्मणादिषु स्तेनशब्दोऽपि पठनीय। गोयीचन्द्रः ३।८८८. Bhoja has the rule दूतादिभ्य ष्यञ् च v 1 164 which makes provision for दौत्य, वाणिज्य and स्तैन्य.]

कपिज्ञात्योर्ढक् ॥१४४॥ [पा० ५।१।१२७]

आभ्या भावे कर्मणि च वा ढग् भवति। कापेयम् कपित्वम्। कपिता। ज्ञातेयम् ज्ञातित्वम् ज्ञातिता॥ वानस्पत्यम् पौरोहित्यमित्यादि ब्राह्मणादित्वात् [१४१] ष्यञैव सिद्धम्।

[कपिज्ञातिभ्या ढक्। स० ५।१।१६५। पत्यन्तपुरोहितादिभ्यो यक्। पा० ५।१।१२८, पत्यन्त-पुरोहित-वर्षिक-ग्रामिक-चर्मिक-धर्मिक-सिलिक-सूचिक-सूचक-खण्डिक-दण्डिका-ऽजनिका-ऽञ्जलिक-प्रचिक-च्छत्रक-राजन्-सरत्क-सारथिभ्यो यक्। स० ५।१।१६१]

प्राणिजातिवयोऽर्थोद्गात्रादिभ्योऽञ् ॥१४५॥

प्राणिजातिवाचिभ्यो वयोवचनादुद्गात्रादिभ्यश्च भावकर्मणोरञ् वा भवति। आश्वम् अश्वत्वम् अश्वता। कौमारम् कुमारत्वम् कुमारता। औद्गात्रम् उद्गातृत्वम् उद्गातृता। औन्नेत्रम उन्नेतृत्वम् उन्नेतृता॥ उद्गातृ।

उन्नेतृ । प्रतिहर्तृ । प्रशास्तृ । होतृ । कर्तृ । भर्तृ । रथगणक । पत्तिगणक । सुष्ठु । दुष्ठु । अध्वर्यु । वधू । सुभग ।

[ प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् । पा० ५।१।१२९ । प्राणिजाति-वयोऽर्थोद्गात्रुन्नेतृ-प्रतिहर्तृ-कर्तृ-होतृ-प्रशास्त्र-ध्वर्यु-वधू-सुष्ठु-दुष्ठु-रथगणक-पत्तिगणकेभ्यो-ऽञ् । स० ५।१।१६६ ]

**हायनान्तयुवादिभ्योऽण् ॥१४६॥** [ पा० ५।१।१३० ]

हायनान्ताद् युवादिभ्यश्च भावकर्मणोरण् वा भवति । द्वैहायनम् द्विहायनत्वम् द्विहायनता । यौवनम् युवत्वम् युवता । स्थाविरम् स्थविरत्वम् स्थविरता ॥ युवन् । स्थविर । होतृ । यजमान । पुरुषादसमासे । भ्रातृ । कुतुक । कन्दुक । श्रवण । कमण्डलु । कुस्त्री । सुस्त्री । दुःस्त्री । सुहृदय । सुहृद् । दुर्हृद् । सुभ्रातृ । दुर्भ्रातृ । वृषल । परिव्राजक । ब्रह्मचारिन् । अनृशंस । हृदयादसमासे । चपल । कुशल । निपुण । पिशुन । कुतूहल । क्षेत्रज्ञ । श्रोत्रियस्य यलोपश्च । श्रौत्रम् । मनोज्ञादिपाठात् [ १४९ ] श्रौत्रियकम् ।

[ हायनान्त-युव-स्थविर-भ्रातृ-यजमान-मिथुन-पिशुन-निपुण-कुशल-चपल-कुलीना-ऽनृशंसेभ्योऽण् । सह.-श्रवण-कुतुक-कुतूहल-वृषल-कण्डुक-कमण्डलु-कितव-पोतु-क्षेत्रज्ञ-परिव्राजक-सब्रह्मचारिभ्यश्च । सुदुर्भ्यां हृद. । भ्रातुश्च । कोश्च स्त्रियाः । पुरुष-हृदयाभ्यामसमासे । श्रोत्रियाद् यलोपश्च । स० ५।१।१६७-७३ ]

**लघोरिकोऽकवेः ॥१४७॥**

लघो. परो य इक् तदन्तादकवेर्भावकर्मणोरण् वा भवति । शौचम् शुचित्वम् शुचिता । पार्थवम् पृथुत्वम् पृथुता । लघोरिति किम् ? पाण्डुत्वम् । इक इति किम् ? रसत्वम् । अकवेरिति किम् ? काव्यम् । ब्राह्मणादित्वात् [ १४१ ] ष्यञ् ।

[ इगन्ताच्च लघुपूर्वात् । पा० ५।१।१३१ । कथं काव्यमिति ? ब्राह्मणादिषु कविशब्दो द्रष्टव्य. । काशिका । इको लघुपूर्वादकवे. । स० ५।१।१७४. J does not mention अकवे ]

**योपान्ताद् गुरूपोत्तमादसुप्रख्याद् वुञ्** ॥१४८॥ [योपधाद्० ।
स० ५।१।१७५]

यकारोपान्ताद् गुरूपोत्तमात् सुप्रख्यवर्जिताद् भावकर्मणोर्वुञ् वा भवति। रामणीयकम् रमणीयत्वम् रमणीयता। साहायकम् सहायत्वम् सहायता। साहाय्यम्। योपान्तादिति किम्? वितानत्वम्। गुरूपोत्तमादिति किम्? क्षत्रियत्वम्। असुप्रख्यादिति किम्? सुप्रख्यत्वम् सौप्रख्यम्।

[Goyīcandra reads गुरूपान्ताद् for गुरूपोत्तमाद् under Sam taddhita 896 योपधाद् गुरूपोत्तमाद् वुञ्। पा० ५।१।१३२, सहायाद्वेति वक्तव्यम्। काशिका। सहायात् ष्यञ् च। स० ५।१।१७६]

**चार्थसमासमनोज्ञादिभ्यः** ॥१४९॥

चार्थे यः समासस्ततो मनोज्ञादिभ्यश्च भावकर्मणोर्वुञ् वा भवति। शैष्योपाध्यायिका शिष्योपाध्यायत्वम् शिष्योपाध्यायता। मानोज्ञकम् मनोज्ञत्वम् मनोज्ञता। प्रैयरूपकम् प्रियरूपत्वम् प्रियरूपता॥ मनोज्ञ। प्रियरूप। अभिरूप। अहोरूप। कल्याण। मेधाविन्। आढ्य। कुलपुत्र। छान्दस। छात्र। श्रोत्रिय। चोर। धूर्त। विश्वदेव। युवन्। ग्रामपुत्र। ग्रामषण्ड। ग्रामकुमार। अमुष्यपुत्र। अमुष्यकुल। शरपत्र।

[द्वन्द्वमनोज्ञादिभ्यश्च। पा० ५।१।१३३। द्वन्द्व-मनोज्ञ-प्रियरूप-कल्याणाऽऽढ्य-मेधावि-च्छात्र-च्छान्दस-श्रोत्रिय-चोर-धूर्त-विश्वदेव-युव-वृद्धाऽ-ऽमुष्यकुलाऽवश्य-बहुलेभ्यः। कुलामुष्यसरसेभ्यः पुत्रात्। ग्रामात् कुमारषण्डाभ्यां च। स० ५।१।१७७-१७९। अहोरूप is found only in Candravṛtti].

**गोत्रचरणाच्छ्लाघाधिक्षेपावगतेषु** ॥१५०॥

गोत्रवाचिनश्चरणवाचिनश्च भावकर्मणोः श्लाघादिविषये वुञ् वा भवति। गार्गिकया श्लाघते, गार्ग्यत्वेन श्लाघते। काठिकया श्लाघते, कठत्वेन श्लाघते। गार्गिकयात्याकुरुते, गार्ग्यत्वेनात्याकुरुते। काठिकयात्याकुरुते, कठत्वेनात्याकुरुते। गार्गिकाम् गार्ग्यत्वम् अवगतवान् प्राप्तवान् वा। काठिकाम् कठत्वम् अवगतवान् प्राप्तवान् वा। श्लाघादिष्विति किम्? गार्ग्यत्वम् कठत्वम्।

[गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु। पा० ५।१।१३४, गोत्रचरणाच्छ्लाघात्याकारप्राप्त्यवगमेषु। स० ५।१।१८० It will be noticed that Candra substitutes अधिक्षेप for Pāṇini's अत्याकार and अवगत for तदवेत. ]

ऋत्विग्भ्यश्छः ॥१५१॥

ऋत्विग्विशेषवाचिभ्यो भावकर्मणोश्छो वा भवति। अच्छावाकीयम् अच्छावाकत्वम्। मित्रावरुणीयम् मित्रावरुणत्वम्।

[होत्राभ्यश्छ। पा० ५।१।१३५। मैत्रावरुणाग्नीध्राच्छावाकनेष्टृपोतृब्राह्मणाच्छंसिभ्यश्छ। स० ५।१।१८१ ]

ब्रह्मणस्त्वः ॥ १५२ ॥ [पा०५।१।१३६, स०५।१।१८२ ]

ऋत्विग्वाचिनो ब्रह्मणस्त्व एव भवति। ब्रह्मत्वम्। ब्राह्मणपर्यायस्य तु [1]ब्रह्मतेत्यपि भवति।

[ [1]ब्रह्मत्वम् ब्रह्मतेत्यपि L ]

इति चान्द्रे व्याकरणे चतुर्थस्याध्यायस्य प्रथम पाद समाप्तः।

धान्येभ्यः क्षेत्रे खञ् ॥ १ ॥

धान्येभ्य· षष्ठ्यन्तेभ्य. क्षेत्रे खञ् भवति। कुलत्थाना क्षेत्रम् कौलत्थीनम्। धान्येभ्य इति किम्? तृणाना क्षेत्रम्। क्षेत्र इति किम्? मुद्गानां कुसूल।

[धान्याना भवने क्षेत्रे खञ्। पा० ५।२।१, धान्येभ्यो भवने क्षेत्रे खञ्। स० ५।२।१ ]

व्रीहिशालेर्ढक् ॥ २ ॥

व्रीहिशालिभ्या षष्ठ्यन्ताभ्या क्षेत्रे ढग् भवति। व्रैहेयम्। शालेयम्।

[व्रीहिशाल्योर्ढक्। पा० ५।२।२, व्रीहिशालिभ्यां ढक्। स० ५।२।२ ]

**यवयवकषष्टिकाद् यत्** ॥ ३ ॥ [ पा० ५।२।३ ]

यवादिभ्य. षष्ठ्यन्तेभ्यः क्षेत्रे यद् भवति। यव्यम्। यवक्यम्। षष्टिक्यम्।

[ यवयवकषष्टिकेभ्यो यत्। स० ५।२।३ ]

**वा तिलमाषोमाभङ्गाणुभ्यः** ॥ ४ ॥

तिलादिभ्यः क्षेत्रे यद् वा भवति। तिल्यम् तैलीनम्। माष्यम् माषीणम्। उम्यम् औमीनम्। भङ्ग्यम् भाङ्गीनम्। अणव्यम् आणवीनम्।

[ विभाषा तिलमाषोमाभङ्गाणुभ्य᳚। पा० ५।२।४, तिलमाषोमाभङ्गाणुभ्यो वा। स० ५।२।४ ]

**अश्वादेकाहगमे खञ्** ॥ ५ ॥ [ स० ५।२।५ ]

अश्वात् षष्ठ्यन्तादेकाहेन गम्यमाने खञ् भवति। आश्वीनोऽध्वा।

[ अश्वस्यैकाहगमः। पा० ५।२।१९ ]

**गोष्ठाद् भूते** ॥ ६ ॥

गावस्तिष्ठन्त्यस्मिन्तिति गोष्ठ *, तस्माद् भूते वर्तमानात् स्वार्थे खञ् भवति। गौष्ठीनः। भूत इति किम्? गोष्ठो वर्तते।

[ गोष्ठात् खञ् भूतपूर्वे। पा० ५।२।१८, गोष्ठाद् भूतपूर्वे। स० ५।२।६ ]

**साप्तपदीनं सख्ये** ॥ ७ ॥ [ ०सख्यम्। पा० ५।२।२२ ]

साप्तपदीनमिति सख्ये गम्यमाने निपात्यते। सप्तभिः पदैरवाप्यते साप्तपदीनं सख्यम्। साप्तपदीन᳚ सखा। साप्तपदीनं मित्रम्।

[ सप्तपदात् तेनावाप्यं सख्ये। स० ५।२।७ ]

**सर्वचर्मणा कृतः** ॥ ८ ॥

सर्वचर्मशब्दात् तृतीयान्तात् कृतेऽर्थे खञ् भवति। सार्वचर्मीणः। अन्ये त्वसमर्थसमासमिच्छन्ति—सर्वश्चर्मणा कृतः सार्वचर्मीण इति।

---

*Bhatti uses the masculine form in II 14.

[ सर्वचर्मण· कृत खखञौ। पा० ५।२।५, सर्वचर्मणः कृतः खखञ। स० ५।२।८। अन्ये appears to refer to Jayāditya, the author of *Kāśikā* I–v ]

**खः ॥ ९ ॥**

सर्वचर्मणस्तृतीयान्तात् कृतेऽर्थे खो भवति। सर्वचर्मीणः।

[ See under 8 ]

**यथामुखसम्मुखं दृश्यतेऽस्मिन् ॥ १० ॥**

यथामुखसम्मुखशब्दाभ्या प्रथमान्ताभ्या दृश्यतेऽस्मिन्नित्यस्मिन्नर्थे खो भवति। यथामुखं दृश्यतेऽस्मिन्निति यथामुखीनः आदर्शादिः[1]। सम्मुखीनः। यथामुखमिति सादृश्येऽपि निपातनात् समासः, समं मुखं सम्मुखम् इति च सम्यग् वा मुखं सम्मुखम्।

[ यथामुखसम्मुखस्य दर्शन. ख.। पा० ५।२।६, यथामुखसम्मुखाभ्यां तद् दृश्यतेऽस्मिन्। स० ५।२।९। [1]आदर्शादि L. ]

**सर्वादिपथ्यङ्गकर्मपत्त्रपात्रं व्याप्नोति ॥ ११ ॥** [स०५।२।१०]

पथिप्रभृतिभ्यो द्वितीयान्तेभ्य. सर्वादिभ्यो व्याप्नोतीत्यस्मिन्नर्थे खो भवति। सर्वपथं व्याप्नोति सर्वपथीनः। सर्वाङ्गीणः। सर्वकर्मीणः। सर्वपत्त्रीणः। सर्वपात्रीणः।

[ तत्सर्वादे. पथ्यङ्गकर्मपत्त्रपात्रं व्याप्नोति। पा० ५।२।७ ]

**आप्रपदं प्राप्नोति ॥ १२ ॥** [ पा० ५।२।८, स० ५।२।११ ]

पदाग्रं प्रपदं तद् यावदाप्रपदम्। ततो द्वितीयान्तात् प्राप्नोतीत्यस्मिन्नर्थे खो भवति। आप्रपदीनः पटः।

**अनुपदं बद्धा ॥ १३ ॥** [ स० ५।२।१२ ]

अनुपदशब्दाद् द्वितीयान्ताद् बद्धाया खो भवति। अनुपदीना उपानत्।

[ १३-१५। अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु। पा० ५।२।९ ]

**अयानयं नेयः** ॥ १४ ॥ [ स० ५।२।१३ ]

अय प्रदक्षिणम्, अनयः प्रसव्यम्। तदुभयम् अयानयम्। ततो द्वितीयान्तान्नेयेऽर्थे खो भवति। अयानयीनः शार ।

**सर्वान्नमत्ति** ॥ १५ ॥ [ स० ५।२।१४ ]

सर्वान्नाद् द्वितीयान्तादत्तीत्यस्मिन्नर्थे खो भवति। सर्वान्न भक्षयति सर्वान्नीनो ब्राह्मणः ।

**परोऽवरपरम्परपुत्रपौत्रमनुभवति** ॥ १६ ॥ [ पा० ५।२।१०, स० ५।२।१५ ]

परोऽवरादिभ्यो द्वितीयान्तेभ्योऽनुभवतीत्यस्मिन्नर्थे खो भवति। परं चावरं च परोऽवरम्। निपातनादुत्वम्। परं च परतरं च परम्परम्। निपातनान्नुम्। परोऽवरीण । परम्परीण । पुत्रपौत्रीणः ।

**पारावारावारपारात्यन्तानुकामं गामी** ॥ १७ ॥

पारावारादिभ्यो द्वितीयन्तेभ्यो यथायोगं समस्तासमस्तेभ्यो गामीत्यस्मिन्नर्थे खो भवति। पारावारं गामी पारावारीण । अवारपारीणः। अवारीण । पारीण. । अत्यन्तीन· । अनुकामीन ।

**[ अवारपारात्यन्तानुकामं गामी। पा० ५।२।११। विगृहीताच्च। विपरीतादपीष्यते। काशिका। अत्यन्तानुकामं गामी। पारावारं व्यस्तविपर्यस्तं च। स० ५।२।१६-१७ ]**

**अनुग्वलम्** ॥ १८ ॥ [ स० ५।२।१८ ]

अनुगुशब्दाद् द्वितीयान्ताद् अलंगामीत्यस्मिन्नर्थे खो भवति। अनुगवीन· ।

**[ अनुग्वलंगामी। पा० ५।२।१५ ]**

**अध्वानं यच्च** ॥ १९ ॥ [ स० ५।२।१९ ]

अध्वन्-शब्दाद् द्वितीयान्ताद् अलंगामीत्यस्मिन्नर्थे खो भवति यच्च। अध्वनीन । अध्वन्यः ।

**[ अध्वनो यत्खौ। पा० ५।२।१६ ]**·

**अभ्यमित्रं छश्च ॥ २० ॥**

अभ्यमित्रशब्दाद् द्वितीयान्ताद् अलंगामीत्यस्मिन्नर्थे खो भवति, छश्च, यच्च । अभ्यमित्रीणः । अभ्यमित्रीयः । अभ्यमित्र्यः ।

[ अभ्यमित्राच्छ च । पा० ५।२।१७, सं० ५।२।२० ]

**समांसमीनाद्यश्वीनागवीनाः ॥ २१ ॥**

एते शब्दाः खान्ता निपात्यन्ते । समाया समाया विजायते समासमीना गौः । अद्य श्वो वा विजायते भवति वा अद्यश्वीना । आ गोः प्रतिपादनाद् [1]अर्पणात् कर्म करोति आगवीनः कर्मकरः ।

[ समा समां विजायते । अद्यश्वीनावष्टब्धे । आगवीन । पा० ५।१।१२-१४ । समां समां समाया समाया विजायते पूर्वपदालुगूयलोपौ च । अद्यश्वो भवति च । आगो कर्मकारिणि । स० ५।२।२१-२३ । [1]प्रत्यर्पणाद्वा ? ]

**अषडक्ष्वाशितंग्वलंकर्मालंपुरुषाध्यन्तात् ॥ २२ ॥**

नास्मिन् षडक्षीणि विद्यन्त इत्यषडक्षः । आशिता गावोऽस्मिन्नाशितङ्गु । निपातनान्नुम् । अलं कर्मणे । अलं पुरुषाय । कुप्रादयः [२।२।२४] इति समासः । राजन्यधि । अस्मादेव निपातनात् खविषये समासः । एभ्यः स्वार्थे खो भवति । अषडक्षीणो मन्त्रः । आशितङ्गवीनमरण्यम् । अलंकर्मीणः । अलंपुरुषीणः । राजाधीनः ।

[ अषडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात् खः । पा० ५।४।७, ०ध्युत्तरपदादिभ्यः । स० ५।२।२४ ]

**अदिश्यञ्चो वा ॥ २३ ॥** [ स० ५।२।२५ ]

अञ्चतेः क्विन्नन्तात् स्वार्थे खो वा भवति, न चेद्दिगुच्यते । प्राक् प्राचीनम् । अपाक् अपाचीनम् । उदक् उदीचीनम् । अदिशीति किम् ? प्राची दिक् ।

[ विभाषाञ्चेरदिक् स्त्रियाम् । पा० ५।४।८ ]

**पील्वादीनां पाके कुणप् ॥ २४ ॥**

पील्वादिभ्यः षष्ठ्यन्तेभ्यः पाके कुणब् भवति । पीलुकुणः ॥

पीलु। कर्कन्धू। शमी। करीर। कुवल। बदर। अश्वत्थ। खदिर। पुष्प।

[२४-२५। तस्य पाकमूले पील्वादिकर्णादिभ्य: कुणब्जाहचौ। पा० ५।२।२४, तस्य पाक: पीलुकर्कन्धुशमीकरीरकुवलबदराश्वत्थखदिरेभ्य कुणप्। स० ५।२।१६। Bhoja does not mention पुष्प which belongs to the next rule.]

**कर्णादीनां मूले जाहच्** ॥ २५ ॥

कर्णादिभ्य: षष्ठयन्तेभ्यो मूले जाहज् भवति। कर्णजाहम्। अक्षिजाहम्॥ कर्ण। अक्षि। नख। मुख। केश। पाद। गुल्फ। भ्रू। शृङ्ग। दन्त। ओष्ठ। पुष्प[1]।

[कर्णाक्षि-नख-मुख-केश-पाद-गुल्फ-भ्रू-शृङ्ग-दन्तोष्ठ-पुष्पेभ्यो मूले जाहच्। स० ५।२।२७। [1]Though attested by GM, it should be पृष्ठ.]

**पक्षस्य तिः** ॥२६॥ [पक्षात्तिः। पा०५।२।२५, स०५।२।२८]

पक्षात् षष्ठयन्तान्मूले तिर्भवति। पक्षतिः।

**तेन वित्तश्चुञ्चुप्चणपौ** ॥ २७ ॥ [पा० ५।२।२६, स० ५।२।२९]

तृतीयान्ताद् वित्तेऽर्थे चुञ्चुप्चणपौ भवतः। केशैर्वित्तः केशचुञ्चुः केशचणः।

**विना नाना** ॥ २८ ॥

एतौ शब्दौ निपात्येते।

[विनञ्भ्यां नानाञौ नसह। पा० ५।२।२७, स० ५।२।३०]

**वेः शालच्छङ्कटचौ** ॥ २९ ॥ [पा० ५।२।२८]

विशब्दाच्छालच्छङ्कटचौ भवतः। विशालः। विशङ्कट.।

[वेर्विस्तृते शालच्छङ्कटचौ। स० ५।२।३१]

**सम्प्रोन्नेश्च कटच्** ॥ ३० ॥

सम: प्राद् उदो नेर्वेश्च कटज् भवति। सङ्कटः। प्रकटः। उत्कटः। निकटः। विकटः।

[ संप्रोदश्च कटच् । पा० ५।२।२९ । Pānini makes no provision for निकट. कटच । समः सङ्कीर्णे । प्रान्न् प्रकाशे । उदोऽधिके । नेः समीपे । स० ५।२।३२-३६ । Jainendra iii 4 176 mentions *ni* ]

**अवात् कुटारच्च ॥ ३१ ॥** [ पा० ५।२।३० ]

अवात् कुटारज् भवति, कटच्च । अवकुटारः । अवकटः ।

[ अवात् कुटारच्चावनते । स० ५।२।३७ ]

**नासानतौ टीटज्नाटज्भ्रटचः ॥ ३२ ॥**

नासिकाया नमने वाच्ये अवाट्टीटजादयो भवन्ति । अवटीटम् नासा-नमनम् । अवनाटम् । अवभ्रटम् । तद्योगाद् अवटीटा नासिका । अवटीटः पुरुषः ।

[ नते नासिकाया. संज्ञायां टीटज्नाटज्भ्रटचः । पा० ५।२।३१, नासानतौ टीटज्नाटज्भ्रटचः । तद्वति च । स० ५।२।३८-३९ ]

**निबिडनिबिरीषचिक्कचिकिनचिपिटाः ॥ ३३ ॥**

एते शब्दा नासानतेरन्यत्रापि यथायोगं निपात्यन्ते । निबिडः । निबिरीष· । चिक्क· । चिकिनः । चिपिटः ।

[ नेर्बिडज्बिरीसचौ । इनच्पिटच्चिकचि च । पा० ५।२।३२-३३, ककारः प्रत्ययो वक्तव्यश्चिक् च प्रकृत्यादेश. । तदुक्तम्—इनच्पिटच्कश्चिकचिचिकादेशाश्च ( ५।२।३३।१ ) वक्तव्या इति । काशिका । नेर्बिडज्बिरीसचौ नीरन्ध्रे । इनच्पिटच्-काश्चिकचिचिकश्चास्य स्थपुटे । स० ५।२।४०-४१ ]

**क्लिन्नचक्षुषि चिल्लपिल्लचुल्लाः ॥ ३४ ॥**

क्लिन्ने चक्षुषी यस्य तस्मिन्नभिधेये चिल्लपिल्लचुल्ला इति निपात्यन्ते ।

[ क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषि । पा० ५।२।३३।२ । चुलादेशो वक्तव्यः । चुल्ल· । काशिका । क्लिन्नाल्लश्चिल्पिल्चुलश्चास्य चक्षुषि । स० ५।२।४२ ]

**उपत्यकाधित्यके ॥ ३५ ॥** [ स० ४।२।३५ ]

एतौ शब्दौ निपात्येते । समीपभूमिरुपत्यका । उपरिभूमिरधित्यका । अलाबूतिलोमाभङ्गाना रजसि कटज् न वक्तव्यः, कटशब्दस्य तद्रजो-

चाचित्वात्। अलाबूना रजः अलाबूकटम्। तिलकटम्। उमाकटम्। भङ्गाकटम्। क्वचित् सङ्घातेऽपि वर्तते। अवीना सङ्घात अविकटः। उष्ट्रकटः। पटशब्दोऽपि विस्तारे दृश्यते। अवीना विस्तार अविपट। गोष्ठजादयोऽपि स्थानादिषु पशुनामादिभ्य स्वभावसिद्धत्वान्न वक्तव्याः, स्थानपर्यायो हि गोष्ठशब्दः। गोगोष्ठम् महिषीगोष्ठम्। उष्ट्रगोयुगम् अश्वगोयुगम् इति नरपुङ्गववत्समास। एवं हस्तिषड्गवम् उष्ट्रषड्गवमिति। घृतादन्यत्र स्नेहे तैलमिति रूढि। सर्षपतैलम् इङ्गुदीतैलम् इति। शाकट शाकिनम् इति क्षेत्रपर्यायः। इक्षुशाकटम् मूलशाकिनमिति।

[उपाधिभ्यां त्यकन्नासन्नारूढयो। पा० ५।२।३४, कटच्प्रकरणेऽलाबूतिलोमाभ्यो रजस्युपसंख्यानम्। भङ्गायाश्च। गोष्ठादय स्थानादिषु पशुनामादिभ्यः। (कटच्च वक्तव्य। पटच्च वक्तव्य। गोयुगशब्दश्च प्रत्ययो वक्तव्य। तैलशब्दश्च प्रत्ययो वक्तव्य। शाकटशब्दश्च प्रत्ययो वक्तव्य। शाकिनशब्दश्च प्रत्ययो वक्तव्यः। भाष्यम्।) उपमानाद्वा सिद्धम्। ५।२।२९।१-४। पर्वतासन्नारूढभुवोरुपाधिभ्यां त्यकन्। अलाबूतिलोमाभङ्गाभ्यो रजसि कटच्। अवे सङ्घाते। विस्तारे पटच्। पशुनामभ्य स्थाने गोष्ठच्। द्वित्वे गोयुगच्। षट्त्वे षड्गवच्। तिलादिभ्य स्नेहे तैलच्। इक्षुमूलकादिभ्य क्षेत्रे शाकटशाकिनौ। स० ५।२।४३-५१]

**कर्मणि घटतेऽठच्** ॥ ३६ ॥ [०घटोऽ० । पा० ५।२।३५]

कर्मण सप्तम्यन्ताद् घटमानेऽठज् भवति। कर्मठः।

[तत्र घटते कर्मणोऽठच्। स० ५।२।५२]

**तदस्य सञ्जातं तारकादिभ्य इतच्** ॥३७॥ [पा० ५।२।३६]

प्रथमान्तेभ्यस्तारकादिभ्योऽस्येति षष्ठ्यर्थ इतज् भवति, सञ्जाताश्चेत् ते भवन्ति। तारकाः सञ्जाता अस्य तारकितं नभः। पुष्पितो वृक्षः॥ तारका। पुष्प। कण्टक। ऋजीप। मूत्र। निष्क्रमण। पुरीष। उच्चार। विचार। कुड्मल। प्रचार। मुकुल। कुसुम। स्तबक। किसलय। वेग। निद्रा। तन्द्रा। बुभुक्षा। पिपासा। श्रद्धा। अभ्र। रोग। अङ्गार। पल्लव। द्रोह। दोह। सुख। दुःख। उत्कर्ष। उत्कण्ठा। गर। व्याधि। व्रण। गर्भादप्राणिनि।

[तदस्य सञ्जातं तारका-पुष्प-मञ्जरी-मुकुल-कुड्मल-कुसुम-कोरका-ऽङ्कुर-हस्तक-स्तबक-पल्लव-किसलयेभ्य इतच्। कण्टक-पुलक-रोमाञ्च-हर्षोत्कर्ष-गर्वोत्कण्ठा-कल्लोल-तरङ्गा-ऽङ्गारक-श्रृङ्गारा-ऽन्धकारेभ्य.। कन्दल-शैवल-कुवलय-कुतूहल-कलङ्क-कज्जल-कर्दम-सीमन्ता-ऽभ्र-राग-वेग-ऋजीषेभ्य। क्षुत्-तृड्-बुभुक्षा-पिपासा-निद्रा-तन्द्रा-ज्वर-गर-व्याधि-व्रण-सुख-दु खेभ्य। मूत्र-पुरीष-द्रोह-दोह-शाख-पण्डा-मुकुर-मुद्रा-गर्ध-फल-तिलक-चन्द्रकादिभ्यश्च। गर्भादप्राणिनि। स० ५।२।५३-५८। उत्कण्ठ for उत्कण्ठा is found in many works on grammar, but Bhoja shows that the correct reading is उत्कण्ठा ]

**माने मात्रट्** ॥ ३८ ॥ [ मानान्० । स० ५।२।५९ ]

प्रथमान्तान्मानवृत्तेरस्येत्यस्मिन्नर्थे मात्रड् भवति। पलमुन्मानमस्य पलमात्रम्। हस्त· प्रमाणमस्य हस्तमात्रम्। प्रादेशमात्री समित्। शतं मानमस्य शतमात्रम्। प्रस्थ· परिमाणमस्य प्रस्थमात्रम्। अभेदोपचारात् प्रस्थ इत्यपि भवति।

✓ **ऊर्ध्वे दघ्नड् द्वयसट् च** ॥ ३९ ॥ [ स० ५।२।६२ ]

ऊर्ध्वमानवृत्तेरस्येत्यस्मिन्नर्थे दघ्नड् द्वयसड् मात्रड् भवति। ऊरुदघ्नम् ऊरुद्वयसम् ऊरुमात्रम्। जानुदघ्नी जानुद्वयसी जानुमात्री नदी। विंशतिमात्रास्त्रिंशन्मात्रा वा पुरुषा:, जानुद्वयसमूरुद्वयस वा नदीजलम् इति संशयेऽपि प्रयुज्यत एव, तथाभ्यूहनात्। तावत्परिमाणमस्येति यथा वाक्यं भवति, तथा वृत्तिरपि भविष्यति—तावन्मात्रम् तावद्द्वयसमिति।

[ ३८-३९। प्रमाणे द्वयसज्-दघ्नज्-मात्रच। पा०५।२।३७। प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम।. प्रमाणपरिमाणाभ्यां संख्यायाश्चापि सशये॥ श्लोकवार्त्तिकम्। वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम्। वा० १। वतो स्वार्थे मात्रड्द्वयसटौ वा। स० ५।२।६८ ]

**हस्तिपुरुषादण् च** ॥ ४० ॥

एताभ्या प्रथमान्ताभ्यामूर्ध्वमानवृत्तिभ्याम् अण् भवति, मात्रड् दघ्नड् द्वयसट् च। हस्ती परिमाणमस्य हास्तिनम् पौरुपम्। हस्तिमात्रम् पुरुषमात्रम्। हस्तिदघ्नम् पुरुषदघ्नम्। हस्तिद्वयसम् पुरुषद्वयसम्।

[ पुरुषहस्तिभ्यामण् च। पा० ५।२।३८। हस्तिपुरुषाभ्यामण् च। स० ५।२।६३। Candra makes the पूर्वनिपात regular. ]

**संख्यादेः संख्येयाल्लुक् ॥ ४१ ॥**

संख्यादेः संख्येयान्तान्मानवृत्तेरुक्तस्य लुग् भवति। द्विप्रस्थम्, द्विप्रस्थी। द्विपुरुषम्, द्विपुरुषी। संख्येयादिति किम्? एकादशमात्रा ब्राह्मणाः सन्ति।

[ प्रमाणे लो द्विगोर्नित्यम्। पा० ५।२।३७ श्लोकवार्त्तिकम्। द्विगोर्लुक्। स० ५।२।६४ ]

**शन्शच्छतेर्डिनिर्वा ॥ ४२ ॥**

शनन्ताच् शदन्ताच् शत्यन्ताच्च तदस्य परिमाणमित्यस्मिन्नर्थे डिनिर्वा भवति। पञ्चदशिनोऽर्धमासाः। त्रिंशिनो मासाः। विंशिनोऽङ्गिरसः। पञ्चदशमात्राः त्रिंशन्मात्राः विंशतिमात्राः।

[ शच्शनोर्डिनि.। ५।२।३७ श्लोकवार्त्तिकम्। विंशतेश्चेति वक्तव्यम्। भाष्यम्। शन्शच्छतिभ्यो डिनिर्वा। स० ५।२।६५ ]

**यत्तदेतो वतुप् ॥ ४३ ॥** [ यत्तदेतेभ्यो०। स० ५।२।६६ ]

यदादिभ्यः प्रथमान्तेभ्यो मानवृत्तिभ्योऽस्येत्यस्मिन्नर्थे वतुब् वा भवति। यत् परिमाणमस्य यावत् तावत् एतावत्। यन्मात्रम् तन्मात्रम् एतन्मात्रम्।

[ यत्तदेतेभ्य. परिमाणे वतुप्। पा० ५।२।३९ ]

**इयत् कियत् ॥ ४४ ॥**

इदमः किमश्च वतुप्, तत्र चैतद्रूपं निपात्यते वा।

[ किमिदंभ्यां वो घ.। पा० ५।३।४०, स० ५।२।६७ ]

**कतिः संख्यायाम् ॥ ४५ ॥**

कतीति निपात्यते वा संख्याया विषये। कत्येते? कियन्त एते?

[ किम. संख्यापरिमाणे डति च। पा० ५।२।४१, किमः संख्याप्रश्ने डति च। स० ५।२।६९ ]

**अंशे संख्यायास्तयट् ॥ ४६ ॥** [ स० ५।२।७० ]

अवयववृत्तेः संख्यायाः प्रथमान्ताया अस्येति षष्ठ्यर्थे तयड् भवति। पञ्च अंशा अस्य पञ्चतयः सङ्घः। पञ्चतयी शाला।

[ संख्याया अवयवे तयप्। पा० ५।२।४२। Pānini has the anubandha *p* to show that the suffix is unaccented For the fem. suffix he has to include -*tayap* in the tiddhānañ rule Candra and Bhoja regard the accent as secondary and change the *p* to *ṭ*. ]

**द्वित्रिभ्यामयड् वा ॥ ४७ ॥** [ स० ५।२।७१ ]

द्वित्रिभ्यामंशवृत्तिभ्यां प्रथमान्ताभ्यामस्येति षष्ठ्यर्थेऽयड् वा भवति। द्वावंशावस्य द्वयम्। त्रयम्। द्वितयम्। त्रितयम्।

[ द्वित्रिभ्यां तयस्यायज् वा। पा० ५।२।४३ ]

**उभात् ॥ ४८ ॥**

उभशब्दादंशवृत्तेः प्रथमान्तादस्येति षष्ठ्यर्थेऽयड् भवति नित्यं योगविभागात्। उभयो मणिः। उभयी स्थितिः। उभये देवमनुष्याः।

[ उभादुदात्तो नित्यम्। पा० ५।२।४४, उभान्नित्यम्। स० ५।२।७२ ]

**निमाननिमेययोर्मयट् ॥ ४९ ॥** [ स० ५।२।७३ ]

निमाननिमेययोरंशे वर्तमानायाः[1] संख्याया अस्येति षष्ठ्यर्थे निमाने निमेये वा मयड् भवति। द्वौ यवांशौ निमानमस्योदश्वितः द्विमयमुदश्विद्यवानाम्। त्रिमयम्। द्वावुदश्विदंशौ निमेयमेषां यवानाम् द्विमया यवा उदश्वितः। त्रिमयाः। निमाननिमेयसम्बन्धे षष्ठी। इह कस्मान्न भवति—द्वौ यवांशौ निमानमेषामुदश्विदंशानामिति [2] समुदितानां यवांशसंख्यासम्बन्धाभावात्। प्रत्येकसम्बन्धे तु भवितव्यमेव। तथा द्वावुदश्विदंशौ निमेयमेषां यवांशानामिति। एको यवांशो निमानमस्योदश्वित इति न भवति, एकस्यांशांशिकल्पनाभावात्। समता तु तदावगम्यते। अथवा निमाननिमेययोरंशभूतायाः संख्याया अस्येति षष्ठ्यर्थे तस्मिन्नेव निमाने निमेये वा मयड् भवति। द्वावंशावेषां निमानभूतानां यवानां द्विमया यवा उदश्वितः। त्रिमयाः।

द्वावंशावस्य निमेयभूतस्योदश्वितः द्विमयमुदश्विद् यवानाम्। त्रिमयम्। एकोऽंशो यवानामिनि कस्मान्न भवति ? निमेयाशानवगमात्। एकोऽंश उदश्वित इति कस्मान्न भवति ? निमानाशानवगमात्। अध्यर्ध यवानामिति कस्मान्न भवति ? अध्यर्ध न संख्या, सख्याध्यर्धादे° [ ४।१।३८ ] इति पृथग् ग्रहणात्। अंश इत्येव। द्वौ व्रीहियवौ निमानमस्योदश्वितः। संख्याया इत्येव। अशो निमानमस्योदश्वित ।

[ सख्याया गुणस्य निमाने मयट्। पा० ५।२।४७। निमाने गुणिनि। भूयसः। एकोऽन्यतर। समानानाम्। वा १-४। निमेये चापि दृश्यते। श्लो० वा० [1]वर्तमानयो. L ]

## शतिशद्दशान्ताधिकास्मिन् शतसहस्रे डः ॥ ५० ॥

शत्यन्ताया शदन्ताया दशान्तायाश्च सख्याया. प्रथमान्ताया अस्मिन्निति सप्तम्यर्थे डो भवति, सा चेत्सख्याधिका भवति, यत्तदस्मिन्निति तच्चेच्छतं सहस्र शतसहस्र वा भवति। विशतिरधिकास्मिन् शते विंशं शतम्, एकविंश शतं सहस्र वा। त्रिंश शतम्, एकत्रिंशम्। एकादशम्, द्वादशम्। शन्ग्रहणेन सिद्धे दशान्तग्रहण केवलनिवृत्त्यर्थम्। शतिशदन्तात्तु केवलादकेवलाच्च भवति, तदन्तमात्रग्रहणात्। शतिशद्दशान्तेति किम्? षडधिका अस्मिन् शते। अधिकेति किम् ? पञ्चदश हीना अस्मिन् शते। अस्मिन्निति किम् ? विंशतिरधिकास्माच्छतात्। शतसहस्र इति किम्? एकादशाधिका अस्या विंशतौ। इह कस्मान्न भवति—एकादश पणा अधिका अस्मिन् कार्षापणशत इति ? पणाधिक्यानवबोधात्। एकादशं कार्षापणशतमिति ह्युक्ते समानजातीयानामेव कार्षापणानामाधिक्यं प्रतीयते।

[ तदस्मिन्नधिकमिति दशान्ताड्डः। पा० ५।२।४५, अधिके समानजाताविष्टं शतसहस्रयो। यस्य सख्या तदाधिक्ये ड कर्तव्यो मतो मम॥ श्लो० वा०। शदन्तविंशतेश्च। पा० ५।२।४६। तदस्मिन्नधिकं समानजातीयमिति शतिशद्दशान्ताया. शतसहस्रे व्यस्तसमस्ते ड.। स० ५।२।७४ ]

## तस्य पूरणे डट् ॥ ५१ ॥ [पा० ५।२।४८, स० ५।२।७५]

षष्ठ्यन्ताया. संख्यायाः पूरणे डड् भवति। सा संख्या पूर्यते येन

तत् पूरणम् । एकादशाना पूरणम् एकादश. । द्वादश द्वादशी । संख्या-पूरणग्रहणादिह न भवति । द्वादशाना मुष्टिकाना पूरणो घट इति ।

**विंशत्यादिभ्यस्तमड् वा** ॥ ५२ ॥ [ स० ५।२।७६ ]

विंशत्यादिभ्य षष्ठ्यन्तेभ्य पूरणे तमड् वा भवति । विंशतितमः विंश· । एकविंशतितम. एकविंश. । त्रिंशत्तम त्रिंश । पञ्चाशत्तम· पञ्चाशः । अष्टापञ्चाशत्तम· अष्टापञ्चाश· ।

[ विंशत्यादिभ्यस्तमडन्यतरस्याम् । पा० ५।२।५६ ]

**शतादिमासार्धमाससंवत्सरात्** ॥ ५३ ॥

शतादिभ्यो मासादिभ्यश्च षष्ठ्यन्तेभ्य पूरणे तमड् भवति, नित्यं पुनर्विधानात् । शततम एकशततम· । सहस्रतम एकसहस्रतमः । मासतमः अर्धमासतम संवत्सरतम ।

[ नित्यं शतादिमासार्धमाससंवत्सराच्च । पा० ५।२।५७ । नित्यं शतादि-मासार्धमाससंवत्सरेभ्य । स० ५।२।७७ ]

**षष्ट्यादेरसंख्यादेः** ॥ ५४ ॥ [ स० ५।२।७८ ]

षष्ट्यादिभ्योऽसंख्यादिभ्य पूरणे नित्यं तमड् भवति । षष्टितमः । सप्ततितम· । अशीतितम. । नवतितम. । असंख्यादेरिति किम् ? एकषष्टः एकषष्टितम· ।

[ षष्ट्यादेश्चासंख्यादे । पा० ५।२।५८ ]

**नो मट्** ॥ ५५ ॥ [ स० ५।२।७९ ]

नान्तादसंख्यादे पूरणे मड् भवति । पञ्चम· । सप्तमः । असंख्यादेरित्येव । एकादश ।

[ नान्तादसंख्यादेर्मट् । पा० ५।२।४९ ]

**षट्कतिकतिपयात् थट्** ॥५६॥ [०पयेभ्यस्थट् । स० ५।२।८०]

एतेभ्य पूरणे थड् भवति । षष्ठ· । कतिथ· । कतिपयथ· ।

[ ५६-५७ । षट्कतिकतिपयचतुरां थुक् । पा० ५।२।५१ ]

**चतुरः** ॥ ५७ ॥

चतुरः पूरणे थट् भवति । चतुर्थः ।

**यच्छौ चलोपश्च** ॥ ५८ ॥

चतुरः पूरणे यच्छौ भवतः, चकारस्य च लोपः । तुर्यः तुरीयः ।

[ चतुरश्छयतावाद्यक्षरलोपश्च । पा० ५।२।५१।१ । चतुरो यच्छौ चलोपश्च । स० ५।२।८१ ]

**द्वितीयतृतीयौ** ॥ ५९ ॥

एतौ शब्दौ पूरणे निपात्येते ।

[ द्वेस्तीयः । त्रेः सम्प्रसारणं च । पा० ५।२।५४-५५ । द्वेस्तीयः । त्रेस्तृ च । स० ५।२।८२-८३ ]

**बहुपूगगणसङ्घात् तिथट्** ॥ ६० ॥ [ ०सङ्घेभ्यस्ति० । स० ५।२।८४ ]

एतेभ्यः पूरणे तिथट् भवति । बहुतिथः । पूगतिथः । गणतिथः । सङ्घतिथः ।

[ बहुपूगगणसङ्घस्य तिथुक् । पा० ५।२।५२ ]

**वतोरिथट्** ॥ ६१ ॥ [ स० ५।२।८५ ]

वत्वन्तात् पूरण इथट् भवति । यावतिथः । तावतिथः ।

[ वतोरिथुक् । पा० ५।२।५३ ]

**भागेऽष्टमाञ् ञो वा** ॥ ६२ ॥

भागे वर्तमानादष्टमात्स्वार्थे ञो वा भवति । अष्टमो भागः आष्टमः । पञ्चाङ्गेऽप्यनेनैव सिद्धम् ।

[ षष्ठाष्टमाभ्यां ञ च । पा० ५।३।५०, भागेऽष्टमादञ्ञौ वा । स० ५।२।८६ ]

**षष्ठात्** ॥ ६३ ॥ [ स० ५।२।८७ ]

भागे वर्तमानात् षष्ठात् स्वार्थे ञो वा भवति । षष्ठो भागः षाष्ठः ।

**माने कंश्च** ॥ ६४ ॥ [ स० ५।२।८८ ]

मानविषये भागे वर्तमानात् षष्ठात् स्वार्थे कन् भवति ञश्च वा। षष्ठको भागः, षाष्ठः, षष्ठः।

[ मानपश्वङ्गयो. कन्लुकौ च। पा० ५।३।५१ ]

**तेन गृह्णातीति लुक् च ॥ ६५ ॥**

तृतीयान्तात् पूरणार्थाद् गृह्णातीत्यस्मिन्नर्थे कन् भवति, लुक् च पूरणार्थाना डडादीनाम्। षष्ठेन रूपेण गृह्णाति षट्कः। पञ्चकः। इतिशब्दो विवक्षार्थः, तेन ग्रन्थग्रहण एव भवति। इह न भवति पञ्चमेन दिनेन शत्रुं गृह्णाति।

[ तावतिथेन गृह्णातीति लुक् च। पा० ५।२।७७।२, तेन ग्रन्थं गृह्णातीति पूरणाल्लुक् चास्य वा। स० ५।२।८९-९० ]

**ग्रहणे वा ॥ ६६ ॥** [ स० ५।२।९१ ]

येन रूपेण गृह्यते तस्मिन् पूरणे विहितस्य कन् भवति, लुक् च वा। द्वितीयेन रूपेण ग्रन्थं गृह्णाति द्विक ग्रहणम्, द्वितीयकम्। त्रिकम् तृतीयकम्।

[ तावतिथं ग्रहणमिति लुग्वा। पा० ५।२।७७ ]

**एकादाकिनिच्चासहाये ॥६७॥** [पा० ५।३।५२, स० ५।२।९२]

एकादसहाये कन् भवति, आकिनिच् च वा। एककः एकाकी एकः।

**आकर्षादिषु कुशलः ॥ ६८ ॥**

आकर्षादिभ्यः सप्तम्यन्तेभ्यः कुशल इत्यस्मिन्नर्थे कन् भवति। आकर्षकः। त्सरुकः॥ आकर्ष। त्सरु। पिशाच। पिचण्ड। अशनि। अश्मन्। निचय। जप। नय। पाद। ह्रद। ह्लाद। शकुनि।

[ आकर्षादिभ्य. कन्। पा० ५।२।६४, तत्र कुशलमित्याकर्षात्। त्सरु-पिशाच-पिचण्ड-निचया-ऽश्मा-ऽशनि-शकुनि-जप-तप-ह्राद-ह्लाद-पादेभ्यः कन्। स० ५।२।९३-९४। Printed *Kāśikā* reads जय for जप. ]

**पथकः** ॥ ६९ ॥

अय शब्दो निपात्यते पथि कुशल इत्येतस्मिन्नर्थे ।

[ तत्र कुशल पथ । पा० ५।२।६३, पथ पथ च । स० ५।२।९५ ]

**धनहिरण्ये कामः** ॥ ७० ॥

एताभ्या सप्तम्यन्ताभ्या कामे कन् भवति । धने काम धनकः । हिरण्यक ।

[ धनहिरण्यात् कामे । पा० ५।२।६५, धनहिरण्याभ्यां कामे । स० ५।२।९६ ]

**स्वाङ्गेषु सक्तः** ॥ ७१ ॥

स्वाङ्गेभ्य सप्तम्यन्तेभ्य सक्ते कन् भवति । दन्तेषु सक्तः दन्तक· । मुखक । दन्तौष्ठक । केशनखक ।

[ स्वाङ्गेभ्य प्रसिते । पा० ५।२।६६, स्वाङ्गेभ्य सक्ते । स० ५।२।९७ । प्रसित had grown obsolete by the time of Candra ]

**औदरिकोऽलसे** ॥ ७२ ॥

औदरिक इत्यलसे निपात्यते उदरे सक्त इत्यस्मिन्नर्थे । उदरकोऽन्य· ।

[ उदराट्‌ ठगाद्यूने । पा० ५।२।६७, स० ५।२।९८ ]

**सस्येन परिजातः** ॥ ७३ ॥ [ पा० ५।२।६८, स० ५।२।९९ ]

सस्यशब्दात् तृतीयान्तात् परिजातेऽर्थे कन् भवति । सस्यक खड्ग. । सस्यको मणिः । सारेण सर्वत· सम्पन्न इत्यर्थ ।

**अंशं हारी** ॥ ७४ ॥ [ पा० ५।२।६९, स० ५।२।१०० ]

अशाद् द्वितीयान्तादवश्यहारिणि कन् भवति । अशक ।

**तन्त्रान्नवोद्धृते** ॥ ७५ ॥

तन्त्रात्पञ्चम्यन्तादचिरापहृते कन् भवति । तन्त्रक. पटः ।

[ तन्त्रादचिरापहृते । पा० ५।२।७०, तन्त्रादचिरोद्धृते । स० ५।२।१०१ ]

**ब्राह्मणान्नाम्नि** ॥ ७६ ॥

ब्राह्मणशब्दात्सञ्ज्ञाया कन् भवति । ब्राह्मणको नाम देशः, यत्र काण्डस्पृष्टा ब्राह्मणा. ।

[ब्राह्मणकोष्णिके संज्ञायाम्। पा० ५।२।७१, ब्राह्मणात्संज्ञायाम्। स०५।२।१०२। सदाचारब्राह्मणेभ्यस्तदानीमेवोद्धृत्य पृथक्कृतो ब्राह्मणको नाम देशः, यत्रायुधजीविन काण्डस्पृष्टा नाम ब्राह्मणा भवन्ति। हृदयहारिणी]

**उष्णात्** ॥ ७७ ॥ [स० ५।२।१०३]

उष्णान्नाम्नि कन् भवति। उष्णिका यवागू.। अल्पान्ना। नदीति केचित्।

[उष्णिका यवागू। काशिका ५।२।७१। उष्णादग्नेरचिरोद्धृता उष्णिका यवागू। अल्पान्ना पेया विलेपिकेति यावत्। उष्णात् कुण्डाग्नि सृता नदीति केचित्। हृदयहारिणी]

**शीताच्च कारिणि** ॥ ७८ ॥ [स० ५।२।१०४]

शीतादुष्णाच्च कारिणि कन् भवति। आवश्यके णिनि. [१।२।५५]। शीतमुष्णं च क्रियाविशेषणम्। शीतकोऽलस, उष्णको दक्ष·।

[७७-७८। शीतोष्णाभ्यां कारिणि। पा० ५।२।७२]

**अधिकम्** ॥ ७९ ॥ [पा० ५।२।७३]

अध्यारूढस्य कन् भवति वृत्त्युत्तरपदलोपश्च निपात्यते। अध्यारूढो द्रोणः खार्याम्, अधिकः। अध्यारूढा खारी द्रोणेन, अधिका द्रोणेन।

[अधेरारूढे। स० ५।२।१०५]

**अनुकाभिकाभीकं कमिता** ॥८०॥ [०भीकः०। पा० ५।२।७४]

एते शब्दा निपात्यन्ते कमिता चेत्। अनुकाम्यते अनुकः। अभिकाम्यते अभिक· अभीकः।

[अनो. कमितरि। अभेर्दीर्घश्च वा। स० ५।२।१०६-१०७]

**पार्श्वेनान्विच्छति** ॥ ८१ ॥ [पा० ५।२।७५, स० ५।२।१०८]

पार्श्वशब्दात् तृतीयान्तादन्विच्छतीत्यस्मिन्नर्थे कन् भवति पार्श्वकः। अप्रगुणेन पथा योऽर्थानन्विच्छति स एवोच्यते।

[य ऋजुनोपायेनान्वेष्टव्यानर्थाननृजुनोपायेनान्विच्छति स उच्यते पार्श्वक इति। महाभाष्यम्।]

**अयःशूलदण्डाजिनाभ्यां ठक्** ॥ ८२ ॥ [ स० ५।२।१०९, ०ठक्ठञौ । पा० ५।२।७६ ]

एताभ्या तृतीयान्ताभ्यामन्विच्छतीत्यस्मिन्नर्थे ठग् भवति। तीक्ष्ण उपायोऽय शूलम् । तेनान्विच्छति आय शूलिक । राभसिक इत्यर्थः । दम्भोपलक्षणं दण्डाजिनम्। तेनान्विच्छति दाण्डाजिनिक । दाम्भिक इत्यर्थ ।

[ यो मृदुनोपायेनान्वेष्टव्यानर्थान् रभसेनान्विच्छति स उच्यत आय शूलिक इति। महाभाष्यम्। ]

**सोऽस्य ग्रामणीः** ॥ ८३ ॥ [ स० ५।२।११० ]

प्रथमान्तादस्येति षष्ठ्यर्थे कन् भवति यत्तत् प्रथमान्त ग्रामणीश्चेत्तद् भवति। देवदत्तो ग्रामणीरेषा देवदत्तका । यज्ञदत्तकाः। ग्रामणीरिति किम् ? देवदत्तः शत्रुरेषाम्।

[ स एषां ग्रामणी. । पा० ५।२।७८ ]

**शृङ्खलं बन्धनं करभे** ॥ ८४ ॥ [ स० ५।२।१११ ]

शृङ्खलात्प्रथमान्तादस्येति षष्ठ्यर्थे करभेऽभिधेये कन् भवति, तच्चेच्छृङ्खलं बन्धन भवति। शृङ्खल बन्धनमस्य शृङ्खलक करभः। बन्धनमिति किम् ? शृङ्खलमस्य वाह्य करभस्य। करभ इति किम् ? शृङ्खलमस्य बन्धन गो ।

[ शृङ्खलमस्य बन्धनं करभे। पा० ५।२।७९ ]

**उत्क उन्मनाः** ॥ ८५ ॥ [पा० ५।२।८०, स० ५।२।११२]

उत्क इति निपात्यत उन्मनाश्चेद् भवति।

**कालहेतुफलान्नाम्नि** ॥ ८६ ॥

कालवृत्तेः प्रथमान्तात्करणात्कार्याच्चास्येति षष्ठ्यर्थे संज्ञाया कन् भवति। तृतीयो दिवसोऽस्याविर्भावाय तृतीयको ज्वरः। चतुर्थकः। विषपुष्पं कारणमस्य विषपुष्पकम्। शीतं कार्यमस्य शीतकम्। उष्णकम्। नाम्नीति किम् ? द्वितीयो दिवसोऽस्य जातस्य।

[ कालप्रयोजनाद्रोगे। पा० ५।२।८१ प्रयोजनं कारणं रोगस्य फलं वा।... उत्तरसूत्रात्संज्ञाग्रहणमनुकृष्यते। काशिका। कालहेतुफलेभ्यो रोगे। स० ५।२।११३ ]

**प्रायोऽन्नमस्मिन्** ॥ ८७ ॥

प्रथमान्तात्प्रायोऽन्नवाचिनोऽस्मिन्निति सप्तम्यर्थे संज्ञाया कन् भवति। त्रिपुटास्या पौर्णमास्या प्रायेणान्नं त्रिपुटिका पौर्णमासी। कृसरिका। नाम्नीत्येव। सक्तवः प्रायेणान्नमस्मिन्।

[ तदस्मिन्नन्नं प्राये संज्ञायाम्। पा० ५।२।८२, प्रायोऽन्नमस्मिन् संज्ञायाम्। स० ५।२।११४ ]

**कुल्माषादण्** ॥८८॥ [०दञ्०। पा०५।२।८३, स०५।२।११५]

प्रथमान्तात् कुल्माषादस्मिन्निति सप्तम्यर्थेऽण् भवति। कुल्माषाः प्रायेणान्नमस्या कौल्माषी पौर्णमासी।

[ Probably Candra wrote कुल्माषादञ्. ]

**वटकादिनिः** ॥ ८९ ॥ [ स० ५।२।११६ ]

वटकशब्दात्प्रथमान्तादस्मिन्निति सप्तम्यर्थ इनिर्भवति। वटकाः प्रायेणान्नमस्या वटकिनी पौर्णमासी।

[ प्राये संज्ञाया वटकेभ्य इनि । पा० ५।२।८२।१ ]

**साक्षाद् द्रष्टा** ॥ ९० ॥ [ स० ५।२।११७ ]

साक्षाच्छब्दाद् द्रष्टेत्यस्मिन्नर्थे इनिर्भवति। असख्यत्वादन्त्याजादेर्लोप.। साक्षी। नाम्नीत्येव। साक्षाद् द्रष्टा।

[ साक्षाद् द्रष्टरि संज्ञायाम्। पा० ५।२।९१ ]

**श्राद्धमनेनाद्य भुक्तं ठंश्च** ॥ ९१ ॥ [ स० ५।२।११८ ]

श्राद्धात्प्रथमान्तादनेनेति तृतीयार्थ इनिर्भवति ठंश्च, तच्चेदद्य भुक्तं भवति। श्राद्धी श्राद्धिक'।

[ श्राद्धमनेन भुक्तमिनिठनौ।
ग्रहणम्। वा० १ ]

**पूर्वात्** ॥ ९२ ॥

पूर्वशब्दादनेनेत्यस्मिन्नर्थ इनिर्भवति। पूर्वमनेन भुक्त पीत कृतं वा पूर्वी। नाक्रिय. कर्तास्तीति सामर्थ्याद् भुक्तादिक्रियाध्याह्रियते। पूर्वमिति तद्विशेषणम्।

[ पूर्वादिनि.। पा० ५।२।८६, स० ५।२।११९ ]

**सपूर्वात्** ॥ ९३ ॥ [ स० ५।२।१२० ]

पूर्वशब्दात्सपूर्वपदादनेनेत्यस्मिन्नर्थ इनिर्भवति। भुक्त पूर्वमनेन भुक्तपूर्व्योदनम्। कृतपूर्वी कटम्।

[ सपूर्वाच्च। पा० ५।२।८७ ]

**इष्टादिभ्यः** ॥ ९४ ॥

इष्टादिभ्योऽनेनेत्यस्मिन्नर्थ इनिर्भवति। इष्टमनेन इष्टी यज्ञे। पूर्ती श्राद्धे॥ इष्ट। पूर्त। उपसादित। निगदित। परिगदित। निकथित। निपठित। संकलित। परिकलित। संरक्षित। परिरक्षित। अर्चित। गणित। अवकीर्ण। आयुक्त। गृहीत। आम्नात। श्रुत। आसेवित। अवधारित। उद्गृहीत। अवकल्पित। निराकृत। उपकृत। उपाकृत। अनुयुक्त। अनुगणित। अनुपठित। व्याकुलित।

[ इष्टादिभ्यश्च। पा० ५।२।८८। इष्ट-पूर्त-श्रुत-गृहीतोद्गृहीता-ऽर्चित-पठित-ऽनुपठित-व्याकुलित- निराकृतोपाकृतोपकृता - ऽवधारिता - ऽवकल्पिता - ऽवकीर्णेभ्य.। आयुक्ता-ऽऽसेविता-ऽऽम्नात-परिगणिता-ऽनुगणित-गणित-निकथित-निषादितोपसादित-परिगदित-परिकलित-परिरक्षित-सङ्कलित-संरक्षितेभ्यश्च। स० ५।२।१२१-१२२ ]

**अनुपद्यन्वेष्टा** ॥ ९५ ॥ [पा० ५।२।९०, स० ५।२।१२३]

अनुपदीति निपात्यते, अन्वेष्टा चेत्।

**क्षेत्रियच् परक्षेत्रे चिकित्स्यः** ॥ ९६ ॥ [ पा० ५।२।९२, स० ५।२।१२४ ]

परक्षेत्रे चिकित्स्य इत्यस्मिन्नर्थे क्षेत्रियजिति निपात्यते। चकारः

स्वरार्थः। क्षेत्रं शरीरम्। परशरीरे संक्रम्य चिकित्स्यं विषम् क्षेत्रियम्। परलोकशरीरे चिकित्स्यो व्याधिः क्षेत्रियः। अचिकित्स्य इत्यर्थः। परक्षेत्रे सस्यार्थे चिकित्स्यानि[1] तृणानि क्षेत्रियाणि। परक्षेत्रे परकलत्रे चिकित्स्यो निग्राह्यः क्षेत्रियः पारदारिकः।

[[1] = नाश्यानि। हृदयहारिणी]

**इन्द्रियम्** ॥ ९७ ॥

इन्द्रियमिति निपात्यते सर्वेन्द्रियाणाम्। इन्द्रस्यात्मनो लिङ्गमिति वा, करणस्य कर्तृप्रयोज्यत्वात्। तेन सृष्टमिति वा, तत्कर्मनिर्जातत्वात्। तेन जुष्टमिति वा, तद्दर्शनद्वारभूतत्वात्।

[**इन्द्रियमिन्द्रलिङ्गम् इन्द्रदृष्टम् इन्द्रसृष्टम् इन्द्रजुष्टम् इन्द्रदत्तमिति वा। पा० ५।२।९३, स० ५।२।१२६**]

**तदस्यास्त्यत्रेति मतुप्** ॥ ९८ ॥

प्रथमान्तादस्यास्मिन्नस्तीत्यनयोरर्थयोर्मतुब् भवति। गावोऽस्य सन्तीति गोमान्। वृक्षा अस्मिन् देशे सन्ति वृक्षवान्। अस्तीति वर्तमानकालो-पादानाद् भूताभिर्भविष्यन्तीभिर्वा गोभिर्न गोमान्। कथ गोमानासीत् गोमान् भवितेति। तदापि वर्तमानाभिरेव गोभिर्गोमान्। भूतो भावी चेति पदान्तरम्। इतिशब्दो विवक्षार्थः। अतो

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।

संसर्गेऽस्तिविवक्षाया भवन्ति मतुबादयः॥ [५।२।९४ श्लो०वा०]

इति विवक्षार्थत प्रयोगनियम उपपन्नो भवति। शुक्लः पट इति शुक्लशब्दस्य द्रव्याभिधानसामर्थ्यान्मतुब् न भवति, यथा जातिशब्देभ्यो गौरश्व इति। येषा तु गुणशब्दाना द्रव्याभिधानसामर्थ्यं नास्ति ततो भवत्येव, यथा रसवान् रूपवान् गन्धवान् स्पर्शवानिति। रसादिभ्य इति न वक्तव्यम्, इष्यते हि रसी रसिकः, रूपी रूपिक इति। अथ रसादिविशेषणार्थं गुणादिति पाठः, तथापि गन्धिक इति न सिध्यति।

[ तदस्यास्त्यस्मिन्निति मतुप्। पा० ५।२।९४, स० ५।२।१२७। गुणवचनेभ्यो मतुपो लुक्। वा०३। रसादिभ्यश्च। पा०५।२।९५। रसरूपवर्णगन्धस्पर्शशब्दस्नेहेभ्यो गुणेभ्य.। तद्विशेषेभ्यो लुक्। स० ५।२।१२८-१२९ ]

**प्राण्यङ्गादातो लज् वा ॥ ९९ ॥** [ स० ५।२।१३० ]

आकारान्तात्प्राण्यङ्गवाचिनो मत्वर्थे लज् वा भवति। चूडालः चूडावान्। प्राणिग्रहणं किम्? शिखावान् प्रदीप·। अङ्गग्रहणं किम्? इच्छावान्। अत इति किम्? हस्तवान्। चकारश्चूडालोऽसीति स्वरित-बाधनार्थ·। वेत्यधिकारः।

[ प्राणिस्थादातो लजन्यतरस्याम्। पा० ५।२।९६, प्राण्यङ्गादिति वक्तव्यम्। भाष्यम्। प्रत्ययस्वरेणैवान्तोदात्तत्वे सिद्धे चकारश्चूडालोऽस्तीत्यत्र स्वरितो वाऽनुदात्ते पदादौ [ पा० ८।२।६ ] इति स्वरितबाधनार्थं। काशिका ]

**सिध्मादिभ्यः ॥१००॥** [ ०भ्यश्च। पा० ५।२।९७ ]

सिध्मादिभ्यो मत्वर्थे लज् वा भवति। सिध्मल. सिध्मवान्। गडुलः गडुमान्॥ सिध्म। गडु। मणि। नाभि। बीज। निष्पाव। पांसु। हनु। सक्तु। मास। पर्शु। पार्ष्णिधमन्योर्दीर्घश्च। वात-दन्त-बल-ललाटानाम् च। जटा घाटा क्षेपे। पर्ण। उदक। प्रज्ञा। क्षुद्रजन्तूपतापाच्च। क्षुद्रजन्तुभ्यः। यूकाल.। मक्षिकालः। उपतापात्। विचर्चिकालः। विपादिकाल·। मूर्छाल.।

[ जटाघाटाभ्या क्षेपे। क्षुद्रजन्तूपतापेभ्यश्च। सिध्म-गडु-मणि-कर्ण-पर्ण-पांसु-मांस-नाभि-पशु-प्रज्ञा-सक्थि-हनूदक-बीज-स्नेहेभ्य.। शीत-श्याम-कृष्ण-पिङ्ग-पेश-पक्ष्म-पृथु-मृदु-मञ्जु-पत्र-पुष्क-निष्पाव-चटु-कपि-कण्डूभ्य·। पार्ष्णिधमन्योर्दीर्घश्च। वात-दन्त-बल-गल-ललाटानाम् च। स० ५।२।१३१-१३६ ]

**वत्सांसात्स्नेहबलिनोः ॥१०१॥**

वत्सात् स्नेहवति, अंसाद् बलवति लज् भवति वा। वत्सला गौः। अंसलः पुरुषः। स्नेहबलिनोरिति किम्? वत्सवती गौ·। अंसवान् दुर्बलः। [1]अर्थविशेषाश्रयणाद्वेत्यनुवर्तमानमप्यकिञ्चित्करम्। एवमन्यत्रापि द्रष्टव्यम्।

[ वत्सांसाभ्यां कामबले। पा० ५।२।९८, वत्सांसाभ्यां स्निग्धबलिनोः। स० ५।२।१३७। [1]अथ विशेषाश्रयणात्। L ]

**फेनात्** ॥१०२॥ [ स० ५।२।१३८ ]

फेनान्मत्वर्थे लज्भवति वा। फेनल· फेनवान्।

[ फेनादिलच्च। पा० ५।२।९९ ]

**पिच्छादिभ्यश्चेलच्** ॥१०३॥

पिच्छादिभ्य· फेनाच्च मत्वर्थ इलज् भवति वा। पिच्छिल· पिच्छवान्। उरसिल उरस्वान्। फेनिल फेनवान्॥ पिच्छ। उरस्। ध्रुवका। जटा। घाटा। कालात् क्षेपे। पर्ण। उदक। प्रज्ञा। तुन्द। उदर। पिचण्ड। यव। व्रीहि। स्वाङ्गाद् विवृद्धौ।

[ फेनादिलच्च। लोमादि-पामादि-पिच्छादिभ्य. शनेलचः। पा० ५।२।९९-१००। पिच्छोर -पर्णोदक-धुवका-धूवका-प्रज्ञाभ्यश्चेलच्। जटा-घाटा-कालाभ्यः क्षेपे। तुन्दोदर-पिचण्ड-कला-पङ्क-काक-यव-व्रीहि-ग्रह-गुहाभ्यः। स्वाङ्गेभ्यो वृद्धौ। स० ५।२।१३९-१४२ ]

**लोमादिपामादिभ्यः शनौ** ॥१०४॥

लोमादिभ्य. शो वा भवति मत्वर्थे, पामादिभ्यो नो वा भवति। लोमशः रोमश.। पामन· वामन.। लोमवानित्यादि॥ लोमन्। रोमन्। बभ्रु। वल्गु। हरि। कपि। मुनि। भरु[1]। लोमादिः। पामन्। वामन्। हेमन्। श्लेष्मन्। दद्रु[2]। वलि। कृमि। सामन्। अङ्गात् कल्याणे। शाकी-पलाली-कद्रूणा ह्रस्वत्वं च। शाकिन पलालिनः कद्रुण·। विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः। विषुण। लक्ष्म्या अच्च। लक्ष्मणः। पामादि·।

[ नप्रकरणे दद्र्वा ह्रस्वत्वं च। पा०५।२।१००।१। अत्यल्पमिदमुच्यते। शाकीपलालीदद्रूणां ह्रस्वत्वं चेति वक्तव्यम्। भाष्यम्। विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः। ५।२।१००।२। लोम-रोम-पप्लु-बभ्रु-हुकु-रुरु-हरि-कपि-कर्केभ्यः श.। पाम-वाम-हेम-शाम-श्लेष्मोष्म-दद्रु-क्रिमि-बलिभ्यो न·। शाकीपलालीकद्रूणां ह्रस्वश्च। विष्वचोऽकृतसन्धेरुत्तरपदलोपश्च। अङ्गात् कल्याणे। लक्ष्म्या अ च। स० ५।२।१४३-१४८। [1]Should we read रुरु? [2]कद्रू Ms. ]

**प्रज्ञाश्राद्धार्चावृत्तिभ्यो णः** ॥१०५॥ [ स० ५।२।१४९ ]

प्रज्ञादिभ्यो मत्वर्थे णो वा भवति। प्राज्ञ श्राद्ध· आर्च वार्त्तः। प्राज्ञा श्राद्धा आर्चा वार्त्ता। प्रज्ञावानित्यादि।

[प्रज्ञाश्रद्धार्चाभ्यो ण.। पा० ५।२।१०१, वृत्तेश्च। वा० १]

**तपःसहस्राभ्यामण्** ॥१०६॥ [स० ५।२।१५०]

आभ्या मत्वर्थेऽण् वा भवति। तापस· तपस्वान्। तपस्वीत्यस्मायामेधास्रजो विनि. [१३७]। साहस्र सहस्रवान्। सहस्रीत्यत इनिः [११९]।

[तप सहस्राभ्यां विनीनी। अण् च। पा० ५।२।१०२-१०३]

**ज्योत्स्नादिभ्यः** ॥१०७॥

ज्योत्स्नादिभ्यो मत्वर्थेऽण् वा भवति। ज्यौत्स्नः। तामिस्र। कौण्डलः। कौतुपः। वैसर्प। वैपादिक। ज्योत्स्नावानित्यादि।

[अण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम्। पा० ५।२।१०३।२। ज्योत्स्ना-तमिस्रा-कुण्डल-कुतुप-विसर्प-विपादिकाभ्य। स० ५।२।१५१। वैसर्प is not found in the Bhāsya, but occurs in Kāś]

**सिकताशर्कराभ्याम्** ॥१०८॥ [स० ५।२।१५२]

आभ्यामण् वा भवति। सैकतम् शार्करम्। सिकतावान् इत्यादि।

[सिकताशर्कराभ्यां च। पा० ५।२।१०४]

**इलज् देशे** ॥१०९॥

सिकताशर्कराभ्या देशेऽभिधेय इलज् वा भवति। सिकतिलो देशः सैकत। शर्करिलो देशः शार्कर·। सिकतावान्। शर्करावान्[1]। सिकता देश· शर्करा देश इत्यभेदोपचारात्, यथा, कुन्तान् प्रवेशय यष्टीः प्रवेशयेति तद्वन्त उच्यन्ते।

[देशे लुबिलचौ च। पा० ५।२।१०५, स० ५।२।१५३। [1]wanting in Mss]

**दन्तुरः ॥११०॥**

दन्तादुरन्निपात्यत उन्नतदन्तार्थे ।

[ दन्त उन्नत उरच् । पा० ५।२।१०६, दन्तादुन्नतादुरच् । स० ५।२।१५४ ]

**ऊषादिभ्यो रः ॥१११॥**

ऊषादिभ्यो मत्वर्थे रो भवति । ऊषर । सुषिर । मुष्कर:[1] । मधुर । खर । मुखर । नखर । कुञ्जर । नगर । पाण्डुर । पासुरः । कच्छ्वा ह्रस्वत्वं च । कच्छुर । इतिशब्दस्य विवक्षानियमार्थत्वाद् ऊपवान् घट , मधुमान् वृक्ष , कुञ्जवान् गिरिरिति रो न भवति ।

[ ऊषसुषिमुष्कमधो र । पा० ५।२।१०७। रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् । वा० १ । नगाच्चेति वक्तव्यम् । भाष्यम् । ऊष-सुषि-मुष्क-मधु-बन्धु-नख-मुख-पासु-पाण्डुभ्यो र । ख-नग-सिन्धु-कुञ्जेभ्य संज्ञायाम् । कच्छ्वा ह्रस्वश्च । स० ५।६।१५५-१५७ । [1]MS has पुष्कर for मुष्कर . ]

**द्युद्रुभ्यां मः ॥११२॥** [पा० ५।२।१०८, स० ५।२।१५८]

द्युद्रुभ्या मत्वर्थे मो वा भवति । द्युम । द्रुमः । रूढित्वान्न[1] मतुप् ।

[ [1]रूढित्वात् । is found in commentaries ]

**केशादिभ्यो वः ॥११३॥**

केशादिभ्यो मत्वर्थे[1] वो वा भवति । केशवः केशवान् केशी केशिक । मणिव. मणिवान् । राजीवम् । कुररावम्[2] । इष्टकावम् । बिम्बावम् । अर्णसो लोपश्च [स० ५।२।१६०] । अर्णव । गाण्ड्यजकात् संज्ञायाम् । गाण्डीवम् गाण्डिवम् । अजकावम् अजकवम् ।

[ केशाद्वोऽन्यतरस्याम् । पा० ५।२।१०९ । वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानम् । वा० १ । अपर आह—वप्रकरणेऽन्येभ्योऽपि दृश्यत इति वक्तव्यम् । बिम्बावम् । कुररावम् । इष्टकावम् । भाष्यम् । केश-मणि-हिरण्य-राजी-कुररेष्टका-बिम्बेभ्यो व. । अर्णसो लोपश्च । गाण्ड्यजगाभ्यां सञ्ज्ञायाम् । स० ५।२।१५९-१६१ । गाण्ड्यजगात्संज्ञायाम् । पा० ५।२।११० । ह्रस्वादपि भवति । गाण्डिवं धनुरिति । तुल्या हि संहिता दीर्घह्रस्वयो । उभयथा च सूत्र प्रणीतम् । काशिका । The *Kāśikā* sanctions अजगवम् but not अजगावम्. Goyīcandra says: अजकावमपीष्टं चान्द्राणाम् TP 1019 [1]wanting in Ms ]

**मेधारथादिरः ॥११४॥**

आभ्या मत्वर्थ इरो वा भवति। मेधिर· मेधावी मेधावान्। रथीरः रथी रथिक. रथवान्।

[ मेधारथाभ्यामिरनिरचौ। पा० ५।२।१०९।३, मेधारथाभ्यामिरः। स० ५।२।१६२ ]

**काण्डाण्डादीरच् ॥११५॥**

आभ्या मत्वर्थ ईरज् वा भवति। काण्डीर· अण्डीर·। काण्डवान्। अण्डवान्।

[ काण्डाण्डादीरन्नीरचौ। पा० ५।२।१११, काण्डाण्डाभ्यामीरच्। स० ५।२।१६३ ]

**कृष्यादिभ्यो वलच् ॥११६॥**

कृष्यादिभ्यो वलज् वा भवति। कृषीवल। वले [ ५।२।१३५ ] इति दीर्घत्वम्। आसुतीवल। पर्षद्वल.। रजस्वला। भ्रातृवल। पुत्रवलः। उत्सङ्गवलः। दन्तशिखात् सज्ञायाम्। दन्तावलः। शिखावल.। विवक्षानियमात् क्वचिदेवैषा प्रयोग.। कृषिमत् क्षेत्रम्। रजस्वान् वायु·।

[ रज.कृष्यासुतिपरिषदो वलच्। दन्तशिखात्संज्ञायाम्। पा० ५।२।११२-३। वलच्प्रकरणेऽन्येभ्योऽपि दृश्यते। वा०१। भ्रातृवल. पुत्रवल उत्सङ्गवल.। भाष्यम्। कृष्यासुतिरज.परिषद्भ्रातृपुत्रोत्सङ्गेभ्यो वलच्। दन्तशिखाभ्यां संज्ञायाम्। स० ५।२।१६४-१६५ ]

**ज्योत्स्नातमिस्रोर्जस्विन्नूर्जस्वलमलीमसाः ॥११७॥** [स०५।२।१६६ ]

ज्योत्स्नादयो मत्वर्थे यथाविषयं वा निपात्यन्ते। ज्योत्स्ना चन्द्रप्रभा, अन्यत्र ज्योतिष्मती। तमिस्रा रात्रिः तमिस्र· पक्षः, अन्यत्र[1] तमस्वती गुहा। ऊर्ग् ऊर्जो वास्यास्तीत्यूर्जस्वी ऊर्जस्वल·। मलीमसो मलवान्।

[ ज्योत्स्ना-तमिस्रा-शृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसा.। पा० ५।२।११४. [1]wanting in Ms ]

**नावादिभ्य ष्ठन्** ॥११८॥

नौ इत्येवमादिभ्यो मत्वर्थे ठन् वा भवति। नाविक.॥ नौ। यवखद। कुमारी। करण।

[शिखादिभ्य इनिर्वाच्य इकन् यवखदादिषु। श्लो० वा० ५।२।११६, यवखद कुमारी नौ इत्येतेभ्य इकन्नेष्यते। काशिका। नौ-सभा-कुमारिका-करण-यवखदाभ्यष्ठन्। स० ५।२।१६७]

**व्रीह्याद्यत इनिश्च** ॥११९॥

व्रीह्यादिभ्योऽकारान्ताच्च मत्वर्थ इनिर्भवति, ठश्च वा। व्रीही व्रीहिकः व्रीहिमान्। अर्थस्यापि ग्रहणाच्छाली शालिक· शालिमान्। मायी मायिकः मायावान्। शीर्षी शीर्षिक· शीर्षवान्। अकारान्तात्। दण्डी दण्डिकः दण्डवान्। इतिशब्दस्य विवक्षानियमार्थत्वात् क्वचिन्न भवतः। पाचकवान् द्रव्यवान् धनवान्। उत्तमर्णे तु भवत·। धनी धनिकः। घञाद्यन्तात् क्वचिन्न भवत·। पाकवान् स्नेहवान् शब्दवान् प्रचयवान् स्वनवान्। क्वचिद् भवतः। भोगी भोगिक·। विजयी विजयिक·। तरी तरिक·। सयमी सयमिक·। जातिशब्दात् क्वचिन्न भवत। व्याघ्रवान् सिंहवान्। क्वचिद् भवतः। तण्डुली तण्डुलिक.। लजादिविषयेऽपि क्वचिन्न भवतः। सिघ्मलः। फेनिल। क्वचिद् भवत·। बीजी बीजिक.। पर्णी पर्णिकः। तुन्दी तुन्दिक·।

[अत इनिठनौ। व्रीह्यादिभ्यश्च। तुन्दादिभ्य इलच्च। पा० ५।२।११५-११७, व्रीहिशालिशीर्षमायाभ्य इनिश्च। अत.। धनादुत्तमर्णे। न द्रव्यादिभ्य.। कृद्भ्यश्चा-कार्य-गृह-दात्र-पोत्र-भोग-तर-विजय-संयमादिभ्य। जातेरतण्डुलादे। लजादि-विषये चाबीजपर्णपिण्डतुन्दोदरादिभ्य। स० ५।२।१६८-१७४। अशीर्षी अशीर्षिकः अशीर्षवान् इति चान्द्रा उदाहरन्ति। Goyīcandra under TP. 1020]

**नैकाचः** ॥१२०॥

अकारान्तादेकाच इनिठनौ न भवत·। स्ववान्। खवान्।

[१२०-१२१। एकाक्षरात् कृतो जाते सप्तम्यां च न तौ स्मृतौ। श्लो० वा० ५।२।११५। एकाचः। स० ५।२।१७५]

**सप्तम्याम्** ॥१२१॥ [स० ५।२।१७६]

सप्तम्यर्थेऽदन्तादिनिठनौ न भवतः। दण्डवद् गृहम्।

**एकगोपूर्वाट् ठन्** ॥१२२॥

एकपूर्वाद् गोपूर्वाच्च ठन् भवति। ऐकशतिक गौसहस्रिक। इति शब्दस्य विवक्षानियमार्थत्वादिह न भवति। एकद्रव्यवान्। अत इत्येव। गोविंशतिमान् ग्राम.। कथम् ऐकगविक· ? समासान्ते कृते भविष्यति। कथं गौशाकटिक ? शकटशब्दाद् भविष्यति।

[एकगोपूर्वाट्ठञ् नित्यम्। पा० ५।२।११८। एकगोपूर्वादनेकद्रव्याट् ठञ्। स० ५।२।१७७. Dharmadāsa does not discuss एकद्रव्यवत्त्वात् commented on in the *Kāśikā* ]

**निष्कादेः शतसहस्रात्** ॥१२३॥ [स० ५।२।१७८]

निष्कपूर्वाच्छतात् सहस्राच्च ठञ् भवति। नैष्कशतिक नैष्कसहस्रिक।

[शतसहस्रान्ताच्च निष्कात्। पा० ५।२।११९]

**नवयज्ञादिभ्यः** ॥१२४॥ [स० ५।२।१७९]

नवयज्ञादिभ्यष्ठञ् भवति। नावयज्ञिकः काल[1]। पाकयज्ञिको देशः। योऽपि यत्र वर्तते स तत्रास्त्येवेत्यनेनैव सिद्धम्।

[ठञ्प्रकरणे तदस्मिन् वर्तत इति नवयज्ञादिभ्य उपसख्यानम्। पा० ४।२।३५।१। वर्तत इति न वक्तव्यं यो हि यत्र वर्तते स तत्रास्त्येवेति। हृदयहारिणी। [1]Wanting in Ms ]

**चार्थरोगगर्हितात्प्राणिस्थादस्वाङ्गादिनिः** ॥१२५॥

चार्थवृत्ते· समासाद्रोगाद्गर्हिताच्च प्राणिस्थादस्वाङ्गान्मत्वर्थ इनिरेव भवति। कटकवलयिनी। ज्वरी। कुष्ठी। ककुदावर्ती। काकतालुकी। प्राणिस्थादिति किम् ? पुष्पफलवान् वृक्ष·। अस्वाङ्गादिति किम् ? स्तनकेशवती। अत इत्येव। चित्रललाटिकावती।

[ द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः । पा० ५।२।१२८ । प्राण्यङ्गान्नेष्यते । काशिका । द्वन्द्वरुग्गर्ह्यात् प्राणिन्यस्वाङ्गात् । जैनेन्द्र ४।१।८८ । द्वन्द्वोपतापगर्ह्या-त्प्राणिस्थादस्वाङ्गादिनि । स० ५।२।१८१ ]

**वातातीसारपिशाचानां कुक् च** ॥१२६॥ [स० ५।२।१८२]

वातादीनामिनिर्भवति कुक् चागम । वातकी । अतीसारकी । पिशाचकी ।

[ वातातिसाराभ्यां कुक् च । पा० ५।२।१२९ । पिशाचाच्चेति वक्तव्यम् । पिशाचकी वैश्रवण । भाष्यम् । ]

**वयसि पूरणात्** ॥१२७॥ [पा० ५।२।१३०, स० ५।२।१८३]

पूरणे यो विहितस्तदन्ताद्वयसि गम्यमान इनिरेव भवति । पञ्चमी बालकः । वयसीति किम् ? पञ्चमवान् ग्रामराग । 

**सुखादिभ्यः** ॥१२८॥ [ ०भ्य । पा० ५।२।१३१ ]

सुखादिभ्य इनिरेव भवति । सुखी दुःखी ॥ सुख । दुःख । तृप्र । कृच्छ्र । अस्र । कक्ष । अलीक । करुण । कृपण । सोढ[1] । प्रतीप । हल । माला क्षेपे । बलाद्बाहूरुपूर्वपदात् । बाहुबली । ऊरुबली । सर्वादेः । सर्वबीजी सर्वधनी सर्वकेशी । कथम् अर्थी ? अर्थनमर्थः । सोऽस्यास्तीत्यर्थी अर्थिकः । प्रत्यर्थात्प्रत्यर्थिक[2] । धान्येनार्थो धान्यार्थ सोऽस्यास्ति धान्यार्थी ।

[ इनिप्रकरणे बलाद्बाहूरुपूर्वपदादुपसंख्यानम् । सर्वादेश्च । अर्थाच्चासन्निहिते तदन्ताच्च । पा० ५।२।१३५।१-४ । सुख-दुःख-तृप्र-कृच्छ्रा-ऽश्र-कक्ष-कृपण-सोढ-प्रतीप-प्रणय-हुला-ऽलीकेभ्य । मालाया क्षेपे । बलाद्बाहूरुपूर्वात् । सर्वादेर्धनबीजकेशात् । अर्थाद् याच्ञायाम् । तदन्ताच्च । स० ५।२।१८४-१८९ । [1]Ms has सोटा. Grammar generally has सोढ. Vardhamāna has शोफ. [2]Should we read प्रत्यर्थी प्रत्यर्थिक. ? ]

**धर्मशीलवर्णान्तात्** ॥१२९॥ [स० ५।२।१९०, ०न्ताच्च । पा० ५।२।१३२ ]

धर्माद्यन्तान्मत्वर्थ इनिरेव भवति । ब्राह्मणधर्मी । ब्राह्मणशीली । ब्राह्मणवर्णी ।

**हस्तदन्ताज्जातौ** ॥१३०॥

एताभ्या जाताविनिरेव भवति। हस्ती दन्ती। जाताविति किम्? हस्तवान् दन्तवान्।

[हस्ताज्जातौ। पा० ५।२।१३३। हस्तकरदन्तेभ्यो जातौ। स० ५।२।१९१. Curiously enough Jainendra also has हस्तदन्तकराज्जातौ IV I 97]

**वर्णाद् ब्रह्मचारिणि** ॥१३१॥ [पा०५।२।१३४,स०५।२।१९२]

वर्णाद् ब्रह्मचारिण्यभिधेय इनिरेव भवति। वर्णी। ब्रह्मचारिणीति किम्? वर्णवान्।

**पुष्करादिभ्यो देशे** ॥१३२॥ [पा० ५।२।१३५]

पुष्करादिभ्यो देश इनिरेव भवति। पुष्करिणी। पद्मिनी। देश इति किम्? पुष्करवान् हस्ती॥ पुष्कर। पद्म। उत्पल। तमाल। कुमुद। नड। कपित्थ। बिस। मृणाल। कर्दम। शालूक। करीष। शिरीष। यवास[1]। हिरण्य।

[पुष्कर-पद्मोत्पल-तमाल-कुमुद-कैरव-नलिन-हिरण्य-कर्दम-करीष-शिरीष-कपित्थ-तट-तरङ्ग-कल्लोल-शालूकेभ्यो देशे। कमल-सरोरुह-सरोजाऽम्भोज-राजीवा-ऽरविन्द-पङ्कजा-ऽब्ज-पुटक-नालीक-मृणाल-बिस-तामरस-यवास-मन्मान्तेभ्यो नाम्नि। स० ५।२।१९३-१९४। [1]यवष Ms. यवाष &c]

**मन्मान् नाम्नि** ॥१३३॥

मनन्तान्मान्ताच्च संज्ञायामिनिर्भवति। प्रथिमिनी, दामिनी। सोमिनी, धूमिनी[1], होमिनी। नाम्नीति किम्? सोमवान्।

[सञ्ज्ञायां मन्माभ्याम्। पा० ५।२।१३७। ०मन्मान्तेभ्यो नाम्नि। स० ५।२।१९४। [1]धिमिनी Ms धूमिनीकथा is found in the *Daśa-kumāracarita*]

**शिखादिभ्यो वा** ॥१३४॥

शिखादिभ्यो मत्वर्थ इनिर्वा भवति। शिखी शिखावान्। माली मालावान्॥ शिखा। माला। मेखला। वीणा। संज्ञा। वडवा। अष्टका।

बलाका। पताका। कर्मन्। वर्मन्। बल। उत्साह। उद्यम[1]। चूडा। दल[2]। कुल। मूल। आयाम। व्यायाम। प्रयाम[3]। उपयाम। आरोह। अवरोह। बालादिभ्य पुनर्विधानादिनिष्ठनं बाधते, वावचनान्न मतुपम्।

[बलादिभ्यो मतुबन्यतरस्याम्। पा० ५।२।१३६, शिखा-शाखा-केका-माला-मेखला-बलाका-पताका-ऽष्टका-चूडा-वडवा-घृणा-वीणा-जरा-गदा-संज्ञा-सूना-मनीषा-दंष्ट्राभ्यो वा। बल-कुलोत्साहोदासायासायाम-प्रयाम-व्यायामोपयामारोहा-ऽवरोह-परिणाहेभ्य। उद्यम-स्तबका-ऽल-फल-निचुल-मुकुल-मान-व्रत-कर्म-चर्म-वर्म-धर्म-धन्वभ्यश्च। स० ५।१।१९५-१९७। [1]उद्दाम Ms [2]Bhoja has अल, Vardhamāna उल. [3]Should we read प्रयास?]

**रूपादाहतप्रशंसयोर्यप्** ॥ १३५ ॥ [पा० ५।२।१२०, स० ५।२।१९८]

रूपादाहते प्रशस्ये च यप् परो भवति। रूप्य कार्षापणः[1]। रूप्या गौः। आहतप्रशस्ययोरिति किम्? रूपवान्।

[[1]This is wanting in Mss]

**हिमादिभ्यः** ॥१३६॥ [स० ५।२।१९९]

हिमादिभ्यो यब् वा भवति। हिम्यः पर्वतः हिमवान्। गुण्यो ब्राह्मणः गुणवान्।

[यप्प्रकरणेऽन्येभ्योऽपि दृश्यते। पा० ५।२।१२०।१। हिम्या. पर्वता.। गुण्या ब्राह्मणा.। भाष्यम्। One expected हिमगुणादिभ्य· in the Sarasvatīkanthābharana]

**असमायामेधास्रजो विनिः** ॥१३७॥ [पा० ५।२।१२१, स० ५।२।२००]

असन्तान्मायादिभ्यश्च विनिर्भवति वा। यशस्वी तपस्वी मायावी मेधावी स्रग्वी। यशस्वानित्यादि।

[मतुप् सर्वत्र समुच्चीयत एव। काशिका। But this is very doubtful as is shown by the next rule बहुल छन्दसि। पा० ५।२।१२२. मनस्वान् had already become obsolete in Yāska's time, so he paraphrases मनस्वान् by मनस्वी.]

**आमयावी** ॥१३८॥

आमयान्मत्वर्थे विनिर्दीर्घत्व च निपात्यते। आमयावी।

[ सर्वत्रामयस्य। पा० ५।२।१२२।२, आमयाद्दीर्घश्च। स० ५।२।२०१ ]

**वृन्दादारकन्** ॥१३९॥ [ स० ५।२।२०२ ]

वृन्दादारकन् वा भवति। वृन्दारक, वृन्दी, वृन्दवान्।

[ १३९-१४०। शृङ्गवृन्दाभ्यामारकन्। पा० ५।२।१२२।३ ]

**शृङ्गात्** ॥१४०॥ [ स० ५।२।२०३ ]

शृङ्गादारकन् वा भवति। शृङ्गारक, शृङ्गी, शृङ्गवान्।

**फलबर्हमलाच्चेनच्** ॥१४१॥ [ स० ५।२।२०४ ]

फलादिभ्य· शृङ्गाच्चेनज् वा भवति। फलिन। बर्हिणः। मलिन·। शृङ्गिण·। फलवानित्यादि।

[ फलबर्हाभ्यामिनच्। पा० ५।२।१२२।४, ०मलिनमलीमसा। पा० ५।२।११४ ]

**पर्वमरुद्भ्यां तप्** ॥ १४२ ॥ [ पा० ५।२।१२२।१०, स० ५।२।२०५ ]

एताभ्या मत्वर्थे तब् वा भवति। पर्वत पर्ववान्। मरुत्तः मरुत्वान्।

**स्वामिन्नीशे** ॥१४३॥ [ स० ५।२।२०६ ]

स्वामिन्नितीश्वरे निपात्यते। स्ववानन्यः।

[ स्वामिन्नैश्वर्ये। पा० ५।२।१२६ ]

**गोमिन् पूज्ये** ॥१४४॥ [ स० ५।२।२०७ ]

गोमिन्निति पूज्ये निपात्यते। गोमानन्य·।

[ ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः। पा० ५।२।११४, गोम्यर्च्ये। जै० ४।१।६७ ]

**वाचो ग्मिनिः** ॥१४५॥ [पा० ५।२।१२४, स० ५।२।२०८]

वाचो मत्वर्थे ग्मिनिर्भवति। वाग्ग्मी।

**आलजाटचौ कुत्सायाम्** ॥१४६॥ [स० ५।२।२०९]

वाच कुत्साया गम्यमानायामालजाटचौ भवतः। वाचाल· वाचाटः।

[आलजाटचौ बहुभाषिणि। पा० ५।२।१२५। कुत्सित इति वक्तव्यम्। यो हि सम्यग् बहु भाषते वाग्मीत्येव स भवति। भाष्यम्।]

**अर्शआदिभ्योऽच्** ॥१४७॥ [पा० ५।२।१२७]

अर्श प्रभृतिभ्यो मत्वर्थेऽज् भवति। अर्शसः। उरसः॥ अर्शस्। उरस्। तुन्द। चतुर। पलित। जटा। घाटा। अभ्र। अम्ल[1]। लवण। स्वाङ्गाद्धीनात्। वर्णात्। आकृतिगणश्चायम्। यत्राभिन्नेन शब्देन तद्वतोऽभिधानं तत्सर्वमिह द्रष्टव्यम् [काशिका]।

[अर्शस्-उरश्-चतुर-तुन्द-पलिता-ऽभ्र-जटा-घटा-ऽम्ल-लवणादिभ्योऽच्। स्वाङ्गाद्धीनात्। वर्णात्। स० ५।२।२१०-२१२। J Śak etc have अभ्रादि.
[1]Ms has आम्ल.]

**तुण्डिवलिवटेर्भः** ॥ १४८ ॥ [०न्दि०। पा० ५।२।१३९, स० ५।२।२१३]

तुण्ड्यादिभ्यो मत्वर्थे भ परो भवति। तुण्डिभः। वलिभ.। वटिभः। वलिन इति पामादिपाठात् [१०४]।

[J Śak and Hc also have तुण्डि.]

**कंशंभ्याम्** ॥१४९॥ [स० ५।२।२१४]

कम् शम् इत्येताभ्या मकारान्ताभ्या भो भवति। कम्भः शम्भः।

[१४९-१५१। कंशंभ्यां बभयुस्तितुतयसः। पा० ५।२।१३८]

**तितुबयस्ताः** ॥१५०॥ [स० ५।२।२१५]

एते कंशंभ्या परे भवन्ति। कन्तिः शन्तिः। कन्तुः शन्तु.। कम्बः शम्बः। कंय. शंयः। कन्त. शन्तः।

**युस्** ॥१५१॥ [स० ५।२।२१६]

कंशंभ्या युस् भवति। कंयुः शंयुः।

**ऊर्णाहंशुभंभ्यः** ॥१५२॥ [स० ५।२।२१७]

ऊर्णादिभ्यो युस् भवति। ऊर्णायु॰ अहंयु॰ शुभयुः।

[ **ऊर्णाया युस्। अहंशुभमोर्युस्। पा० ५।२।१२३, १४०** ]

**सूक्तसाम्नोश्छः** ॥१५३॥ [स० ५।२।२१८]

सूक्तसाम्नोरभिधेययोर्मत्वर्थे छो भवति। अच्छावाकीयम्। अस्यवामीयं सूक्तम्। अनुकरणशब्दाना स्वरूपार्थत्वान्नैवेयं विभक्तिः। यज्ञायज्ञीयं साम।

[ **मतौ छ सूक्तसाम्नो। पा० ५।२।५९** ]

**अध्यायानुवाकयोर्लुग् वा** ॥१५४॥ [स० ५।२।२१९]

अध्यायानुवाकयोरभिधेययोर्मत्वर्थे छो भवति, लुक् चास्य वा। गर्दभाण्डोऽध्याय. गर्दभाण्डीयः। पलितस्तम्भोऽनुवाक पलितस्तम्भीयः।

[ **अध्यायानुवाकयोर्लुक्। पा० ५।२।६०। अध्यायानुवाकाभ्यां वा लुक्। वा० १** ]

**विमुक्तादिभ्योऽण्** ॥१५५॥ [पा० ५।२।६१]

विमुक्तादिभ्योऽध्यायानुवाकयोर्मत्वर्थेऽण् भवति। वैमुक्तः। दैवासुरः॥ विमुक्त। देवासुर। रक्षोऽसुर। परिसारक। उपसद्। वसुमन्तु[1]। पत्नीवन्तु। दशार्ह[2]। सत्वन्तु। दशार्ण। वयस्। हविर्धान। महित्री[3]। सोमापूषन्। इडा। अग्नाविष्णू। वृत्रहन्। अस्यहत्य।

[**विमुक्त-देवासुर-रक्षोऽसुरा-ऽस्यहत्य-परिसारकोपसत्-सत्वद्-इडोवंशी-दशार्ण-दशार्हेभ्योऽण्। वसुमन्तु-पत्नीवन्तु-बर्हवन्तु-वृत्रहन्तृ-वय -पतत्रि-सुपर्ण-सोमापूषन्-हविर्धाना-ऽग्नाविष्णुभ्यश्च। स० ५।२।२२०-२२१।** [1]**वसुद** Ms. [2]**दशान्तु** Ms. [3]**सहित्री** Ms ]

**गोषदादिभ्यो वुन्** ॥१५६॥ [पा० ५।२।६२]

गोषदादिभ्योऽध्यायानुवाकयोर्मत्वर्थे वुन् भवति। गोषदकः। इषेत्वकः॥ गोषद्। इषेत्वा। मातरिश्वन्। देवस्यत्वा। देवीराप। कृष्णोऽस्याखरेष्ठ[1]। देवींधिय। रक्षोहण। अञ्जन। प्रतूर्त। कृशानु।

[ गोषद्-इषेत्वा-कृष्णोऽस्या-देवीराप-देवस्यत्वा-देवीधिय-तद्देवेभ्यो वुन्। प्रतूर्त-मातरिश्वन्-सहस्रशीर्षा-वाचस्पत-कृशानु-रक्षोहण-स्वाहाप्राणेभ्यश्च। स० ५।२।२२२-२२३। 'ष्ठा in Ms is due to the influence of the well-known आपो हि ष्ठा मयोभुव ]

निद्रातन्द्राश्रद्धादयाहृदयाद् वालुच् ॥१५७॥

निद्रादिभ्यो मत्वर्थ आलुज् वा भवति। निद्रालु। तन्द्रालु। श्रद्धालु। दयालु। हृदयालु। निद्रावानित्यादि।

गोमन्तोऽस्मिन् देशे सन्तीति मतुप् कस्मान्न भवति? स्वात्मनि क्रियाविरोधात् न हि मतुब्विधानकाले मतुबन्ता प्रकृतिरस्ति, या पुनरस्ति ततो भवत्येव। दण्डिमती शालेति।

[ स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्। पा० ३।२।१५८, हृदयाच्चालुरन्यतरस्याम्। ५।२।१२२।५। अथ मत्वर्थीयान्मत्वर्थीयेन भवितव्यम्? न भवितव्यम्। किं कारणम्? अर्थगत्यर्थं शब्दप्रयोग। अर्थं संप्रत्याययिष्यामीति शब्द प्रयुज्यते। तत्रैकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम्। किं कारणम्? उक्तार्थानामप्रयोग इति। न तर्हीदानीमिदं भवति–दण्डिमती शाला हस्तिमत्युपत्यकेति? भवति। अर्थान्तरे वृत्तादर्थान्तरे वृत्ति। षष्ठ्यर्थे वा वृत्त सप्तम्यर्थे वर्तते सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्तते॥ अथ मत्वन्तान्मतुपा भवितव्यम्—गोमन्तोऽस्य सन्ति यवमन्तोऽस्य सन्तीति? न भवितव्यम्। किं कारणम्? यस्य गोमन्त सन्ति गावोऽपि तस्य सन्ति तत्रोक्तो गोभिरभिसम्बन्धे प्रत्यय इति कृत्वा तद्धितो न भविष्यति। न तर्हीदानीमिदं भवति–दण्डिमती शाला हस्तिमत्युपत्यकेति। भवति। अर्थान्तरे वृत्तादर्थान्तरे वृत्तिर्भविष्यति। षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे वर्तते सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्तते॥ इहापि सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्तते षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे वर्तते। अन्यथाजातीयक खल्वपि गोभिरभिसम्बन्धे प्रत्ययोऽन्यथाजातीयकस्तद्वता। येनैव खल्वपि हेतुनैतद्वाक्यं भवति गोमन्तोऽस्य सन्ति यवमन्तोऽस्य सन्तीति तेनैव हेतुना वृत्तिरपि प्राप्नोति। तस्मान्मत्वर्थीयान्मतुबादे प्रतिषेधो वक्तव्य। त चापि ब्रुवता समानवृत्तौ सरूप इति वक्तव्यम्। भवति हि दण्डिमती शाला हस्तिमत्युपत्यकेति॥

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थीयः।
सरूप प्रत्ययो नेष्ट सनन्तान्न सनिष्यते॥ भाष्यम् ५।२।९४

निद्रातन्द्राश्रद्धादयाहृदयेभ्यो वालुच्। स० ५।२।२२१ ]

**शीतोष्णतृप्रं न सहते ॥१५८॥**

शीतादिभ्यो द्वितीयान्तेभ्यो न सहत इत्यस्मिन्नर्थे आलुज् भवति। शीतालु उष्णालु. तृप्रालुः ।

[ शीतोष्णतृप्रेभ्यस्तन्न सहते। पा० ५।२।१२२।६, स० ५।२।२२५ ]

**हिमं सहते चेलुः ॥१५९॥**

हिमाद् द्वितीयान्तात् सहत इत्यस्मिन्नर्थे चेलुर्भवति । हिमेलु ।

[ हिमाच्चेलु । पा० ५।२।१२२।७, हिमाच्चेलुर्वक्तव्यस्तन्न सहत इत्येतस्मिन्नर्थे। भाष्यम्। हिमात् सहते चेलु । स० ५।२।२२६। हिमादेलु सहे। जै० ३।४।१८५, शा० ३।३।५०, है० ७।१।९० ]

**बलवातं चूलः ॥१६०॥**

बलाद् वाताच्च द्वितीयान्तात् सहत इत्यस्मिन्नर्थे चूलो भवति। बलूल वातूल ।

[ बलाच्चोल·। वातात्समूहे च। पा० ५।२।१२२।८-९, बलवाताभ्यां चूलः। स० ५।२।२२७ ]

इति चान्द्रे व्याकरणे चतुर्थस्याध्यायस्य द्वितीय पाद· समाप्तः ।

**षष्ठ्या व्याश्रये तस् ॥ १ ॥** [स० ५।३।१]

नानापक्षाश्रये षष्ठ्यन्तात् तस् परो भवति वा। देवा अर्जुनतोऽभवन्। आदित्या· कर्णतोऽभवन्[1]। देवा अर्जुनस्य पक्षेऽभवन्। व्याश्रय इति किम्? वृक्षस्य शाखा ।

[ षष्ठ्या व्याश्रये। पा० ५।४।४८. [1]This is the reading in the Kāś , Hrdayahārinī etc Hc, however, reads आदित्यः कर्णतोऽभवत् and explains· अर्जुनकर्णयोर्विवदमानयोरर्जुनस्य पक्षे देवाः कर्णस्य पक्ष आदित्योऽभवदित्यर्थः ]

**रोगात् प्रतीकारे** ॥ २ ॥ [स० ५।३।२]

रोगवाचिनः षष्ठ्यन्तात् प्रतीकारे गम्यमाने तस् वा भवति। प्रवाहिकातः प्रतिकुरु। प्रवाहिकायाः प्रतिकुरु। प्रतीकार इति किम्? प्रवाहिकायाः कोपः।

[रोगाच्चापनयने। पा० ५।४।४९]

**क्षेपातिग्रहाव्यथनेष्वकर्तरि तृतीयायाः** ॥ ३ ॥

अकर्तरि विहिता या तृतीया तदन्तात् क्षेपादिषु गम्यमानेषु तस् वा भवति। वृत्ततः क्षिप्तः, वृत्तेन क्षिप्तः। वृत्ततोऽतिगृह्यते, वृत्तेनातिगृह्यते। अन्यानतिक्रम्य गृह्यते, अतिशयेन वा गृह्यत इत्यर्थः। वृत्ततो न व्यथते, वृत्तेन न व्यथते। न चलतीत्यर्थः। अकर्तरीति किम्? देवदत्तेन क्षिप्तः।

[अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः। पा० ५।४।४६, स० ५।३।३]

**हीयमानपापयुक्तात्** ॥ ४ ॥ [स० ५।३।४]

हीयमानेन पापेन च युक्तात् तृतीयान्तात् तस् वा भवति। वृत्ततो हीयते, वृत्तेन हीयते। वृत्ततः पापम्, वृत्तेन पापम्। तत्त्वाख्यानार्थं वचनम्।

[हीयमानपापयोगाच्च। पा० ५।४।४७]

**प्रतिना पञ्चम्याः** ॥ ५ ॥ [स० ५।३।५]

प्रतिना योगे पञ्चम्यन्तात् तस् वा भवति। प्रद्युम्नो वासुदेवतः प्रति, वासुदेवात् प्रति।

[प्रतियोगे पञ्चम्यास्तसिः। पा० ५।४।४४]

**अवधावह्राग्रुहोः** ॥ ६ ॥

अवधौ या पञ्चमी तदन्तात् तस् वा भवति स चेदवधिर्ह्राग्रुहोः सम्बन्धी न भवति। ग्रामत आगच्छति, ग्रामादागच्छति। चौरतो बिभेति, चौरेभ्यो बिभेति[1]। अह्राग्रुहोरिति किम्? सार्थाद्धीयते, सार्थाद्धीनः। पर्वतादवरोहति। ककारः किम्? भूमित उज्जिहीते।

[ अपादाने चाहीयरुहो॰ । पा० ५।४।४५, अपादाने चाहाग्रुहो. । स०५।३।६ । ¹बिभेति is not found in Ms ]

**सर्वादिबहुभ्योऽद्व्यादिभ्यः ॥ ७ ॥**

सर्वादिभ्यो द्व्यादिवर्जितेभ्यो बहुभ्यश्च पञ्चम्यन्तेभ्यस्तस् वा भवति। सर्वतः सर्वस्मात्, तत तस्मात्। बहुत. बहुभ्य॰। पूर्वेण सिद्धे हाग्रुहार्थं वचनम्। अद्व्यादिभ्य इति किम् ? द्वाभ्याम्। कथं त्वत्तो मत्तो युष्मत्तोऽस्मत्त इति ? अत्रधात्रहाग्रुहो [६] इति तस् भविष्यति।

[ किंसर्वनामबहुभ्योऽद्व्यादिभ्य । पञ्चम्यास्तसिल्। पा० ५।३।२,७। अद्व्यादिसर्वनामकिंभ्य पञ्चम्या । स० ५।३।९ ]

**कुतोऽत इतः ॥ ८ ॥**

किम पञ्चम्यन्तात्तस् कुत्वं च निपात्यते वा, एतदोऽश्, इदम इश्भाव। कुतः कस्मात्। अत एतस्मात्। इत अस्मात्। कथम् अभितः परित॰ इति ? तस्योगे द्वितीयाभिधानात् [२।१।५२] सिद्धम्।

[ कुतिहो। पा० ७।२।१०४, एतदोऽश्। इदम इश्। पा० ५।३।५,३। तेष्विदम इश्। एतदोऽश्। किम कु । स० ५।३।१५-१७ ]

**आद्यादिभ्यः ॥ ९ ॥**

आद्यादिभ्यस्तस् वा भवति। आदौ आदित॰ मध्यत अन्ततः पृष्ठतः पार्श्वतः मुखत॰।

[ तसिप्रकरण आद्यादिभ्य उपसंख्यानम्। पा० ५।४।४४।१, तृतीयासप्तमीभ्यां चादि-मध्यान्ताग्र-पक्ष-पार्श्व-पृष्ठ-मुख-सर्व-विश्वोभयाऽन्य-पूर्व-यत्-तद्-एकेदं-प्रमाणादिभ्यः। स० ५।३।८ ]

**सप्तम्यास्त्रल् ॥ १० ॥** [पा० ५।३।१०, स० ५।३।११]

सर्वादिभ्यो बहुभ्यो द्व्यादिवर्जितेभ्य. सप्तम्यन्तेभ्यस्त्रल् वा भवति। सर्वत्र सर्वस्मिन्। यत्र यस्मिन्। बहुत्र बहुषु। अद्व्यादिभ्य इत्येव। द्वयोः त्वयि मयि।

**क्व कुत्रेहात्र ॥ ११ ॥**

किमः सप्तम्यन्तस्य क्व कुत्रेति च वा निपात्यते, इदम इहेति, एतदोऽत्रेति ।

[ किमोऽत् । (कुतिहोः ।) इदमो ह । (इदम इश् ।) सप्तम्यास्त्रल् । (एतदोऽश् ।) पा० ५।३।१२, ११, १० । सप्तम्यास्त्रल् । किमोऽत् । क्वाति । इदमो हः । एतदोऽश् । स० ५।३।११, १३, १८, १२, १६ ]

**भवद्दीर्घायुरायुष्मद्देवानाम्प्रियैस्तेऽन्याभ्यश्च ॥ १२ ॥** [स० ५।३।१४]

भवदादिभिर्योगे ते तसादयोऽन्याभ्योऽपि विभक्तिभ्यो वा भवन्ति । स भवान्, ततो भवान्, तत्र भवान् । तं भवन्तम्, ततो भवन्तम्, तत्र भवन्तम् तेन भवता, ततो भवता, तत्र भवता । तस्मै भवते, ततो भवते, तत्र भवते । तस्य भवत, ततो भवत, तत्र भवत । एवं स दीर्घायु, स आयुष्मन्, स देवानाम्प्रिय इति सर्वत्र योज्यम् । एवं को भवान् कुतो भवानित्यादि । एवमयं भवान् इतो भवान् इह भवानित्यादि ।

[ इतराभ्योऽपि दृश्यन्ते । पा० ५।३।१४ । भवदादिभिर्योग इति वक्तव्यम् । ...भवान् दीर्घायु देवानाम्प्रिय आयुष्मानिति । भाष्यम् । ]

**सर्वैकान्यकियत्तदः काले दा ॥ १३ ॥** [पा० ५।३।१५]

एभ्यः काले वर्तमानेभ्य सप्तम्यन्तेभ्यो दा वा भवति । सर्वस्मिन् काले सर्वदा । एकदा अन्यदा कदा यदा तदा । काल इति किम्? सर्वत्र देशे ।

[ एकान्यकियत्तद्भ्य सप्तम्या काले दा । सर्वात् स चास्य वा । स० ५।३।१९-२० ]

**सदाधुनेदानीं तदानीम् ॥ १४ ॥**

एते शब्दा निपात्यन्ते । सर्वस्मिन् काले सदा । अस्मिन् काले अधुना, इदानीं च । तस्मिन् काले तदानीम् ।

[ इदमो र्हिल् । अधुना । दानी च । तदो दा च । पा० ५।३।१६-१९, तदो दानीम् । इदम इश् च । अधुना च । स० ५।३।२१-२३ ]

**कियदन्यादनद्यतने र्हिल् वा ॥ १५ ॥**

किमादिभ्योऽनद्यतनवृत्तिभ्यः सप्तम्यन्तेभ्यो र्हिल् वा भवति। कर्हि कदा। यर्हि यदा। अन्यर्हि अन्यदा।

[अनद्यतने र्हिलन्यतरस्याम्। पा० ५।३।२१, कियत्तदेतदन्येभ्योऽनद्यतने र्हिल् वा। स० ५।३।२५]

**तर्ह्येतर्हि सद्यः परेद्यवि ॥ १६ ॥**

तर्ह्यादय शब्दाः सप्तम्यन्ताना तदादीना कालवृत्तीना वा निपात्यन्ते। तस्मिन् काले तर्हि। एतस्मिन् काले एतर्हि। समानेऽहनि सद्यः। परस्मिन्नहनि परेद्यवि। अद्य परुत् परार्यैषम [४।२।२१, ३।२।७८, १५] इति निपातनात् सिद्धम्।

[अनद्यतने र्हिलन्यतरस्याम्। इदमोर्हिल्। सद्य परुत् परार्यैषम परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्यु। पा० ५।३।२१,१६, २२। कियत्तत्..। एतश्चेदम.। द्यश्चाहन्यश्च। समानस्य द्य. सश्च। पूर्वान्तरपरतराभ्यामेद्यवि परश्च। आरि. सवत्सरे। पूर्वादुत्त। परात्। इदम समसणिश्च। स० ५।३।२४-२७,३०-३४]

**पूर्वान्यान्यतरेतरापराधरोत्तरादेद्युस् ॥ १७ ॥** [०त्तरेभ्य०। स० ५।३।३०]

पूर्वादिभ्यः कालवृत्तिभ्य सप्तम्यन्तेभ्य एद्युस् वा भवति। पूर्वस्मिन्नहनि पूर्वेद्युः। अन्यस्मिन्नहनि अन्येद्युः। अन्यतरस्मिन्नहनि अन्यतरेद्यु.। अपरस्मिन्नहनि अपरेद्युः। अधरस्मिन्नहनि अधरेद्युः। उत्तरस्मिन्नहनि उत्तरेद्युः।

[पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच्। पा० ५।३।२२।६]

**उभयाद् द्युश्च ॥ १८ ॥** [स० ५।३।२९]

उभयात् कालवाचिनः सप्तम्यन्ताद् द्युस् वा भवति, एद्युस् च। उभयस्मिन्नहनि उभयद्युः, उभयेद्यु।

[द्युश्चोभयात्। पा० ५।३।२२।७]

**प्रकारे थाल्** ॥ १९ ॥

सर्वादिबहुभ्यो विशेषे[1] थाल् भवति। सर्वेण प्रकारेण सर्वथा। यथा, तथा। कथमि लिट् [१।३।१०९] इति कथम्। इत्थम्भूतेषु [२।१।५४] इति इत्थम्।

[ प्रकारवचने थाल्। इदमस्थमु । किमश्च। पा० ५।३।२३-२५, तृतीयायाः प्रकारे थमिच। किम । सर्वोभयान्येतरापरयत्तदादिभ्यस्थाल्। स० ५।३।३५-३७। [1]सामान्यस्य विशेषो भेदक प्रकार । काशिका ]

**धा संख्यायाः** ॥ २० ॥

संख्यावाचिन प्रकारे धा परो भवति। द्वाभ्या प्रकाराभ्या द्वौ वा प्रकारौ करोति द्विधा करोति, बहुधा करोति। एकं राशिं पञ्चप्रकारं करोति पञ्चधा करोति। पञ्चप्रकारमेकप्रकारं करोति एकधा करोति।

[ संख्याया विधार्थे धा। पा० ५।३।४२। विंधयुक्तगताश्च प्रकारे भवन्ति। भाष्यम्। क्रियाप्रकारे धा संख्याया.। स० ५।३।३८। अधिकरणविचाले च। पा० ५।३।४३, स० ५।३।३९ ]

**षोढा वा** ॥ २१ ॥ [स० ५।३।४०]

षोढेति वा निपात्यते। षोढा षड्ढा।

[ ( षष उत्वं दतृदशधासूत्तरपदादे. ष्टुत्व च। ) धासु वा। पा०६।३।१०९।४]

**ऐकध्यम्** ॥ २२ ॥

एकात् प्रकारे ध्यमुञ् वा निपात्यते। ऐकध्यं करोति एकधा करोति।

[एकाद्धो ध्यमुञन्यतरस्याम्। पा० ५।३।४४। एकाद् ध्यमुञ्। स० ५।३।४१]

**द्वित्रेर्धमुञ्** ॥ २३ ॥

द्वित्रिभ्या प्रकारे धमुञ् वा भवति। द्वैधम् त्रैधम्। द्विधा त्रिधा।

[ द्वित्र्योश्च धमुञ्। पा० ५।३।४५। द्वित्रिभ्या धमुञ्। स० ५।३।४२ ]

**एधा** ॥ २४ ॥

द्वित्रिभ्या प्रकारे एधा भवति। द्वेधा त्रेधा।

[ एधाच्च। पा० ५।३।४६, स० ५।३।४३ ]

तद्वति धण् ॥ २५ ॥ [स० ५।३।४४]

प्रकारवति द्वित्रिभ्या धण् भवति । द्वैधानि त्रैधानि ।

[ धमुञन्तात् स्वार्थे डदर्शनम् । पा० ५।३।४५।१ ]

जातीयर् ॥ २६ ॥

प्रकारवति तत्सामान्यवाचिन· शब्दाज्जातीयर् भवति । पटुजातीयः मृदुजातीय ।

[ प्रकारवचने जातीयर् । पा० ५।३।६९ । सामान्यस्य भेदको विशेषः प्रकार· । . प्रकारवति चाय प्रत्यय । काशिका । प्रकारवति जातीय । स०५।३।४५]

स्थूलादिभ्यः कन् ॥ २७ ॥

स्थूलादिभ्य प्रकारवति कन् भवति । स्थूलकः । अणुक· ॥ स्थूल । अणु[1] माषेपु । कृष्ण तिलेषु । यव व्रीहिषु । इक्षुतिलवाव्यकालावदात सुरायाम्[2] । गोमूत्र आच्छादने । सुरा अहौ । जीर्ण शालिपु । पत्त्रमूले समस्त-व्यस्ते । कुमारीपुत्र । कुमारीश्वशुर । मणि । चञ्चत् । बृहत् ।

[ स्थूलादिभ्य प्रकारवचने कन् । पा० ५।४।३ । कन्प्रकरणे चञ्चद्बृहतो-रुपसंख्यानम् । वा० १ । स्थूलेषु-मणि-मधु-धान्य-तिल-काल-पुण्ड्रैरण्ड-चण्ड-चञ्चद्-बृहद-महद्भ्य· कन् । कुमार्यां पुत्रश्वशुराभ्याम् । पत्त्रमूलाद् व्यस्ताच्च । अवदाता-त्सुरायाम् । सुराया अहौ । गोमूत्रादाच्छादने । जीर्णाच्छालिषु । यवाद् व्रीहिषु । कृष्णात् तिलेषु । अणोर्माषेषु । माषात् परिमाणे । स० ५।३।४६-५६ । [1]अणु । अणु माषेषु । Ms [2]वाव्य GM , पाद्य Kāś , वाद्य Kāś Ms , Hc वाव्या Goyīcandra ]

दिक्शब्दाद्दिग्देशकालार्थात् सप्तमीपञ्चमीप्रथमाभ्योऽस्तातिः ॥ २८ ॥ [स० ५।३।५७]

दिशि प्रसिद्धाद् दिग्देशकालेषु वर्तमानात् सप्तमीपञ्चमीप्रथमान्ताद् अस्ताति· परो वा भवति । पूर्वस्या दिशि वसति पुरस्ताद् वसति । पूर्वस्या दिश आगत पुरस्तादागत· । पूर्वा दिग् रमणीया पुरस्ताद् रमणी-यम् । पूर्वस्मिन् देशे काले वा वसति पुरस्ताद् वसति । पुरस्तादागत· ।

पुरस्ताद् रमणीयम्। दिक्शब्दादिति किम्? ऐन्द्र्या दिशि वसति। दिग्देश-कालार्थादिति किम्? पूर्वस्मिन् गुरौ वसति। सप्तमीपञ्चमीप्रथमाभ्य इति किम्? पूर्वं ग्रामं गतः। दिक्शब्दसम्बन्धाद्दिगादीना सप्तम्यादीना च परस्परासम्बन्ध इति यथासंख्य नास्ति।

[दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्ताति· । पा० ५।३।२७]

**अञ्चो लुक्** ॥ २९ ॥ [स० ५।३।५८। अञ्चेर्लुक्। पा० ५।३।३०]

अञ्चत्यन्ताद्दिक्शब्दादस्तातेर्लुग् भवति। प्राच्या दिशि वसति प्राग् वसति। प्रागागत । प्राग् रमणीयम्। लुगणादिलुकि° [२।२।८७] इति ङीपो लुक्। एवं प्राचि देशे काले वा वसतीत्यादि योज्यम्।

**उपर्युपरिष्टात्** ॥ ३० ॥ [पा० ५।३।३१]

ऊर्ध्वशब्दस्यास्तातिविषये उपभावो रिल्रिष्टातिलौ च निपात्येते। ऊर्ध्वाया दिशि वसति उपरि वसति। उपर्यागत., उपरि रमणीयम्। उपरिष्टाद् वसति, उपरिष्टादागत., उपरिष्टाद् रमणीयम्। एवमूर्ध्वे देशे' काले वा वसतीति योज्यम्।

[ उर्ध्वस्य रिल्रिष्टातिलावुपश्च। स० ५।३।६६। 'ऊर्ध्वदेशे Ms ]

**पूर्वाधरयोः पुरधौ च** ॥ ३१ ॥ [स० ५।३।५९]

पूर्वाधरयो सप्तम्याद्यन्तयोरस्तातिर्भवति, पुरधौ चादेशौ भवतः। पुरस्ताद् वसति, पुरस्तादागत·, पुरस्ताद् रमणीयम्। अधस्ताद् वसति, अधस्तादागत , अधस्ताद् रमणीयम्।

[ ३१-३३। पूर्वाधरावराणामसि पुरधवश्चैषाम्। अस्ताति च। पा० ५।३।३९-४० ]

**अस्** ॥ ३२ ॥

पूर्वाधरयोः सप्तम्याद्यन्तयोरस् भवति, पुरधौ चादेशौ भवतः। पुरो

वसति, पुर आगतः, पुरो रमणीयम्। अधो वसति, अध आगतः, अधो रमणीयम्।

[ आम्यामसिश्च । स० ५।३।६० ]

**अवरस्याव्** ॥ ३३ ॥

अवरस्य सप्तम्याद्यन्तस्यास् भवति, अवादेशश्च। अवो वसति, अव आगतः, अवो रमणीयम्।

[ अवरस्याव च । स० ५।३।६१ ]

**वास्ताति** ॥ ३४ ॥ [स० ५।३।६२]

अवरस्यास्ताति परभूतेऽवादेशो भवति वा। अवस्ताद् वसति, अवरस्ताद् वसति। अवस्तादागतः, अवरस्तादागतः। अवस्ताद् रमणीयम्, अवरस्ताद् रमणीयम्।

[ विभाषावरस्य । पा० ५।३।४१ ]

**पश्चात्** ॥ ३५ ॥

अवरस्य पश्चभाव आतिश्च निपात्यते। पश्चाद् वसति, पश्चादागतः, पश्चाद् रमणीयम्। कथं दक्षिणपश्चादिति। दक्षिणं च तत् पश्चाच्च दक्षिणपश्चात्।

[ पश्चात्। पा० ५।३।३२। अपरस्य पश्चभाव आतिश्च प्रत्यय। दिक्पूर्वपदस्य च। वा० १-२। अपरस्याति पश्चा च। दिक्पूर्वपदस्य च। स० ५।३।६३-६४ ]

**पश्चार्धम्** ॥ ३६ ॥

पश्चार्धमिति निपात्यते अवरार्धमित्येतस्मिन्नर्थे। उत्तरं च तत् पश्चार्धं च उत्तरपश्चार्धम्। लिङ्गस्यातन्त्रत्वात् पश्चार्ध।

[ अर्धोत्तरपदस्य च समासे। अर्धे च। पा० ५।३।३२। ३-४। अर्धे लुक्। स० ५।३।६५। दक्षिणपश्चार्धः, उत्तरपश्चार्धः and पश्चार्धः are masculine in the Bhāsya and the Kāśikā ]

**परावरात्तस् वा** ॥ ३७ ॥

परावराभ्यां सप्तमीप्रथमान्ताभ्यां तस् वा भवति। परतो वसति,

परतो रमणीयम्। परस्ताद् वसति, परस्ताद् रमणीयम्। अवरतो वसति, अवरतो रमणीयम्। अवरस्ताद् वसति, अवरस्ताद् रमणीयम्। परत आगतः, अवरत आगत इति पञ्चम्या पूर्वेण सिद्धत्वात् पञ्चमीति निवृत्तम्। स्त्रियामपि पुंवद्भावात् सिद्धम्।

[विभाषा परावराभ्याम्। पा० ५।३।२९। परावराभ्यामतसुज् वा। स० ५।३।६७]

**दक्षिणोत्तरादा च ॥ ३८ ॥**

दक्षिणादुत्तराच्च सप्तमीप्रथमान्तादा भवति, तस् च। दक्षिणा वसति, दक्षिणा रमणीयम्। दक्षिणतो वसति, दक्षिणतो रमणीयम्। उत्तरा वसति, उत्तरा रमणीयम्। उत्तरतो वसति, उत्तरतो रमणीयम्।

[दक्षिणादाच्। उत्तराच्च। दक्षिणोत्तराभ्यामतसुच्। पा० ५।३।३६,३८,२८, दक्षिणोत्तराभ्याम्। तसिश्च। आचापञ्चम्या। स० ५।३।६९-७१]

**आहि च दूरे ॥ ३९ ॥** [पा० ५।३।३७, स० ५।३।७२]

दक्षिणोत्तराभ्या सप्तमीप्रथमान्ताभ्यामाहि परो भवति, आ च, दूरे चेदवधिमान् भवति। दक्षिणाहि वसति, दक्षिणाहि रमणीयम्; दक्षिणा वसति, दक्षिणा रमणीयम्। उत्तराहि वसति, उत्तराहि रमणीयम्, उत्तरा वसति, उत्तरा रमणीयम्। दूर इति किम्? दक्षिणतो वसति।

[उत्तराच्च। पा० ५।३।३८]

**अधराचात् ॥ ४० ॥**

अधरात् सप्तमीप्रथमान्ताद् दक्षिणोत्तराभ्या चाद् भवति। अधराद् वसति, अधराद् रमणीयम्। दक्षिणाद् वसति, दक्षिणाद् रमणीयम्। उत्तराद् वसति, उत्तराद् रमणीयम्। अधरादागत., दक्षिणादागतः, उत्तरादागतः इति पञ्चम्या सिद्ध एव, दिशि च दिग्भेदाश्रयणात्।

[उत्तराधरदक्षिणादाति.। पा० ५।३।३४। अधरादाति·। दक्षिणोत्तराभ्याम्। स० ५।३।६८-६९]

**एनबदूरे वा** ॥ ४१ ॥ [स० ५।३।७३]

अधरदक्षिणोत्तरेभ्योऽदूरदिग्वृत्तिभ्यः सप्तमीप्रथमान्तेभ्य एनब् वा भवति। अधरेण वसति, अधरेण रमणीयम्। अधराद् वसति, अधराद् रमणीयम्। दक्षिणेन वसति, दक्षिणेन रमणीयम्। दक्षिणाद् वसति, दक्षिणाद् रमणीयम्। उत्तरेण वसति, उत्तरेण रमणीयम्। उत्तराद् वसति, उत्तराद् रमणीयम्। अदूर इति किम्? उत्तरतो हिमवान्। केचिदधरादीन् नानुवर्तयन्ति। पूर्वेण वसति, पूर्वेण रमणीयम्।

[एनबन्यतरस्यामदूरेऽपञ्चम्या। पा० ५।३।३५]

**निन्द्ये पाशप्** ॥ ४२ ॥

कुत्सिते वर्तमानात् स्वार्थे पाशब् भवति। कुत्सितो वैयाकरणः वैयाकरणपाशः। छान्दसपाशः। निन्द्य इति किम्? [1]साधुर्वैयाकरणः। इह कस्मान्न भवति—वैयाकरणश्चौर इति? नात्र वैयाकरणत्वं कुत्सितम्। किं तर्हि? चौर्यम्।

[याप्ये पाशप्। पा० ५।३।४७, स० ५।३।७४। [1]dropped in Mss]

**भूतपूर्वे चरट्** ॥ ४३ ॥ [पा० ५।३।५३, स० ५।३।७५]

भूतः पूर्वं भूतपूर्वः। अस्मादेव निपातनात् समासः, सुप् सुपा [२।२।१] इति वा। भूतपूर्वे वर्तमानाच्चरड् भवति। आढ्यचरः। दर्शनीयचरः।

**षष्ठ्या रूप्य च**[1] ॥ ४४ ॥ [पा० ५।३।५४, स० ५।३।७६]

षष्ठ्यन्ताद् भूतपूर्वेऽभिधेये रूप्य च[1] परो भवति, चरट् च। देवदत्तस्य भूतपूर्वो देवदत्तरूप्यो गौः, देवदत्तचरः।

[[1]Ms has रूप्यच्च.]

**द्विबहुषु प्रकर्षे तरप्तमपौ** ॥ ४५ ॥

द्वयोर्बहुषु चैकानेकप्रकर्षे वर्तमानात् तरप्तमपौ भवतः। अयमनयोराढ्यतरः। अयमनयोः पाचकतरः। अयमेषामाढ्यतमः। इमावेषां पाचक-

तमौ। इमे त्रय एषा पाचकाना पाचकतमाः। कथं माथुरा. पाटलिपुत्रकेभ्यः सुकुमारतरा इति? अत्रापि द्वयोर्द्वयोरर्थयोरेकस्य प्रकर्ष इति तरब् भवति। अवयवापेक्षं तु बहुवचनम्, यथा अस्मिन् ग्राम आढ्यतरा वणिज इति। तथा, अस्माकं च देवदत्तस्य च देवदत्तोऽभिरूपतर·। दन्तौष्ठस्य दन्ताः स्निग्धतरा इति समुदायापेक्षमेकवचनम्। साङ्काश्यकेभ्य. पाटलिपुत्रकेभ्यश्च माथुरा सुकुमारतरा इति द्वयोर्द्वयोरेकस्यैव प्रकर्ष.। साङ्काश्यकाना पाटलिपुत्रकाणा च पाटलिपुत्रका सुकुमारतमा इति बह्वपेक्ष. प्रकर्षः। द्वयापेक्षे तु तरपैव भवितव्यम्। एकस्याप्यवस्थाभेदेनान्यत्वाद् भवितव्यम् एव। परुद् भवान् पटुरासीत् पटुतरश्चैयम इति। प्रकृष्टानामपि पुनः प्रकर्षे तरप्तमपौ भवत एव। यथा, युधिष्ठिर. श्रेष्ठतम कुरूणाम् इति।

**[द्विवचनविभज्योपपदे तरबीयसुनौ। अतिशायने तमबिष्ठनौ। पा० ५।३।५७, ५५। द्विबहुषु सजातीयाविदूरप्रकर्षे गुणक्रियावचनेभ्यस्तरप्तमपौ। विभज्योपपदे तरप्। स० ५।३।७७,८०। यदा प्रकर्षवता पुन प्रकर्षो विवक्ष्यते तदातिशायिकान्तादपर प्रत्ययो भवत्येव। काशिका। ईयसुन्निष्ठन्भ्याम्। स० ५।३।७८]**

## किमेत्तिङसंख्यादामन्तावद्रव्ये ॥ ४६ ॥

किमादिभ्य प्रकर्षे वर्तमानेभ्यस्तरप्तमपावामन्तौ भवतः, न चेद् द्रव्यमभिधेयं भवति। किन्तराम् किन्तमाम्। पूर्वाह्णेतराम् पूर्वाह्णेतमाम्। पचतितराम् पचतितमाम्। उच्चैस्तराम् उच्चैस्तमाम्। अद्रव्य इति किम्? उच्चैस्तरो वृक्ष·।

**[किमेत्तिङव्ययवादाम्वद्रव्ये। पा० ५।४।११, किमेत्तिङव्ययेभ्य आभ्यामामद्रव्ये। स० ५।३।७९]**

## गुणादीयसुनिष्ठनौ च ॥ ४७ ॥

द्विबहुषु प्रकर्षे वर्तमानाद् गुणवचनादीयसुनिष्ठनौ तरप्तमपौ च भवतः। अयमनयोः पटीयान् पटुतरः। अयमेषा पटिष्ठ. पटुतम·। इमावेषा पटिष्ठौ पटुतमौ। इमे त्रय एषा पटिष्ठाः पटुतमाः। गुणवृत्तिभ्यः प्रकर्षाभावान्न भवतः।

[ अजादी गुणवचनादेव । पा० ५।३।५८ । तत्स्थगुणवचनेभ्यस्तरबर्थे ईय-सुन् वा । तमबर्थे इष्ठन् । स० ५।३।८३-८४ ]

**विन्मतोर्लुक्** ॥ ४८ ॥ [पा० ५।३।६५]

विनन्तान्मत्वन्ताच्च द्विबहुषु प्रकर्षे वर्तमानादीयसुनिष्ठनौ भवत., विनो मतोश्च लुग्भवति, श्रुतत्वात्। अयमनयो. स्रग्विणो स्रजीयान्। अय-मेषा स्रग्विणा स्रजिष्ठ.। अयमनयो स्रुग्वतो स्रुचीयान्। अयमेषा स्रुग्वता स्रुचिष्ठ.। णाविष्ठवद्भावात् स्रजयति स्रुचयति।

[ तयोर्विन्मतोर्लुक्। स० ५।३।८५ ]

**प्रशस्यस्य श्रः** ॥ ४९ ॥ [पा० ५।३।६०, स० ५।३।८६]

प्रशस्यस्य ईयसुनिष्ठन्संयोगे श्र आदेशो भवति। श्रेयान् श्रेष्ठ।

**वृद्धस्य च ज्यः** ॥ ५० ॥ [स० ५।३।८७]

प्रशस्यस्य वृद्धस्य च ईयसुनिष्ठन्संयोगे ज्य आदेशो भवति। अनयोः प्रशस्ययोरय ज्यायान्। एषा प्रशस्यानामयं ज्येष्ठः। अनयोर्वृद्धयोरयं ज्यायान्। एषा वृद्धानामयं ज्येष्ठः।

[ ज्य च। वृद्धस्य च। पा० ५।३।६१-६२ ]

**बाढान्तिकयोः साधनेदौ** ॥ ५१ ॥

बाढस्यान्तिकस्य च ईयसुनिष्ठन्संयोगे साध नेद इत्येतावादेशौ भवत। अयमनयो साधीयोऽधीते। अयमेषा साधिष्ठमधीते। इदमनयोर्ने-दीयः। इदमेषा नेदिष्ठम्। निमित्तयोर्न यथासख्यम्, प्रत्येकं द्वयोरपेक्षणात्। तथानुक्रान्तम्।

[ अन्तिकबाढयोर्नेदसाधौ। पा० ५।३।६३, स० ५।३।८८ ]

**युवाल्पयोः कन् वा** ॥ ५२ ॥ [स० ५।३।८९]

युवाल्पशब्दयोरीयसुनिष्ठन्संयोगे कनादेशो वा भवति। अयमनयो-र्यूनोः कनीयान् यवीयान्। अयमेषा यूना कनिष्ठः यविष्ठः। अयमनयोरल्पयोः

कनीयान् अल्पीयान्। अयमेषामल्पाना कनिष्ठ अल्पिष्ठः। णाविष्ठवद्भावात्, युवानमाचष्टे कनयति।

[युवाल्पयो कनन्यतरस्याम्। पा० ५।३।६४]

**तिङश्च रूपप्॥ ५३॥**

प्रकर्षे वर्तमानात्तिङन्तात् सुबन्ताच्च रूपब् भवति। पचतिरूपम्, यजतिरूपम्। वैयाकरणरूप, चौररूप·[1], दस्युरूप।

[प्रशसाया रूपप्। पा० ५।३।६६, तिङश्चेत्यनुवर्तते। काशिका। प्रशंसायां रूपप्। तिंङश्च। स० ५।३।९०-९१। [1]Ms has वैररूपम् which points to चौररूप·. Under 6 also we find चौर]

**किञ्चिदूने कल्पब्देश्यदेशीयरः॥ ५४॥**

ईषदसमाप्ते वर्तमानात्तिङन्तात् सुबन्ताच्च कल्पब्देश्यदेशीयरो भवन्ति। पटुकल्प पटुदेश्य पटुदेशीय। पचतिकल्पम् पचतिदेश्यम् पचतिदेशीयम्। कथ बहुकृतमिति? बहुशब्द एवायम्। [1]बहुकृत किञ्चिन्न कृतमित्यर्थ·। यदापि बहुकृतं देवदत्तस्य यज्ञदत्तेन बहुकरोऽस्माक यज्ञदत्त इति तदापि बह्वर्थतैव स्फुट गम्यते। बहुतैलं प्रसन्ना बहुगुडो द्राक्षेत्यपि बहुः। तथा [2]किञ्चिदन्यथेत्ययमर्थो गम्यते। तिङन्तेष्वपि बहु करोतीत्ययमर्थो गम्यते, न च तत पूर्वस्य बहोर्विधिरस्ति।

[ईषदसमाप्तौ कल्पब्देश्यदेशीयर। पा० ५।३।६७, स० ५।३।९२। [1]विभाषा सुपो बहुच् पुरस्तात्तु। पा० ५।३।६८, वा सुपो बहुच् पुरस्तात्। स० ५।३।९३। S'āk, Hc and other devoted followers of Candra do not accept this rejection of Pānini's rule विभाषा सुपो बहुच्. Goyīcandra makes their position clear ननु बहु ददाति बहु करोतीत्यादौ किञ्चिदूनार्थो बहुशब्दो विद्यत एव, तेन च समासेन सिद्धत्वात् किं लक्षणेन। तदसत्, गर्तोत्तरपदादेशादितीयप्रत्ययेन बहुगर्तीय इत्येव स्यात्, न तु टणा बाहुगर्तः, बहुपत्येति समासे सखिवत्त्वाभावान्नादेशनिषेधो न स्यात्। बहुराजा बहुगौः बहुपन्था इत्यादौ समासान्तष्ट स्यात्। बहुसर्पिष्पात्रमित्यादावुत्तरपदस्थत्वात् कस्कादित्वं न स्यात्। एव चान्द्राणामपि प्रत्याख्यानं निरस्तम्। [2]किञ्चिदन्यार्थेत्ययमर्थो L Durga follows Candra]

**प्राग् ढञः कः** ॥ ५५ ॥ [स० ५।३।९४]

प्राग् ढञ संशब्दनाद् [ ७९ ] वक्ष्यमाणेष्वर्थेषु को विहितो वेदितव्य । अश्वक । गर्दभक ।

[ प्रागिवात् क । पा० ५।३।७० ]

**तिङसंख्यानामचोऽन्त्यात् पूर्वोऽकच्** ॥ ५६ ॥

तिङन्तानामसख्याना च प्राग् ढञोऽचोऽन्त्यात् पूर्वोऽकज् विहितो वेदितव्य । पचतकि । उच्चकै ।

[ अव्ययसर्वनाम्नामकच् प्राक् टे । पा० ५।३।७१ । तिङामकच् प्राक् टेः । सर्वनाम्नामसौ भादिसुपा च । अव्ययाना कश्च द । स० ५।३।९५-९७ ]

**कश्च दः** ॥ ५७ ॥

[1]असंख्याना य ककारान्तानामकज् भवति तत्सन्नियोगेन ककारस्य दकार आदेशो भवति । हिरकुत् । पृथकत् ।

[ कस्य च द । पा० ५।३।७२, अव्ययानां कश्च द । स० ५।३।९७, [1]असंख्याना य ककारोऽन्त्योऽकज् भवति ककारस्य° Ms ]

**तूष्णीकाम्** ॥ ५८ ॥

अयं शब्दो निपात्यते ।

[ अकच्प्रकरणे तूष्णीम काम् । पा० ५।३।७२।१ । तूष्णीमः काम् । स० ५।३।९८ ]

**शीले तूष्णीकः** ॥ ५९ ॥

तूष्णींशीले तूष्णीक इति निपात्यते ।

[ शीले को मलोपश्च । पा० ५।३।७२।२, स० ५।३।९९ ]

**सर्वादीनाम्** ॥ ६० ॥

सर्वादीना प्राग् ढञोऽचोऽन्त्यात् पूर्वोऽकज् भवति । सर्वक· विश्वकः । युष्मकाभि अस्मकाभि । युष्मकासु अस्मकासु ।

[ अव्ययसर्वनाम्नामकच् प्राक् टे । पा० ५।३।७१, सर्वनाम्नामसौभादिसुपा च । स० ५।३।९६ ]

**सुपः** ॥ ६१ ॥

सर्वादीनामजेव यः सुप् ततः पूर्वोऽकज् भवति। त्वयका मयका त्वयकि मयकि।

[किमर्थं सुबन्तस्य प्राक् टेर्भवत्याहोस्विन्ङयाप्प्रातिपदिकस्य? ..अस्तु सुबन्तस्य। कथं युष्मकाभिः अस्मकाभिः युष्मकासु अस्मकासु युवकयोः आवकयोरिति? अनोकारसकारभकारादाविति वक्तव्यम्। भाष्यम् ५।३।७२]

**अज्ञातकुत्सयोः** ॥ ६२ ॥

अज्ञाते कुत्सायां च गम्यमानायां यथाविधि काकचौ भवतः। [अज्ञातोऽश्वः अश्वकः। उष्ट्रकः। कुत्सितोऽश्वः अश्वकः। उष्ट्रकः।][1]

[अज्ञाते। कुत्सिते। पा० ५।३।७३-७४, स० ५।३।१००-१०१। [1]Dropped in Ms.]

**दयायाम्** ॥ ६३ ॥

[दयायां गम्यमानायां यथाविधि काकचौ भवतः।][1] वत्सकः। एहकि। हन्त ते धानका। गृहाद् दूरं मा गाः।

[अनुकम्पायाम्। पा० ५।३।७६, स० ५।३।१०४। [1]Dropped in Ms.]

**नृनाम्नि ठज्घनिलचो वा** ॥ ६४ ॥

मनुष्यनामविषये दयायां गम्यमानायां ठज्घनिलचो वा भवन्ति। देविकः देवियः देविलः देवकः देवदत्तकः देवदत्तः। दत्तिकः दत्तियः दत्तिलः दत्तकः देवदत्तः। व्याघ्रिकः व्याघ्रियः व्याघ्रिलः व्याघ्रकः व्याघ्रः। [कृष्णाजिनः कृष्णकः अजिनकः।][1] प्रजापतिदत्तः प्रजापतिकः प्रजापतियः प्रजापतिलः प्रजापतिदत्तकः। शेवलिकः शेवलियः शेवलिलः शेवलकः शेवलदत्तकः शेवलेन्द्रदत्तः। एवं सुपरिकः विशालिकः वरुणिकः अर्यमिकः इत्यादि योज्यम्। वागाशीर्दत्तः वागाशीर्दत्तकः वाचिकः वाचियः वाचिलः। एवं त्वचिकः स्रुचिकः।

[बह्वचो मनुष्यनाम्नष्ठज् वा। घनिलचौ च। पा० ५।३।७८-७९। बह्वचो मनुष्यनाम्नष्ठज्घनिलचो वा। स० ५।३।१०६। [1]Should be dropped.]

**डश्चोपात्** ॥ ६५ ॥

उपान्मनुष्यनाम्नि ठज्घनिलचो वा भवन्ति, डश्च, दयाया गम्यमानायाम्। उपिक उपिय· उपिल उपड· उपकः पूर्ववदेव। उपेन्द्रदत्त। डकार·[1] श्रवणार्थ·।

[प्राचामुपादेरडज्वुचौ च। पा०५।३।८०, उपादेरडज्वुचौ च। स०५।३।१०७। [1]डकारश्रवणार्थं Ms ]

**षषः** ॥ ६६ ॥

षषष्ठजादयो वा भवन्ति, डश्चान्तादेश·। षडिकः षडिय. षडिलः षट्कः।

[षषष्ठाजादिवचनात् सिद्धम्। पा० ५।३।८४।५। षडङ्गुलिदत्तदेवदत्तादीनामूर्ध्वं द्वितीयादच। स० ५।३।१११ ]

**ऋतो लयौ** ॥ ६७ ॥

ऋदन्तान्मनुष्यनाम्नो दयाया गम्यमानाया लयौ वा भवतः। सवितृलः सवितृय. सवितृक· सवितृदत्तक।

[ठग्रहणमुको द्वितीयत्वे कविधानार्थम्। पा० ५।३।८३।१ ]

**उदन्तात्** ॥ ६८ ॥

उदन्तान्मनुष्यनाम्नो दयाया गम्यमानाया लयौ वा भवत·। भानुलः भानुयः भानुकः। अन्तग्रहणात् प्रकृतिभाव·। भानुदत्तक। एवम्प्रकाराणि नामान्तराण्येवेति न कस्यचिल्लोपो वक्तव्य। लहोडः, लहिकः। कहोडः कहिक इत्येतान्यपि नामान्तराण्येव।

[उवर्णाल्ल इलस्य च। श्लो० वा० ५।३।८३। उगन्तादुत्तरपदलोपे घनिलचोरादिलोप। स० ५।३।११८। द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम्। पा० ५।३।८३।३. It is difficult to understand why Candra went out of his way to split up one rule into two ]

**अल्पे** ॥ ६९ ॥ [पा० ५।३।८५, स० ५।३।११९]

अपचितपरिमाणे वर्तमानाद् यथाविधि काकचौ भवतः। अल्पं तैलं तैलकम्। घृतकम्। पचतकि। उच्चकैः।

**ह्रस्वे** ॥ ७० ॥ [पा० ५।३।८६, स० ५।३।१२०]

दीर्घविपरीते वर्तमानात् काकचौ भवत· । वृक्षक· प्लक्षक । संज्ञायामपि वंशक नडकः ।

**कुटीशमीशुण्डाभ्यो रः** ॥७१॥ [पा०५।३।८८,स०५।३।१२२]

कुट्यादिभ्यो र· परो भवति । कुटीर शमीर शुण्डार· । स्वभावतः पुंलिङ्गा ।

**कुतुपः** ॥ ७२ ॥

कुतुप इति ह्रस्वे निपात्यते ।

[कुत्वा डुपच् । पा० ५।३।८९, स० ५।३।१२३]

**कासूगोणीभ्यां ष्टरच्** ॥७३॥ [पा०५।३।९०,स०५।३।१२४]

कासूगोणीभ्या ह्रस्वाभ्या ष्टरज् भवति । ह्रस्वा कासू. कासूतरी । गोणीतरी ।

**वत्सोक्षाश्वर्षभाणां तनुत्वे** ॥७४॥ [०श्वर्षभेभ्यश्च । पा०५।३।९१]

वत्सादीना स्वभावस्य तनुत्वे गम्यमाने ष्टरज् भवति । शैशवस्य तनुत्वे वत्सतर । यौवनस्य तनुत्व उक्षतर । अश्वभावस्य तनुत्वेऽश्वतरः । सामर्थ्यस्य तनुत्व ऋपभतर· ।

[वत्सोक्षर्षभाश्वेभ्य स्वार्थतनुत्वे । स० ५।३।१२५]

**यत्तदेकाद् द्वाभ्यां निर्धारणे डतरच्** ॥ ७५ ॥

यदादिभ्यो द्वाभ्यामेकस्य निर्धारणे डतरज् भवति वा । यतरो भवतो र्देवदत्तः ततर आगच्छतु । यो भवतो र्देवदत्त· स आगच्छतु । यको भवतो र्देवदत्तः सक आगच्छतु । एकतरो भवतो र्देवदत्त , एको भवतो र्देवदत्तः, एकको भवतो र्देवदत्त ।

[ किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् । एकाच्च प्राचाम् । पा०५।३।९२,९४ । किंयत्तदेकान्येभ्यो द्वयोरेकस्य निर्धारणे डतरच् । स० ५।३।१२६ ]

**जातौ डतमज् बहुभ्यः** ॥ ७६ ॥

जातौ वर्तमानेभ्यो यदादिभ्यो बहुभ्य एकस्य निर्धारणे डतमज् वा भवति। यतमो भवता कठ ततम आगच्छतु। यो भवता कठ· स आगच्छतु। कतमो भवता कठः[1] ? [2]को भवता कठ ? जाताविति किम् ? यो भवतां देवदत्त· स आगच्छतु।

[वा बहूनां जातिपरिप्रश्ने डतमच्। पा० ५।३।९३। वा बहूनां जातौ डतमच्। स० ५।३।१२७। [1]Dropped in Mss [2]एको L ]

**तौ किमः** ॥ ७७ ॥

निर्धारणे किमस्तौ डतरज्डतमचौ वा भवत । कतरो भवतोर्देवदत्त. ? कतरो भवता कठ ? कतमो भवता कठ ? कतमो भवता देवदत्तः ? भारद्वाजाना कतमोऽसि ब्रह्मन् ?

[ See under 75 ]

**इवे संज्ञाप्रतिकृत्योः** ॥ ७८ ॥

इवार्थे वर्तमानात् संज्ञाया प्रतिकृतौ च को वा भवति। अश्व इवायम् अश्वक । गर्दभकः। सज्ञाप्रतिकृत्योरिति किम् ? गौरिव गवय । चञ्चेव चञ्चा। वर्ध्रिकेव वर्ध्रिका। इति।[1] सोऽयमित्यभिनिवेशात्तच्छब्देनाभिधानम्। एवं प्रतिमासु स्कन्दो विष्णुरिति। आलेख्ये भीमोऽर्जुन इति। ध्वजेषु सिंहो गरुड इति। तथा देवपथो हसपथ इत्येवमादिषु व्यवस्थितविभाषया को न भविष्यति। क्वचिदिष्यत एव। हस्तको दण्डक इति। पुष्पकमिति च।

[इवे प्रतिकृतौ। संज्ञायां च। लुम्मनुष्ये। जीविकार्थे चापण्ये। देवपथादिभ्यश्च। पा० ५।३।९६-१००। अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च। इवे प्रतिकृतौ लोप. कनो देवपथादिषु॥ काशिका। इवे संज्ञायाम्। प्रतिकृतौ च। लुम्मनुष्ये। जीविकार्थे चापण्येऽर्चाचित्रध्वजेषु। देवहसवारिजलाजराजशतशङ्कुभ्यः पथात्। सिद्धगत्युष्ट्र-ग्रीवा-वाम-रज्जुमत्स्येन्द्रादिभ्यश्च। न हस्तदण्डपुष्पादिभ्यः। स० ५।३।१२९-१३५। [1]इति is superfluous ]

**वस्तेर्ढञ्** ॥ ७९ ॥ [पा० ५।३।१०१, स० ५।३।१३६]

वस्तेरिवार्थे वर्तमानाद् ढञ् भवति। वस्तिरिव वास्तेयम्।

**शिलाया ढश्च** ॥ ८० ॥ [स० ५।३।१३७]

शिलाया इवार्थे वर्तमानाया ढो भवति ढश्च। शिलेयं दधि, शैलेयम्।

[ शिलाया ढ । पा० ५।३।१०२ ]

**शाखादिभ्यो यः** ॥ ८१ ॥

शाखादिभ्य इवार्थे यो भवति। शाखेव शाख्यम्॥ शाखा। मुख। जघन। शृङ्ग। मेघ। चरण। स्कन्ध। उरस्। अग्र। द्रु। द्रुरिव द्रव्यम्। सारमित्यर्थः। अभव्येष्वपि घटादिषु दृश्यते।

[ शाखादिभ्यो यत्। द्रव्यं च भव्ये। पा० ५।३।१०३-४, शाखा-मुख-मेघ-जघन-चरण-स्कन्धोर-शिर-शृङ्गा-ऽग्र-शरणेभ्यो य । द्रोर्भव्ये। स० ५।३।१३८-९ ]

**कुशाग्राच्छः** ॥ ८२ ॥ [पा० ५।३।१०५]

कुशाग्रादिवार्थे छो भवति। कुशाग्रीया बुद्धिः।

[ कुशाग्रार्धजरतीघुणाक्षरादिभ्यश्छ । स० ५।३।१४० ]

**आकस्मिके** ॥ ८३ ॥

इवार्थे वर्तमानादाकस्मिकेऽभिधेये छो भवति। काकतालयोरिव मिलनं यदाकस्मिकं किञ्चित् तत् काकतालीयम्। अजाकृपाणीयम्।

[ समासाच्च तद्विषयात्। पा० ५।३।१०६, समासाच्च तद्विषयादाकस्मिके। स० ५।३।१४१ ]

**शर्करादिभ्योऽण्** ॥ ८४ ॥ [पा० ५।३।१०७]

शर्करादिभ्य इवार्थेऽण् भवति। शार्करम्। कापालिकम्॥ शर्करा। कपालिका। कपाटिका। पुण्डरीक। शतपत्र। गोलोमन्। गोपुच्छ। नराची[1]। नकुल। सिकता।

[ शर्करा-कपालिका-कपाटिका-सिकता-नकुल-नाराच-शतपत्र-पुण्डरीकेभ्योऽण्। गोलोमपुच्छाभ्याम्। स० ५।३।१४२-१४३। [1]Printed Kāś reads नरालि, Bhoja and Goyīcandra नाराच GM explains नरानञ्चती नराची. ]

**अङ्गुल्यादिभ्यष्ठक्** ॥ ८५ ॥ [पा० ५।३।१०८]

अङ्गुल्यादिभ्य इवार्थे ठग् भवति। आङ्गुलिकः। भारुजिकः॥

अङ्गुलि। भरुज। बभ्रु। वल्गु। मण्डर। मण्डल। शष्कुल। हरि। कपि। मुनि। भरु। खल। उदश्वित्। गोणी। तरस्[1]। कुलिश।

[अङ्गुलि-भरुजा-बभ्रु-वल्गु-मण्डर-मण्डल-मुनि-हरि-कपि-खलोदश्विद्-रुरु-तरः-शष्कुली-कुलिश-गोणीभ्यष्ठक्। स० ५।३।१४५। [1]Should we read **उरस्** with Kāś and Goyī? ]

**एकशालायाष्ठच् च** ॥ ८६ ॥ [स० ५।३।१४६]

एकशालाया इवार्थे ठञ् भवति, ठक् च। एकशालिक ऐकशालिकः।

[ एकशालायाष्ठजन्यतरस्याम्। पा० ५।३।१०९ ]

**कर्कलोहितादीकक्** ॥ ८७ ॥ [पा० ५।३।११०, ०हिताभ्यामीकक्। स० ५।३।१४७]

कर्कलोहिताभ्यामिवार्थ ईकग् भवति। कार्कीक । लौहितीक.।

**पूगाञ् ञ्यः** ॥ ८८ ॥

नानाजातीयानामनियतवृत्तीना सङ्घ पूग । पूगवाचिन. स्वार्थे ञ्यो भवति। लौहध्वज्य. लौहध्वज्यौ। शैब्य शैब्यौ। समुदायशब्दोऽवयवेऽपि वर्तते। इह कस्मान्न भवति—देवदत्तो ग्रामणीरेषाम् देवदत्तका इति ? नैष स्वभावत पूगवचन·।

[ पूगाञ्ञ्योऽग्रामणीपूर्वात्। पा० ५।३।११२, पूगादग्रामणीपूर्वाञ्ञ्य.। स० ५।३।१४८ ]

**व्रातादस्त्रियाम्** ॥ ८९ ॥ [स० ५।३।१४९]

नानाजातीयानामनियतवृत्तीनामुत्सेधजीविना सङ्घो व्रातः। तद्वाचिनः स्वार्थे ञ्योऽस्त्रिया भवति। कापोतपाक्य· कापोतपाक्यौ। व्रैहिमत्य. व्रैहिमत्यौ। अस्त्रियामिति किम् ? कपोतपाकी स्त्री।

[ व्रातच्फञोरस्त्रियाम्। पा० ५।३।११३ ]

**बाहीकेष्वब्राह्मणराजन्याच्छस्त्रजीविसङ्घाञ् ञ्यट्** ॥ ९० ॥

बाहीकेषु य· शस्त्रजीविसङ्घो ब्राह्मणराजन्यवर्जितस्तद्वाचिनो ञ्यड्

भवति। क्षौद्रक्य क्षौद्रक्यौ। मालव्य मालव्यौ। बाहीकेष्विति किम्? शबरा.। अब्राह्मणराजन्यादिति किम्? शालङ्कायना, राजन्या। राजन्य इति स्वरूपग्रहणम्। स्त्रिया स्वरे च विशेषात् प्रतिषेध॰। शस्त्रजीविसङ्घादिति किम्? मल्ला। सङ्घग्रहणं किम्? चक्रघोण। टकारो ङीबर्थ।

[आयुधजीविसङ्घाञ्ञ्यड्बाहीकेष्वब्राह्मणराजन्यात्। पा० ५।३।११४। बाहीकेष्वब्राह्मणराजन्यादायुधजीविसङ्घाञ्ञ्यट्। स० ५।३।१५०]

**वृकाण्णेण्यट्** ॥ ९१ ॥

वृकशब्दाच्छस्त्रजीविसङ्घवाचिनो णेण्यड् भवति। वार्केण्य वार्केण्यौ। पशुवाचिनो न भवति। कामक्रोधौ मनुष्याणा खादितारौ वृकाविव।

[वृकाट्टेण्यण्। पा० ५।४।११५, स० ५।३।१५१। With कामक्रोधौ etc. cf जरामृत्यू हि भूताना खादितारौ वृकाविव (महाभारतम् १२।३१९।१२)]

**दामन्यादिभ्यश्छः** ॥ ९२ ॥

दामन्यादिभ्य शस्त्रजीविसङ्घवाचिभ्यश्छो भवति। दामनीय। औलपीय.॥ दामनि। औलपि। बैजवापि। औदकि। आच्युतन्ति। काकन्तकि। शाकुन्तकि। सार्वसेनि। बिन्दु। तुलभ। मौञ्जायन। सावित्रीपुत्र। त्रिगर्तेषु षष्ठा। कौण्डोपरथ। दाण्डकि। क्रौष्टुकि। जालमानि। ब्रह्मगुप्त। जानकि। कौण्डोपरथीय, दाण्डकीय, क्रौष्टुकीय, जालमानीय., ब्रह्मगुप्तीय, जानकीयः। त्रिगर्तेष्विति किम्? कौण्डोपरथ्य। [८८] पूगाञ्ञ्यो भवति।

[दामन्यादित्रिगर्तषष्ठाच्छ। ५।३।११६। दामन्यौलपि-बैजवाप्यौ-दङ्कयौ-डविकाकन्दक्याविर्दन्ति-शाकुन्तकि-सार्वसेनि-बैन्दवि-मौञ्जायन-सावित्रीपुत्रेभ्यश्छ। कौण्डोपरथ-दाण्डकि-क्रौष्टुकि-जालमानि-ब्राह्मगुप्त-जानकिभ्यस्त्रिगर्तेषु। स०५।३।१५३]

**पर्श्वादिभ्योऽणस्त्रियाम्** ॥ ९३ ॥

पर्श्वादिभ्य शस्त्रजीविसङ्घवाचिभ्योऽस्त्रियामण् भवति। पार्शव॰, आसुरः। अस्त्रियामिति किम्? पर्शूः। शस्त्रजीविसङ्घादित्येव। पर्शु.[1]॥ पर्शु। असुर। रक्षस्। बाह्लीक[2]। वयस्। वसु। मरुत्। सत्वन्तु[3]। दशार्ह। पिशाच। अशनि। कार्षापण[4]। त्रिगर्त। भरत। उशीनर। कथं यौधेय

इत्यादि ? युधाया 'द्व्यच॰' [२।४।५१] इति ढक्। शुभ्रधृतवृत्तज्याबाणेभ्यः शुभ्रादित्वात् [२।४।५३]। यौधेयीत्यादिषु ढगन्तादेव ङीप्। स्वरविशेष तु स्वराध्याये वक्ष्याम।

[पर्श्वादियौधेयादिभ्यामणञौ। पा० ५।३।११७। पर्शु-रक्षो-ऽसुर-पिशाच-बाह्लीक-वयो-वसु-मरुत्-सत्वद्-दशार्हाऽशनि-कार्षापण-त्रिगर्त-भरतोशीनरेभ्योऽस्त्रियामण्। योधेश-शौक्रेय-शौभ्रेय-ज्यावनेय-धार्तेय-घार्तेयेभ्योऽञ्। स० ५।३।१५४-१५५. [1]not found in Ms [2]बाह्रोक Ms [3]सत्वतु Ms [4]Should we read कर्षापण ?]

**ञ्यादीनां बहुषु लुक् ॥ ९४ ॥** [स० ५।३।१५६]

ञ्यादीना बहुषु लुग् भवति। लोहध्वजा। कपोतपाका। क्षुद्रकाः। वृकाः। दामनय। अस्त्रियामित्येव। लौहध्वज्याः स्त्रिय॰। कपोतपाक्य॰[1]। दामनीया।

[ञ्यादयस्तद्राजा.। पा० ५।३।११९, तद्राजस्य बहुषु तेनैवास्त्रियाम्। पा० २।४।६२। [1]कपोतपाक्य Ms]

**अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमद्भ्योऽपत्याणो यञ् ॥ ९५ ॥** [स० ५।३।१५७, ०च्छुमदणो यञ्। पा० ५।३।११८]

अभिजिदादिभ्योऽपत्ये योऽण् तदन्तेभ्य॰ स्वार्थे यञ् भवति। आभिजित्य वैदभृत्य॰ शालावत्य॰ शैखावत्य शामीवत्य और्णावत्य श्रौमत्यः। अपत्यग्रहण किम् ? आभिजितः स्थालीपाक॰। बहुषु लुगित्येव। आभिजिता.। अस्त्रियामित्येव। अभिजित्य स्त्रिय॰। अपत्यस्वार्थिकस्य चास्य यञञो॰ [२।४।१०७] इति लुगस्त्रिया नास्त्येव। आभिजित्यस्यापत्यं गुर्वायत्त. आभिजित्यायन.। यञिञ [२।४।३७] इति फक्। आभिजित्यस्य च्छात्रः आभिजितक॰। गोत्राद् वुञ् [३।३।६६]। आभिजितानां सङ्घ॰ आभिजितः। सङ्घाङ्कघोषलक्षणेष्वञ्यञिञ॰ [३।३।९८] इत्यण्।

इति चान्द्रे व्याकरणे चतुर्थस्याध्यायस्य तृतीय॰ पादः समाप्त॰।

**बह्वल्पार्थात् कारकान्मङ्गले शस् वा** ॥ १ ॥ [स० ५।४।१]

बह्वर्थादल्पार्थाच्च कारकान्मङ्गलवचने गम्यमाने शस् वा भवति। बहु देहि, बहुशो देहि। प्रभूतं देहि, प्रभूतशो देहि। अल्प देहि, अल्पशो देहि। स्तोक देहि, स्तोकशो देहि। बहुभिर्देहि, बहुशो देहि, अल्पशो देहि। बहुभ्यो देहि, बहुशो देहि, अल्पशो देहि। बहुषु देहि, बहुशो देहि, अल्पशो देहि। बह्वल्पार्थादिति किम्? गा देहि। कारकादिति किम्? बहूना स्वामी। मङ्गल इति किम्? बहूनि श्राद्धानि देहि। अल्पमाभ्युदयिक देहि।

[ बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्। पा० ५।४।४२, बह्वल्पार्थान्मङ्गलवचनम्। वा० १ ]

**संख्यैकार्थाद्वीप्सायाम्** ॥ २ ॥ [स० ५।४।२]

संख्याया एकार्थाच्च वीप्साया गम्यमानाया शस् वा भवति। द्वौ द्वौ देहि, द्विशो देहि। त्रिशो देहि। गणश कतिश तावच्छ। माषं माषं देहि, माषशो देहि। सङ्घश· पूगश वृन्दश·। क्रमश इति क्रमवना भेदात् क्रमभेद·। वीप्सायामित्येव सिद्धम्। संख्यैकार्थादिति किम्? माषौ माषौ देहि। वीप्सायामिति किम्? द्वौ देहि। कारकादित्येव। द्वयोर्द्वयो स्वामी।

[ सख्यैकवचनाच्च वीप्सायाम्। पा० ५।४।४३ ]

**संख्यादेर्वुन्** ॥ ३ ॥

सख्यादेर्वीप्साया वुन् वा भवति। द्वौ द्वौ पादौ ददाति द्विपादिकां ददाति। द्विशतिका ददाति। द्विमोदकिका ददाति। वीप्सायामित्येव। द्वौ पादौ ददाति। व्यवस्थितविभाषया क्वचिन्न भवति। द्वौ द्वौ माषौ ददाति।

[ पादशतस्य संख्यादेर्वीप्साया वुन्लोपश्च। पा० ५।४।१, पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात्। वा० १। द्विमोदकिकां ददाति। भाष्यम्। संख्यापूर्वेभ्य पादशतमोदकादिभ्यो वुन्। स० ५।४।३ ]

**दण्डदानयोः** ॥ ४ ॥ [स० ५।४।४]

दण्डे दाने च गम्यमाने संख्यादेर्वुन् वा भवति। द्विपदिकां दण्डित.। द्विशतिकाम्। द्विमोदकिकाम्। द्विपदिका ददाति। द्विशतिकाम्। द्विमोदकिकाम्। व्यवस्थितविभाषया क्वचिन्न भवति। द्वौ माषौ दण्डित·।

[ **दण्डव्यवसर्गयोश्च। पा० ५।४।२** ]

**वारसंख्यायाः कृत्वसुच्** ॥ ५ ॥ [स० ५।४।५]

वारसम्बन्धिन्या संख्याया कृत्वसुज् भवति वा। पञ्च वारान् भुङ्क्ते पञ्चकृत्वोऽह्नो भुङ्क्ते। षट्कृत्व.। गणकृत्व। कतिकृत्व। तावत्कृत्व। वारग्रहण किम्? पञ्च भुङ्क्ते। संख्याया इति किम्? प्रभूतान् वारान् भुङ्क्ते।

[ **संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्। पा० ५।४।१७** ]

**बहोर्धा चाविप्रकर्षे** ॥ ६ ॥

वारसम्बन्धिन्या बहुसंख्याया धा भवति, कृत्वसुच् च, वाराणा चेदविप्रकर्षो भवति। बहुधा दिवसस्य भुङ्क्ते बहुकृत्व। अविप्रकर्ष इति किम्? बहुकृत्वो मासस्य भुङ्क्ते।

[ **विभाषा बहोर्धाविप्रकृष्टकाले। पा० ५।४।२०, बहोर्वाराविप्रकर्षे धा च। स० ५।४।६** ]

**द्वित्रिचतुरः सुच्** ॥ ७ ॥ [०चतुर्भ्य·। पा० ५।४।१८, स० ५।४।७]

द्व्यादिभ्यो वारसम्बन्धिभ्यः सुज् वा भवति। द्वौ वारौ भुङ्क्ते द्विर्भुङ्क्ते। त्रिर्भुङ्क्ते। चतुर्भुङ्क्ते।

**सकृत्** ॥ ८ ॥

एकं वारमित्यस्मिन्नर्थे सकृदिति वा निपात्यते। एकं वार भुङ्क्ते सकृद् भुङ्क्ते।

[ **एकस्य सकृच्च। पा० ५।४।१९, स० ५।४।८** ]

**प्रकृते मयट्** ॥ ९ ॥

प्रकृते वर्तमानान्मयड् वा भवति। अन्नं प्रकृतम् अन्नमयम्। यवागूमयम्। यवागूमयी। कथम् अन्नमयो यज्ञ वटकमयी यात्रेति? तत्प्राधान्यविवक्षाया तस्य विकार [३।३।१०३] इत्येव सिद्धम्। यथा श्रद्धामयोऽयं पुरुष [गीता १७।३] इति। कथम्—अपूपा प्रकृता· आपूपिकम्, अपूपाः प्रकृता अस्मिन्नापूपिको यज्ञ इति? तस्य समूह [३।१।४३] इत्येव सिद्धम्। यज्ञादिपु लोकतो लिङ्गम्, अर्शआदित्वाद् [४।२।१४७] अज् वा।

**[ तत्प्रकृतवचने मयट्। समूहवच्च बहुषु। पा० ५।४।२१-२२, तत्प्रकृतमिति मयट्। अस्मिन्निति च। समूहवच्च बहुषु। स० ५।४।९-१२ ]**

**अनन्तावसथेतिहभेषजाञ् ञ्यः** ॥ १० ॥ [पा० ५।४।२३, स० ५।४।१२]

अनन्तादिभ्य स्वार्थे ञ्यो वा भवति। अनन्त एव आनन्त्यम्। आवसथ एव आवसथ्यम्। इतिहैव ऐतिह्यम्। भेषजमेव भैषज्यम्।

**तीयादीकग् न विद्या चेत्** ॥ ११ ॥

तीयान्तात् स्वार्थ ईकग् वा भवति, विद्या चेत्सा न भवति। द्वैतीयीकम् द्वितीयम्। तार्तीयीकम् तृतीयम्। न विद्या चेदिति किम्? द्वितीया विद्या तृतीया विद्या।

**[ तीयादीकग् न विद्याया। श्लो० वा० ४।२।७, तीयादविद्यायामीकक्। स० ५।४।१३ ]**

**यावादिभ्यः कन्** ॥ १२ ॥ [पा० ५।४।२९]

यावादिभ्य. स्वार्थे कन् वा भवति। याव एव यावक·। मणिरेव मणिक ॥ याव। मणि। अस्थि। चन्द्र। पीत। स्तब्ध[1]। ऋतावुष्णशीते। पशौ लूनवियाते। अणु निपुणे। पुत्र कृत्रिमे। पुण्य। स्नात वेदसमाप्तौ। शून्य रिक्ते। दान कुत्सिते। तनु सूत्रे। बृहती आच्छादने। ईयसश्च।

ज्ञात । अज्ञात[1] । कुमारीक्रीडनकानि[2] च । आकृतिगणोऽयम् । [3]अविकः । अभिन्नतरकन्[3] ।

[ याव-मण्यवि-पीडिता-ऽस्थि-चन्द्र-स्तब्ध-जाता-ऽजात-जान्वादिभ्य कन् । ऋतावुष्णशीताभ्याम् । पशौ लूनवियाताभ्याम् । जातौ प्रिय-चित्र-गुह्य-गोल-कुब्जादिभ्य । अणोर्निपुणे । पुत्रात् कृत्रिमे । स्नाताद्वेदसमाप्तौ । शून्याद्रिक्ते । दानात् कुत्सिते । तनो. सूत्रे । बृहत्या आच्छादने । कुमारक्रीडनकेभ्य । बह्वभिन्तोपपन्नसुकराद्यादेस्तरप । ईयसश्च । स० ५।४।१४-२७. [1]शुद्ध Ms [2]Most grammarians have कुमारक्रीडनकानि [3]These are found in the Mahābhāsya ]

**लोहितान्मणौ** ॥ १३ ॥ [पा० ५।४।३०, स० ५।४।२८]

लोहितान्मणौ वर्तमानात् कन् वा भवति । लोहितको मणि , लोहितः । मणाविति किम् ? लोहितो गौ ।

**रक्तानित्ययोः** ॥ १४ ॥

रक्तेऽनित्ये च वर्तमानाल्लोहितात् कन् वा भवति । लोहितकः लोहित । कुसुम्भादिना रक्त पट लोहितक । कोपेन लोहितक । लोहितिका शाटी लोहिता वा । लिङ्गविशिष्टस्यापि ग्रहणाद् यदा लोहिनीशब्दात् कन् तदा लोहिनिका लोहिनी वा । रक्तानित्ययोरिति किम् ? लोहितं रुधिरम् ।

[ वर्णे चानित्ये । रक्ते । पा० ५।४।३१-३२, रक्ते । अनित्यवर्णे च । स० ५।४।२९-३० ]

**कालात्** ॥ १५ ॥ [स० ५।४।३१, कालाच्च । पा० ५।४।३३]

रक्तानित्ययोर्वर्तमानात् कालात् कन् वा भवति । कालकः कम्बलः, कालः । कालक. शोकेन ।

**क्तादनात्यन्तिके** ॥ १६ ॥ [स० ५।४।३२]

क्तान्तादनात्यन्तिके वर्तमानात् कन् वा भवति । अनत्यन्तं भिन्नः भिन्नक । छिन्नक । अनात्यन्तिक इति किम् ? भिन्न. छिन्नः । सामिकृतमिति शब्दान्तरेणाभिधानात् कन् न भवति । ब्राह्मणजातीयः क्षत्रियजातीय

इति जातीयरा [ ४।३।२६ ] सिद्धम्। सामान्यस्य हि भेदको विशेषः प्रकार । पितुरिव स्थानीयमस्य पितृस्थानीय , पितृस्थान इत्यर्थ· । पितरीव वा स्थानीयमस्मिन् सगौरवं पितृस्थानीय । पुत्र इव स्थानीयमस्मिन्नियन्त्रणम् पुत्रस्थानीय ।

[ अनत्यन्तगतौ क्तात्। न सामिवचने। जात्यन्ताच्छ बन्धुनि। स्थानान्ताद्विभाषा सस्थानेनेति चेत्। पा० ५।४।४-५,९-१०। न सामिनेमार्धयोगे। जात्यन्ताच्छ बन्धुनि। स्थानान्तात् पूर्वपदार्थतुल्ये। स० ५।४।३३-३५ ]

**विनयादिभ्यष्ठक्** ॥ १७ ॥ [पा० ५।४।३४]

विनयादिभ्य स्वार्थे ठग् वा भवति। विनय एव वैनयिकः। सामयिक ॥ विनय। समय। उपायाद्ध्रस्वत्व च। सङ्गति। अकस्मात्। उपचार। समाचार। व्यवहार। सम्प्रदान। समुत्कर्ष। समूह। विशेष। अत्यय। अनुगादिन्।

[ अनुगादिनष्ठक्। पा० ५।४।१३। विनय-समया-ऽकस्मात्-कथञ्चिद्-अत्यय-विशेष-व्यवहारोपचारा-ऽनुगादिभ्यष्ठक्। समो गत्यूहाचारोत्कर्षप्रदानेभ्यः। उपायाद्ध्रस्वश्च। स० ५।४।३६-३८ ]

**वाचः सन्देशे** ॥ १८ ॥ [स० ५।४।३९]

सन्देशे वर्तमानाया वाचष्ठग् भवति। वाचिकं कथयति। ठका विना सन्देशवृत्त्यभावान्नित्यो विधि । सन्देश इति किम्? वाक्।

[ वाचो व्याहृतार्थायाम्। पा० ५।४।३५। पूर्वमन्येनोक्तार्थत्वात् सन्देशवाग् व्याहृतार्थेत्युच्यते। काशिका ]

**तथा कर्मणोऽण्** ॥ १९ ॥

यथा सन्देशे तथा कर्मणोऽण् भवति। कार्मणम्। वशीकरणमपि वृद्धसन्देशात् क्रियत इति तदपि कार्मणम्।

[ तद्युक्तात् कर्मणोऽण्। पा० ५।४।३६, स० ५।४।४० ]

**ओषधेरजातौ** ॥ २० ॥ [पा० ५।४।३७, स० ५।४।४१]

ओषधेरजातौ वर्तमानाया अण् भवति। औषधम्। अजाताविति किम्? ओषधि ।

**णजिनुणः** ॥ २१ ॥

णजन्तादिनुणन्ताच्च स्वार्थेऽण् भवति। व्यावक्रोशी। व्यावचर्ची। साकूटिनं वर्तते। साराविणम्।

[ णच स्त्रियामञ्। अणिनुण। पा० ५।४।१४-१५, णजिनुण्भ्या नित्यम्। स० ५।४।४२ ]

**प्रज्ञादिभ्यो वा** ॥ २२ ॥

प्रज्ञादिभ्य. स्वार्थेऽण् वा भवति। प्रजानातीति प्रज्ञ, स एव प्राज्ञः। मत्वर्थीयेन सिद्धे ङीबर्थं वचनम्। प्राज्ञी स्त्री। वणिक् वाणिज ॥ प्रज्ञ। वणिज्। उशिज्। उष्णिह्। प्रत्यक्ष। विदन्। षोडन्। विद्या। मनस्। जुह्वत्। विसारिन् मत्स्ये। श्रोत्र शरीरे। कृष्ण मृगे। चिकीर्षित[1]। चोर। शत्रु। धूर्त। योध। चक्षुस्। वसु। मरुत्। क्रुञ्च्। सत्वन्[2]। दशार्ह। वयस्। असुर। रक्षस्। पिशाच। अशनि। देवता। बन्धु। आकृतिगणोऽयम्। वैकृत। वैयात। सान्तपन। आनुष्टुभम्। जागतम्। आग्नीध्रम्। साधारणम्। आग्रयणम् इति शकन्ध्वादित्वात् पररूपत्वञ्च। आग्रहायणमित्याग्रहायण्याष्ठक् [३।१।१९] इति निपातनात्।

[ प्रज्ञादिभ्यश्च। विसारिणो मत्स्ये। पा० ५।४।३८,१६। प्रज्ञ-वणिग्-उशिक्-प्रत्यक्ष-देवता-विद्या-मनश्-चक्षु-श्रोत्र-शत्रु-योध-चोरेभ्यो वा। षोडद्-विदज्-जुह्वच्-चिकीर्षद्-वसु-मरुत्-सत्वद्-दशार्हा-ऽशनि-बन्धु-वय-क्रुङ्भ्य। रक्ष-पिशाचा-ऽसुरा-ऽग्रहायणा-ऽग्रयण-साधारण-विकृत-व्याकृत-सन्तपन-ह्विता-ऽग्नीच्-छन्दोनामादिभ्यः। कृष्णान्मृगे। विसारिणो मत्स्ये। स० ५।४।४३-४७. [1]चिकीर्षितमेव चैकिर्षितम्। चिकीर्षन्नेव चैकीर्षत इति भोज.। ग० र०। Most grammarians have चिकीर्षत्. Hc has both [2]चन्द्रस्तु 'सत्वन्' इति नान्तं कृततलोपं पठन् सत्वानेव सात्वत इत्याह। ग० र०। Both सत्वन्तु in Pānini and सत्वन् in Candra are peculiar धूर्त is found only in Pānini and Candra Should we read ह्विता for it? ]

**मृदस्तिकन्** ॥ २३ ॥ [पा० ५।४।३९, स० ५।४।४८]

मृदस्तिकन् भवति। मृत्तिका मृत्।

**सस्नौ स्तुतौ** ॥ २४ ॥

मृदः प्रशंसायां सस्नौ वा भवतः । मृत्सा मृत्स्ना मृद्रूपा ।

[ सस्नौ प्रशंसायाम् । पा० ५।४।४०, स० ५।४।४९. Here Bhoja has मनोऽक्ष्भ्या कार । वर्णाव्ययाभ्यां स्वरूपे । रादिफ । ५।३।५०-५२ ]

**नामरूपाद् धेयः** ॥ २५ ॥ [०रूपाभ्या० । स० ५।४।५३]

नामरूपाभ्यां स्वार्थे धेयो वा भवति । नाम नामधेयम् । रूपम् रूपधेयम् ।

[ २५-२६ । भागरूपनामभ्यो धेय । पा० ५।४।३६।२ ]

**भागाद् यच्च** ॥ २६ ॥ [स० ५।४।५४]

भागाद् यद् भवति धेयश्च । भाग्यानि भागधेयानि ।

**सूरमर्तक्षेमयविष्ठात्** ॥ २७ ॥ [०ष्ठेभ्य । स० ५।४।५५]

सूरादिभ्यो यद् वा भवति । सूर सूर्य । मर्त. मर्त्य । क्षेमः क्षेम्य. । यविष्ठ यविष्ठ्य. ।

[ २७-२८ । नवसूरमर्तयविष्ठेभ्यो यत् । क्षेमाद्य । पा० ५।४।३६।७-८ ]

**नवात्** ॥ २८ ॥ [स० ५।४।५६]

नवाद् यद् वा भवति । नवम् नव्यम् ।

**त्नपूतनखा नू च** ॥ २९ ॥ [स० ५।४।५७]

नवात् त्नपूतनखा. परे भवन्ति, नू चास्यादेश । नूत्नम् नूतनम् नवीनम् ।

[ नवस्य नूत्ननूतनखाश्च । पा० ५।४।३०।६ । तनन्खाश्च would appear to be the correct reading of the Bhāsya ]

**प्रात् पुराणे नश्च** ॥ ३० ॥ [स० ५।४।५८]

प्रशब्दात् पुराणे वर्तमानान्नो भवति, त्नप्तनखाश्च । प्रणम् प्रत्नम् प्रतनम् प्रीणम् ।

[ नश्च पुराणे प्रात् । पा० ५।४।३०।७ । See *Mañjūsā*, Nov 1954. ]

**देवतान्तात् तदर्थे यत्** ॥ ३१ ॥ [स० ५।४।६०]

देवतान्तात् तदर्थेऽभिधेये यद् भवति वा। अग्निदेवतार्थमिदम् अग्निदेवत्यम्। पितृदेवत्यम्। अत एव निपातनात्, सास्य देवता [३।१।२१] इति वा, देवतेति सिद्धम्।

[ देवतान्तात् तादर्थ्ये यत्। पा० ५।४।२४, देवात्तल्। पा० ५।४।२७, स० ५।४।५९ ]

**अर्घात्** ॥ ३२ ॥

अर्घात् तदर्थे यद् वा भवति। अर्घार्थम् अर्घ्यम्।

[ ३२-३३। पादार्घाभ्यां च। पा० ५।४।२५, स० ५।४।६१ ]

**पाद्यम्** ॥ ३३ ॥

पादार्थेऽभिधेये पाद्यमिति निपात्यते।

**अतिथेर्ण्यः** ॥ ३४ ॥

अतिथेस्तदर्थे ण्यो भवति। अतिथ्यर्थम् आतिथ्यम्।

[ अतिथेर्ञ्यः। पा० ५।४।२६, स० ५।४।६२ ]

**अभूततद्भावे कृभ्वस्तियोगे विकाराच्च्विः** ॥ ३५ ॥ [स० ५।४।६४]

अवस्थावतोऽवस्थान्तरेणाभूतस्य तदात्मना भावे कृभ्वस्तिभिः सम्बन्धे सति विकारवाचिनश्च्विर्भवति। अशुक्लं शुक्लं करोति शुक्लीकरोति। अशुक्लः शुक्लो भवति शुक्लीभवति। शुक्लीस्यात्। अभूततद्भाव इति किम्? घटं करोति। घटो भवति। दध्यस्ति। कृभ्वस्तियोग इति किम्? अशुक्लः शुक्लो जायते। विकारादिति किम्? प्रकृतेर्मा भूत्। सुवर्णं कुण्डलीभवति। यत् पुनः प्रयत्नेनापि शुक्लं न सम्पद्यते तत्राभूततद्भावाभावादेव न भविष्यति।

[ कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः। पा० ५।४।५०। च्विविधावभूततद्भावग्रहणम्। प्रकृतिविवक्षाग्रहणं च। वा० १-२। अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः। काशिका। ]

**अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च** ॥ ३६ ॥ [पा० ५।४।५१, स० ५।४।६५]

अरु·प्रभृतीनामन्त्यस्य लोपो भवति च्विश्च पूर्वेण सिद्ध । अरू-करोति अरूभवति अरूस्यात्। उन्मनीकरोति उन्मनीभवति उन्मनीस्यात्। उच्चक्षूकरोति उच्चक्षूभवति उच्चक्षूस्यात्। विचेतीकरोति विचेतीभवति विचेतीस्यात्। विरहीकरोति विरहीभवति विरहीस्यात्। विरजीकरोति विरजीभवति विरजीस्यात्।

**अभिविधौ सम्पदा च सातिर्वा** ॥३७॥ [स० ५।४।६६]

अभिव्याप्तावेकदेशेन सर्वात्मना वा गम्यमानाया च्विविषये सम्पदा कृभ्वस्तिभिश्च योगे सातिर्वा भवति। अग्निसात् सम्पद्यते शस्त्रम्। अग्निसात् करोति, अग्निसाद् भवति, अग्निसात् स्यात्। अग्नीकरोति अग्नीभवति अग्नीस्यात्। पुनर्वावचन च्विविकल्पार्थम्[1]।

[ विभाषा साति कार्त्स्न्ये। अभिविधौ सम्पदा च। पा० ५।४।५२-५३।
[1]वृत्तिविकल्पार्थम् Ms L ]

**तदधीने** ॥ ३८ ॥ [स० ५।४।६७]

तदधीनेऽभिधेये तत्स्वामिवाचिन सातिर्वा भवति कृभ्वस्तिभि· सम्पदा च योगे। राजाधीन करोति राजसात् करोति। राजसाद् भवति, राजसात् स्यात्, राजसात् सम्पद्यते।

[ तदधीनवचने साति । पा० ५।४।५४ ]

**देये त्रा च** ॥३९॥ [पा० ५।४।५५, स० ५।४।६८]

यस्मै यद्देयं तदधीने तस्मिन्नभिधेये कृभ्वस्तिभि सम्पदा च योगे त्रा भवति, सातिश्च। देवाधीनं देयं करोति देवत्रा करोति। देवेषु भवति देवत्रा भवति। देवत्रा स्यात्, देवत्रा सम्पद्यते। देवसात् करोति, देवसाद्भवति, देवसात्स्यात्, देवसात्सम्पद्यते।

**देवादिभ्यो द्वितीयासप्तम्योर्बहुलम्** ॥ ४० ॥

देवादिभ्यो द्वितीयार्थे सप्तम्यर्थे च बहुलं कृभ्वस्तिभिरन्यैश्च योगे त्रा भवति। देवान् करोति, देवत्रा करोति। देवेषु भवति, देवत्रा भवति। देवेषु स्यात्, देवत्रा स्यात्। देवान् गच्छति, देवत्रा गच्छति। देवेषु वसति, देवत्रा वसति। एव मनुष्यान् गच्छति, मनुष्येषु वसति वा मनुष्यत्रा। पुरुषान् पुरुषेषु वा पुरुषत्रा। पुरून् पुरुषु वा पुरुत्रा। मर्त्यान् मर्त्येषु वा मर्त्यत्रा। बहून् बहुषु वा बहुत्रा। अन्येभ्योऽपि च यथादर्शनम्।

[ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्। पा० ५।४।५६। बहुलवचनादन्यत्रापि भवति। बहुत्रा जीवतो मन इति। काशिका। देवमनुष्यमर्त्यपुरुषपुरुबहुभ्यो द्वितीयासप्तम्यन्तेभ्यो बहुलम्। स० ५।४।६९ ]

**अव्यक्तानुकरणादनेकाचोऽनितौ डाच्** ॥४१॥ [स०५।४।७०]

अव्यक्तानुकरणादनेकाच कृभ्वस्तियोगेऽनितिपराड्डाज् भवति। पटपटाकरोति पटपटाभवति पटपटास्यात्। अव्यक्तानुकरणादिति किम्? दृषत्करोति। अनेकाच इति किम्? श्रत्करोति। अनिताविति किम्? पटिति करोति। चकारो विशेषणार्थः।

[ अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्। पा० ५।४।५७ ]

**कृञा द्वितीयतृतीयशम्बबीजात् कृषौ** ॥ ४२ ॥ [कृञो०। पा० ५।४।५८, स० ५।४।७१]

करोतिना योगे कृषिविषये द्वितीयादिभ्यो डाज् भवति। द्वितीयाकरोति। तृतीयाकरोति। शम्बाकरोति। पुनस्तिर्यक् कृषतीत्यर्थः। बीजाकरोति। कृषाविति किम्? द्वितीयं पटं करोति।

**संख्यादेर्गुणात्** ॥ ४३ ॥ [स० ५।४।७२]

गुणशब्दात् संख्यापूर्वाड्डाज् भवति करोतिना योगे। द्विगुणाकरोति त्रिगुणाकरोति। कृषावित्येव। द्विगुणा रज्जु करोति।

[ संख्यायाश्च गुणान्तायाः। पा० ५।४।५९ ]

**समयाद् यापनायाम्** ॥ ४४ ॥ [स० ५।४।७३]

समयाद् यापनाया गम्यमानाया डाज् भवति करोतिना योगे। समयाकरोति। कालहरण करोतीत्यर्थ। यापनायामिति किम्? समयं करोति।

[ समयाच्च यापनायाम्। पा० ५।४।६० ]

**सपत्त्रनिष्पत्त्रादतिव्यथने** ॥ ४५ ॥ [पा० ५।४।६१]

सपत्त्रनिष्पत्त्राभ्यामतिव्यथने गम्यमाने डाज् भयति। सपत्त्राकरोति मृगम्। निष्पत्त्राकरोति कवचम्। अतिव्यथन इति किम्। सपत्त्रं करोति वृक्षम्। निष्पत्त्र करोति काण्डम्।

[ सपत्त्रनिष्पत्त्राभ्यामतिव्यथने। स० ५।४।७४ ]

**निष्कुलान्निष्कोषणे** ॥४६॥ [पा० ५।४।६२, स० ५।४।७५]

निष्कुलादन्तरवस्थितस्य निष्कोषणे डाज् भवति। निष्कुलाकरोति फलम्। निष्कोषण इति किम्? निष्कुलं करोति शत्रुम्।

**प्रियसुखादानुकूल्ये** ॥ ४७ ॥

प्रियसुखाभ्यामानुकूल्ये गम्यमाने डाज् भवति। प्रियाकरोति सुखाकरोति। आनुकूल्य इति किम्? सुखं करोति।

[ सुखप्रियादानुलोम्ये। पा०५।४।६३, प्रियसुखाभ्यामानुकूल्ये। स०५।४।७६]

**दुःखात्प्रातिकूल्ये** ॥ ४८ ॥ [स० ५।४।७७]

दु खात् प्रातिकूल्ये गम्यमाने डाज् भवति। दु खाकरोति। प्रातिकूल्य इति किम्? दु खं करोति।

[ दु खात्प्रातिलोम्ये। पा० ५।४।६४ ]

**शूलात्पाके** ॥ ४९ ॥ [पा० ५।४।६५, स० ५।४।७८]

शूलात्पाके गम्यमाने डाज् भवति। शूले पचति मांसं शूलाकरोति। पाक इति किम्? शूल करोति।

**सत्यादशपथे** ॥ ५० ॥ [पा० ५।४।६६, स० ५।४।७९]

सत्याच्छपथादन्यत्र डाज् भवति। सत्याकरोति वणिग् भाण्डम्। मयावश्य क्रेतव्यमिति प्रत्ययं करोति। अशपथ इति किम्? सत्यं करोति।

**मद्रभद्राद् वपने** ॥ ५१ ॥

मद्रभद्राभ्या वपने गम्यमाने डाज् भवति। मद्राकरोति भद्राकरोति। वपन इति किम्? मद्रं करोति।

[मद्रात्परिवापणे। पा० ५।४।६७, भद्राच्चेति वक्तव्यम्। भाष्यम्। मद्रभद्राभ्या वपने। स० ५।४।८० ]

**समासान्तः** ॥५२॥ [०न्ता । पा० ५।४।६८, स० ५।४।८१]

अत परमजादयो वक्ष्यमाणा समासान्तभूता वेदितव्या। अन्तभावे प्रयोजन तत्रैव [५७] वक्ष्याम।

**न किमः क्षेपे** ॥ ५३ ॥ [स० ५।४।८२]

क्षेपे य किंशब्दस्तत परात् समासान्तो न भवति। किंराजा यो न रक्षति। किंगौर्यो न वहति। क्षेप इति किम्? केषा राजा किंराज।

[किम क्षेपे। पा० ५।२।७० ]

**पूजायां स्वतेः प्रागन्यार्थात्** ॥ ५४ ॥

स्वतिभ्या परात्पूजाया समासान्तो न भवति प्रागन्यार्थाधिकारात् [ ९५ ]। सुराजा अतिराजा। सुगौः अतिगौ। पूजायामिति किम्? अतिक्रान्तो राजानमतिराज। स्वतेरिति किम्? परमराजः। प्रागन्यार्थादिति किम्? सुसक्थ। स्वक्ष।

[न पूजनात्। पा० ५।४।६९, पूजायां स्वतिग्रहणम्। प्राग्बहुव्रीहिग्रहणं च। वा० १-२। पूजास्वतिभ्यां प्राग् बहुव्रीहे। स० ५।४।८३ ]

**नञोऽनन्यार्थे** ॥ ५५ ॥

नञ परात् समासान्तो न भवति स चेदन्यपदार्थे न वर्तते। अराजा असखा। अनन्यार्थ इति किम्? अनृचो माणवः। अधुर शकटम्।

[नञस्तत्पुरुषात्। पा० ५।४।७१, नञस्तत्पुरुषे। स० ५।४।८४ ]

**पथो वा** ॥ ५६ ॥ [स० ५।४।८५]

नञ्परात् पथिशब्दात् समासान्तो वा भवति। नायं पन्था अपन्थाः अपथम्। अनन्यार्थ इत्येव। अपथोऽयमुद्देश.।

[पथो विभाषा। पा० ५।४।७२]

**पुरब्धुरश्वानक्षस्याच्** ॥ ५७ ॥

पुराद्यन्तस्य पथ्यन्तस्य च समासान्तोऽज् भवति, न चेदेषामक्ष-सम्बन्ध·। दशपुरी द्विपुरी। द्वीप· समीप.। द्विधुरी त्रिधुरी। समासान्त-ग्रहणादतः संख्यादे. [२।३।२३] इति ङीब् भवति। स्थलपथः देवपथ.। अनक्षस्येति किम्। अक्षस्य धू अक्षधू.। दृढधूरक्ष।

[ऋक्पूरब्धू पथामानक्षे। पा० ५।४।७४, पुरप्पथिभ्योऽच्। धुरोऽनक्षस्य। स० ५।४।८६-७]

**ऋचः** ॥ ५८ ॥ [स० ५।४।८८]

ऋगन्तात्समासान्तोऽज् भवति। सप्तर्चो मन्त्र·। अर्धर्च।

**नञ्बह्वोर्माणवचरणयोः** ॥ ५९ ॥ [०बहुभ्या०। स० ५।४।८९]

नञ्बहुभ्यामृगन्ताभ्या माणवचरणयोरज् भवति। अनृचो माणवः। बह्वृचश्चरणः। माणवचरणयोरिति किम्? अनृक् साम। बह्वृक् सूक्तम्।

[अनृचो माणवे बह्वृचश्चरणाख्यायाम्। महाभाष्यम् ५।४।१५४। अनृचो माणवके ज्ञेयो बह्वृचश्चरणाख्यायाम्। काशिका ५।४।७४. The Nyāsa shows that we should read अनृचो माणवे ज्ञेय . अनृकम् and बह्वृकम् are given as counter-examples to show that शेषाद् वा iv 4 142 will apply here ]

**प्रत्यन्ववात् सामलोम्नः** ॥ ६० ॥

प्रत्यादिभ्य· परे ये सामलोमनी तदन्तादज् भवति। प्रतिसामम् अनुसामम् अवसामम्। प्रतिलोमम् अनुलोमम् अवलोमम्।

[अच् प्रत्यन्ववपूर्वात्सामलोम्न। पा० ५।४।७५, प्रत्यन्ववेभ्य. सामलोम-भ्याम्। स० ५।४।९०]

**अक्ष्णोऽचक्षुषः ॥ ६१ ॥** [स० ५।४।९१]

अचक्षुर्यदक्षि तदन्तादज् भवति। लवणाक्षः गवाक्ष । अचक्षुष इति किम्? ब्राह्मणाक्षि ।

[ अक्ष्णोऽदर्शनात्। पा० ५।४।७६। Here Jainendra has the rule संकटात् which Candra and Bhoja ignore ]

**धेन्वनडुहर्ग्यजुषा-ऽक्षिभ्रुव-दारगवोर्वष्ठीव-पदष्ठीव-नक्तन्दिव-रात्रिन्दिवाऽहर्दिव-सरजम-पुरुषायुष-द्व्याऽयुष-त्र्यायुष-जातोक्ष-महोक्ष-वृद्धोक्षो-पशुन-गोष्ठश्वाः ॥ ६२ ॥**

धेन्वनडुहादयोऽजन्ता निपात्यन्ते । धेनुश्चानड्वाश्च धेन्वनडुहौ । ऋक् च यजुश्च ऋग्यजुषम्। अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्[1]। दाराश्च गावश्च दारगवम्। ऊरू चाष्ठीवन्तौ च ऊर्वष्ठीवम्। पादौ चाष्ठीवन्तौ च पदष्ठीवम्। नक्तं च दिवा च नक्तन्दिवम्। रात्रौ च दिवा च रात्रिन्दिवं भुङ्क्ते। रात्रिश्च दिवा च रात्रिन्दिवम् अतीतम्। अहरहरिति वीप्सायामहर्दिवमिति निपात्यते। समासप्रकरणाच्च वाक्यमपि न बाध्यते[2]। सह रजसा सरजसम्। असख्य साकल्ये [ २।२।२ ] इति समास । पुरुपस्यायु पुरुषायुषम्। द्वे आयुषी समाहृते द्व्यायुषम्। त्रीण्यायूषि समाहृतानि त्र्यायुषम्। जात उक्षा जातोक्ष । महान् उक्षा महोक्षः। वृद्ध उक्षा वृद्धोक्ष । समीपे शुन उपशुनम्। असंख्यं विभक्तिसमीप०[ २।२।२ ] इति समास । गोष्ठे श्वा गोष्ठश्व । स्त्रीपुसाभ्याम्०[२।४।१३] इति निपातनादच्। ऋक्सामे वाङ्मनसे इति न दधिपयआदिपाठात् [२।२।६६]।

[ अचतुर-विचतुर-सुचतुर-स्त्रीपुस-धेन्वनडुह - ऋक्साम - वाङ्मनसा - ऽक्षिभ्रुव-दारगवोर्वष्ठीव-पदष्ठीव-नक्तन्दिव-रात्रिन्दिवा-ऽहर्दिव-सरजस - नि श्रेयस - पुरुषायुष-द्व्यायुष-त्र्यायुष-ऋग्यजुष-जातोक्ष-महोक्ष-वृद्धोक्षोपशुन-गोष्ठश्वा । पा० ५।४।७७। स्त्रीपुस-धेन्वनडुह-ऋग्यजुष-ऋक्साम-वाङ्मनसा- ऽक्षिभ्रुव - दारगवोर्वष्ठीव - पदष्ठीवा-ऽहोरात्र-रात्रिन्दिव-नक्तन्दिवा-ऽहर्दिव-सरजस- पुरुषायुष - द्व्यायुष - त्र्यायुष - जातोक्ष-महोक्ष-वृद्धोक्षोपशुन-गोष्ठश्वा । स० ५।४।९२। It is a pity neither Candra nor Bhoja thought of breaking up this rule [1]अक्षिभ्रुवौ L [2]This is वृत्तगन्धि prose ]

**ब्रह्महस्तिराजपल्याद् वर्चसः** ॥ ६३ ॥ [ ०पल्येभ्यो० । स० ५।४।९३]

ब्रह्मादिभ्य पराद् वर्चसोऽज् भवति। ब्रह्मवर्चसम् हस्तिवर्चसम् राजवर्चसम् पल्यवर्चसम् ।

[ **ब्रह्महस्तिभ्या वर्चस । पा० ५।४।७८। पल्यराजभ्या चेति वक्तव्यम् । भाष्यम्** ]

**समवान्धात् तमसः** ॥ ६४ ॥

समादिभ्य परात् तमसोऽज् भवति। सन्तमसम् अवतमसम् अन्धतमसम् ।

[ **अवसमन्धेभ्यस्तमस । पा० ५।४।७९, स० ५।४।९४** ]

**श्वसो वसीयसः** ॥ ६५ ॥ [ स० ५।४।९५]

श्वस पराद् वसीयसोऽज् भवति। श्वोवसीयसम्। कल्याणमित्यर्थ ।

[ **श्वसो वसीय श्रेयस । पा० ५।४।८०** ]

**निसश्च श्रेयसः** ॥ ६६ ॥ [स० ५।४।९६]

निस श्वसश्च पराच्छ्रेयस समासान्तोऽज् भयति। निश्चित श्रेयो, नि श्रेयसम् निर्वाणम्। श्व श्रेयसम् कल्याणम्।

[ **पा० ५।४।८०,७७** । See under 62 and 65 ]

**तप्तान्ववाद् रहसः** ॥ ६७ ॥

तप्तादिभ्य पराद्रहसोऽज् भवति। तप्तरहसम् अनुरहसम् अव-रहसम्।

[ **अन्ववतप्ताद् रहस । पा० ५।४।८१, ०तप्तेभ्यो० । स० ५।४।९७** ]

**प्रतेरुरस आधारात्** ॥ ६८ ॥

प्रते परादुरसोऽधिकरणादज् भवति। उरसि वर्तते प्रत्युरसम्। विभक्त्यर्थे यद्सख्यम्०[ २।२।२ ] इति समास। आधारादिति किम्? प्रतिगतमुर· प्रत्युर ।

[ **प्रतेरुरस सप्तमीस्थात्। पा० ५।४।८२, स० ५।४।९८** ]

**अनुगवमायामे** ॥ ६९ ॥ [पा० ५।४।८३, स० ५।४।९९]

अनुगवमिति निपात्यत आयामे गम्यमाने। अनुगवं शकटम्। आयाम इति किम्? गवा पश्चाद् अनुगु।

**द्विस्तावा त्रिस्तावा वेदिः** ॥ ७० ॥ [पा० ५।४।८४, स० ५।४।१००]

द्विस्तावतीति त्रिस्तावतीत्यस्मिन्नर्थे द्विस्तावा त्रिस्तावेति समासोऽतिलोपश्च निपात्यते वेदिश्चेत्। प्रकृतियागे हि यावती वेदि· क्वचिद्विकृतियागे द्विस्तावा[1] क्वचित् त्रिस्तावा। वेदिरिति किम्? द्विस्तावती रज्जुः।

[ [1]Should we read ततो द्विगुणा क्वचित् त्रिस्तावा ततो त्रिगुणा? ]

**प्रादिभ्योऽध्वनः** ॥ ७१ ॥

प्रादिभ्य· परादध्वनोऽज् भवति। प्रगतोऽध्वान प्राध्वो रथ। प्राध्वं शकटम्। अत्यध्वम्। प्रादिभ्य इति किम्? परमाध्वा।

[ उपसर्गादध्वन.। पा० ५।४।८५, स० ५।४।१०१ ]

**पाण्डूदक्कृष्णाद् भूमेः** ॥७२॥ [०कृष्णेभ्यो०। स०५।४।१०२]

पाण्ड्वादिभ्यो या परा भूमिस्तदन्तादज् भवति। पाण्डुभूम उदग्भूम कृष्णभूम·।

[ कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्यय· स्मृत। काशिका ५।४।७५। कृष्णोदक्पाण्डुसंख्येभ्यो भूमे। जै० ४।२।९२ ]

**संख्याया नदीगोदावर्योश्च** ॥ ७३ ॥ [ ०वरीभ्याञ्च। स० ५।४।१०३]

सख्याया परयोर्नदीगोदावर्यो भूमेश्च समासान्तोऽज् भवति। पञ्चनदम्। सप्तगोदावरम्। द्विभूम प्रासाद। दशभूमकं सूत्रम्।

[ कृष्णोदक्पाण्डुपूर्वाया भूमेरच्प्रत्यय स्मृत.।
गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि ॥
भूमेरपि सख्यापूर्वाया अच्प्रत्यय इष्यते। अन्यत्रापि च दृश्यते। पद्मनाभ.।

ऊर्णनाभ । दीर्घरात्र । समरात्र. । अरात्र । तदेतत्सर्वमिह योगविभाग कृत्वा साधयन्ति । काशिका ५।४।७५ ]

## असंख्याचाङ्गुलेरनन्यासंख्यार्थे ॥ ७४ ॥

असख्यात् सख्यायाश्च परस्या अङ्गुलेरज् भवति, न चेदन्यपदार्थे संख्यार्थे च समासो[1] वर्तते। निर्गतमङ्गुलिभ्यो निरङ्गुलम्। अत्यङ्गुलम्। द्वे अङ्गुली समाहृते द्व्यङ्गुलम्। अनन्यासंख्यार्थ इति किम्? पञ्चाङ्गुलिर्हस्त'। उपाङ्गुलि। कथं द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलमिति। नात्र समासोऽन्यपदार्थे विहित, मात्रादीना तु लुकि कृते तत्र वर्तते। अङ्गुलशब्दो वा प्रमाणवाची प्रकृत्यन्तरम्। यथा—[2]स्वेनाङ्गुलप्रमाणेनाङ्गुलाना शतं पूर्णम्, चतुर्दश वाङ्गुलानि इति। द्व्यङ्गुलावयवो हस्त इति समुदायोऽन्यपदार्थे वर्तते। अङ्गुल्यन्तस्य तु विशेषणमेकार्थेन [२।२।१८] इति समास.।

[ तत्पुरुषस्याङ्गुले. सङ्ख्याव्ययादे । पा० ५।४।८६, अव्ययाच्चाङ्गुलेस्तत्पुरुषे। स० ५।४।१०४ [1]समासान्तो L [2]Printed Hrdayahārinī reads: स्वेनाङ्गुलप्रमाणेनाप्यङ्गुलाना शत पुमान्। हस्तोऽङ्गुलविंशत्या इति। द्व्यङ्गुलावयवो न हस्त इति । Durga reads as in our Vrtti Hc has स्वेनाङ्गुलप्रमाणेनाङ्गुलाना शत पुमान्। हस्तोऽङ्गुलविंशत्या इति। [1]समासान्तो L ]

## अहःसर्वैकदेशसंख्यातपुण्यवर्षादीर्घाच्च रात्रेः ॥ ७५ ॥

अहरादिभ्योऽसंख्यात् सख्यायाश्च पराद् रात्रिशब्दादज् भवति। अहश्च रात्रिश्च अहोरात्र । सर्वरात्र । पूर्वरात्र, अपररात्र । एकदेशेऽत्र रात्रिशब्दो वर्तते, अन्यत्र पूर्वरात्रि । सख्यातरात्र । पुण्यरात्र । वर्षारात्र । दीर्घरात्र । अतिरात्र । नीरात्र । द्वे रात्री समाहृते द्विरात्र । अनन्यासंख्यार्थ इत्येव। दीर्घरात्रिर्हेमन्त । उपरात्रि।

[ अह.सर्वैकदेशसख्यातपुण्याच्च रात्रे । पा० ५।४।८७। वर्षादीर्घात्। ज० ४।२।११०। सर्वैकदेशसख्यातपुण्यवर्षादीर्घेभ्यश्च रात्रे'। स० ५।४।१०५। Bhoja reads अहोरात्र in the स्त्रीपुंस rule See under 62 ]

**सख्यहोराज्ञां टच्** ॥ ७६ ॥

सख्याद्यन्ताना टज् भवति। राजसख·। परमाह·। मद्रराज·। अनन्यासख्यार्थ इत्येव। इन्द्रसखा उपसखि। सख्यहोराज्ञामिति निर्देशाच्चार्थे न भवति। कथ मद्राणा राज्ञीति[1] मद्रराज्ञीति? नेह लिङ्गविशिष्टग्रहणम्, विशेपाश्रयणात्।

[राजाह सखिभ्यष्टच्। पा० ५।४।९१। सख्यहोभ्या टच्। राज्ञोऽस्त्रियाम्। स० ५।४।१०६-१०७। [1]This इति is unnecessary ]

**गोरलुक्यचार्थे** ॥ ७७ ॥

गोशब्दादलुग्विषयाट्ज् भवति, न चेच्चार्थे समास·। राजगव· परमगव.। पञ्चगवधनम् दशगवधनम्। अलुकीति किम्? पञ्चभिर्गोभिः क्रीत पञ्चगु। अचार्थ इति किम्? अजाश्वगाव·। अनन्यासख्यार्थ इत्येव। चित्रगु। उपगु।

[गोरतद्धितलुकि। पा० ५।४।९२, स० ५।४।१०८]

**उरसोऽग्रे** ॥ ७८ ॥

प्रधाने वर्तमानादुरस समासान्तष्टज् भवति। अश्वोरसम्। हस्त्युरसम्। तेषा प्रधानमित्यर्थ। अग्र इति किम्? अश्वोर।

[अग्राख्यायामुरस। पा० ५।४।९३, उरसोऽग्ये। स० ५।४।१०९]

**अनोऽश्मायःसरसा जातिनाम्नोः** ॥ ७९ ॥ [०जातिसंज्ञयो। पा० ५।४।९४, स० ५।४।११०]

अनसाद्यन्ताज्जातौ सज्ञाया च टज् भवति। उपानसमिति जातिः, महानसमिति सज्ञा। अमृताश्म इति जाति, पिण्डाश्म इति संज्ञा। कालायसमिति जाति·, लोहितायसमिति सज्ञा। मण्डूकसरसमिति जाति., जलसरसमिति सज्ञा। कथ बिन्दुसरो बकसर इति। नैषा संज्ञा, रूढ्या तु सज्ञात्वेन विज्ञानं 'शूर्पनखीवत्।

[ [1]Since शूर्पनखी is not primarily a संज्ञा, iv 4 102 does not apply, so शूर्पणखी the reading accepted by L has to be rejected ]

**ग्रामकौटात् तक्ष्णः ॥ ८० ॥**

ग्रामकौटाभ्या [1]य. परस्तक्षन्शब्दस्तदन्ताट्टज् भवति। ग्रामतक्षः साधारण इत्यर्थ·। कुट्या भव कौट, कौटस्तक्षा कौटतक्ष। स्वगृहस्थायी स्वतन्त्र, न कस्यचित् प्रतिबद्ध इत्यर्थ। ग्रामकौटादिति किम्? राजतक्षा। अचार्थ इत्येव। ग्रामतक्षाणौ। अनन्यार्थ इत्येव। कौटस्तक्षास्य कौटतक्षा।

[ ग्रामकौटाभ्या च तक्ष्ण। पा० ५।४।९५, ग्रामकौटाभ्या तक्ष्णः। स० ५।४।१११। [1]'परो यस्तक्षन्शब्द॰ was expected ]

**अतेः शुनः ॥ ८१ ॥** [पा० ५।४।९६, स० ५।४।११२]

अते पराच्छुनष्टज् भवति। अतिक्रान्त· श्वानम् अतिश्वो वराहः। अतिजवन इत्यर्थ। अतिश्व सेवक। सुष्ठु स्वामिभक्त इत्यर्थ। अतिश्वी सेवा। अतिनीचेत्यर्थ।

**उपमानादप्राणिनि ॥ ८२ ॥** [स० ५।४।११३, ॰प्राणिषु। पा० ५।४।९७]

अप्राणिविषय उपमाने य श्वा तदन्ताट्टज् भवति। आकर्ष. श्वेव आकर्षश्व। फलकश्व। उपमानादिति किम्? उत्तमश्वा। अप्राणिनीति किम्? व्याघ्र श्वेव व्याघ्रश्वा।

**मृगपूर्वोत्तराच्च सक्थ्नः ॥ ८३ ॥**

मृगादिभ्य उपमानाच्च परो य सक्थिशब्दस्तदन्ताट्टज् भवति। मृगसक्थम्। पूर्वसक्थम्। उत्तरसक्थम्। फलकमिव सक्थि फलकसक्थम्।

[ उत्तरमृगपूर्वाच्च सक्थ्न। पा० ५।४।९८, पूर्वोत्तरमृगेभ्यश्च सक्थ्न·। स० ५।४।११४ It is difficult to account for Pāṇini's arrangement of the three words. Bhoja's पूर्वोत्तरमृगेभ्यश्च is metrical ]

**संख्यार्धान्नाव एकार्थात्** ॥ ८४ ॥

सख्याया अर्धाच्च समानाधिकरणात् परा या नौस्तदन्ताट्टज् भवति । द्विनावम् । त्रिनावम् । लोकाश्रयत्वाल्लिङ्गस्य स्त्रीलिङ्ग न भवति । अर्धनावम् । एकार्थादिति किम् ? द्वयोर्नौ द्विनौ । अनन्यार्थ इत्येव । द्विनौक· ।

[ नावो द्विगो । अर्धाच्च । पा० ५।४।९९-१००, स० ५।४।११५-११६ ]

**खार्या वा** ॥ ८५ ॥ [स० ५।४।११७]

सख्याया अर्धाच्च परा या खारी तदन्ताट् टज् भवति वा । द्विखारम्, द्विखारी । अर्धखारम् अर्धखारी । विधानसामर्थ्यादेव टजन्तस्य न स्त्रिया वृत्ति । एकार्थादित्येव । द्वयो खारी द्विखारी । अनन्यार्थ इत्येव । द्विखारीक ।

[ खार्या· प्राचाम् । पा० ५।४।१०१ ]

**द्वित्रिभ्यामञ्जले:** ॥ ८६ ॥ [पा०५।४।१०२, स०५।४।११८]

द्वित्रिभ्या परो योऽञ्जलिशब्दस्तदन्ताट्टज् भवति वा । द्व्यञ्जलम्, त्र्यञ्जलम् । द्व्यञ्जलि, त्र्यञ्जलि । एकार्थादित्येव । द्वयोरञ्जलि द्व्यञ्जलि· । अनन्यार्थ इत्येव । द्व्यञ्जलिक· ।

**कुमहद्भ्यां ब्रह्मणः** ॥ ८७ ॥ [स० ५।४।११९]

कुमहद्भ्या परो यो ब्रह्मन्शब्दस्तदन्ताट्टज् भवति वा । कुब्रह्मः कुब्रह्मा । महाब्रह्म महाब्रह्मा । अनन्यार्थ इत्येव । महाब्रह्मकः ।

[ कुमहद्भ्यामन्यतरस्याम् । पा० ५।४।१०५ ]

**जनपदात्** ॥ ८८ ॥

जनपदशब्देभ्य परो यो ब्रह्मन्शब्दस्तदन्ताट्टज् भवति, नित्यं योगविभागात् । अवन्तिषु ब्रह्मा अवन्तिब्रह्म· । काशीषु ब्रह्मा काशीब्रह्मः । जनपदादिति किम् ? देवब्रह्मा नारद· । अचार्थ इत्येव । अवन्तयश्च ब्रह्मा च अवन्तिब्रह्माण । अनन्यार्थ इत्येव । अवन्तिब्रह्मकः ।

[ब्रह्मणो जानपदाख्यायाम्। पा० ५।४।१०४, जनपदेभ्यो नित्यम्। स० ५।४।१२०]

**चार्थे चुदषहः समाहारे ॥ ८९ ॥**

चार्थे समाहारे वर्तमानाच्चवर्गदकारषकारहकारान्ताट् टज् भवति। वाक्त्वचम्। श्रीस्रजम्। समिद्दृषदम्। वाक्त्विषम्। छत्रोपानहम्। छत्रोपानहिनीति समासान्तत्वादतश्चार्थादिनिर्भवति। चार्थ इति किम्? द्विट्षत्। चुदषह इति किम्? वाक्समित्। समाहार इति किम्? प्रावृट्छरदौ।

[द्वन्द्वाच्चुदषहान्तात् समाहारे। पा० ५।४।१०६, स० ५।४।१२१]

**शरदादिभ्योऽसंख्यार्थे ॥ ९० ॥**

शरदादिभ्योऽसख्यार्थे वर्तमानेभ्य समासान्तष्टज् भवति। उपशरदम्। उपविपाशम्। असख्यार्थ इति किम्? परमशरत्॥ शरद्। विपाश्। मनस्। उपानह्। दिव्। हिमवत्। अनडुह्। [1]चेतस्। चतुर्। तद्। यद्। जराया [2]जरस् च। दृश्। प्रतिपरस्समनुभ्योऽक्ष्ण। पथिन्। झयन्ताना पाठो नित्यार्थ.।

[अव्ययीभावे शरत्प्रभृतिभ्य। पा० ५।४।१०७। शरद्-विपाड्-अनस्-मनस्-उपानद्-धिमवद्-अनडुत्-पथि-द्यु-दिग्-दृग्-यत्-तच्-चतुर्भ्योऽव्ययीभावे। प्रतिपरस्समनुभ्योऽक्ष्ण। जराया जरश्च। ५।४।१२२-१२४। [1]Ms has विहस् We have suggested चेतस्. अनस् is also possible [2]जरसश्च L]

**अनः ॥ ९१ ॥** [स० ५।४।१२५, अनश्च। पा० ५।४।१०८]

अनन्तादसख्यार्थे समासान्तष्टज् भवति। अध्यात्मम् प्रत्यात्मम् उपराजम्। समासान्तत्वान्नातोऽमपञ्चम्या [२।१।४१] इत्यम् भवति।

**नपुंसकाद् वा ॥ ९२ ॥** [स० ५।४।१२६]

अनन्तान्नपुसकादसंख्यार्थे समासान्तष्टज् वा भवति। उपचर्मम् उपचर्म।

[नपुसकादन्यतरस्याम्। पा० ५।४।१०९]

**गिरिनदीपौर्णमास्याग्रहायणीझयः ॥ ९३ ॥**

गिर्यादिभ्यो झयन्ताच्चासख्यार्थे समासान्तष्टज् वा भवति। अन्तर्गिरम् अन्तर्गिरि । उपनदम् उपनदि। उपपौर्णमासम् उपपौर्णमासि। उपाग्रहायणम् उपाग्रहायणि । उपसमिधम् उपसमित् । उपदृषदम् उपदृषत् ।

[ नदीपौर्णमास्याग्रहायणीभ्य । झय । गिरेश्च सेनकस्य । पा० ५।४।११०-११२ । गिरिनदीपौर्णमास्याग्रहायणीभ्य । झय । स० ५।४।१२७-१२८ ]

**निसः शतो डच् ॥ ९४ ॥** [स० ५।४।१२९]

निस परो य शदन्तस्तदन्ताड्डज् वा भवति । निर्गतानि त्रिंशतो वर्षाणि निस्त्रिंशानि[1] । निश्चत्वारिंशानि । निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्ग ।

[ डच्प्रकरणे सख्यायास्तत्पुरुषस्योपसख्यान निस्त्रिंशाद्यर्थम् । पा०५।४।७३।१ । तथाच चन्द्रवामनयो सूत्र निर शतो डजिति। गोयीचन्द्र ७।१८९ । [1]निस्त्रिंशानि वर्षाणि निस्त्रिशत्। निश्चत्वारिंशानि। Ms ]

**संख्याया अबहोरन्यार्थे ॥ ९५ ॥**

बहुवर्जिता या सख्या तदन्तादन्यपदार्थे वर्तमानाड् डज् भवति। उपदशा । आसन्नदशा । अदूरदशा । अधिकदशा । [1]त्रिर्दशैषा संख्या त्रिदशा । द्वौ वा त्रयो वा द्वित्रा । अबहोरिति किम् । उपबहव । अन्यार्थ इति किम्? द्वादश। अन्यार्थाधिकार आ कप [ १३९ ] ।

[ बहुव्रीहौ सख्येये डजबहुगणात्। पा० ५।४।७३, अबहो सख्येयबहुव्रीहे । स० ५।४।१३० । [1]त्रिदशैषा L ]

**सक्थ्यक्ष्णः स्वाङ्गात् षच् ॥ ९६ ॥** [स० ५।४।१३१]

स्वाङ्गे ये सक्थ्यक्षिणी तदन्तात् षज् भवति। दीर्घसक्थ दीर्घसक्थी। विशालाक्ष विशालाक्षी। सक्थ्यक्ण इति किम्? दीर्घजानु । स्वाङ्गादिति किम्? दीर्घसक्थि शकटम्। स्थूलाक्षिरिक्षु । अन्यार्थ इत्येव । परमसक्थि । षकारो ङीषर्थ ।

[ बहुव्रीहौ सक्थ्यक्ष्णो स्वाङ्गात् षच्। पा० ५।४।११३ ]

**अङ्गुलेर्दारुणि** ॥ ९७ ॥ [पा० ५।४।११४, स० ५।४।१३२]

अङ्गुल्यन्तादन्यपदार्थे दारुणि वर्तमानात् षच् भवति । द्व्यङ्गुलं दारु । पञ्चाङ्गुलम् । अङ्गुलिसदृशावयवं धान्यादीनां विक्षेपकाष्ठमुच्यते । प्रमाणे तु पूर्ववत् सिद्धम् ।

**द्वित्रिभ्यां मूर्ध्नः** ॥ ९८ ॥ [स० ५।४।१३३]

द्वित्रिभ्यां परो यो मूर्धा तदन्तात् षच् भवति । द्विमूर्धः त्रिमूर्धः । अन्यार्थ इत्येव । द्वयोर्मूर्धा द्विमूर्धा ।

[ **द्वित्रिभ्यां ष मूर्ध्नः** । पा० ५।४।११५ ]

**अप् पूरण्यास्तासु** ॥ ९९ ॥

पूरणे यो विहितस्तदन्तायाः स्त्रियास्तास्वेव पूरणीष्वन्यपदार्थे वर्तमानायाः समासान्तोऽब् भवति । कल्याणी पञ्चम्यासां रात्रीणां कल्याणीपञ्चमा रात्रयः । तास्विति किम् ? कल्याणपञ्चमीकः पक्षः । पुंवद्भावप्रतिषेधोऽपि पूरणीष्वेवाभिधेयासु ।

[ **अप्पूरणीप्रमाण्योः** । पा० ५।४।११६, **अपि प्रधानपूरणीग्रहणम्** । वा० १ । **अप्पूरण्यास्तत्प्राधान्ये** । स० ५।४।१३४ ]

**प्रमाण्याः** ॥१००॥ [स० ५।४।१३५]

प्रमाणीशब्दादब् भवति । स्त्री प्रमाण्येषां स्त्रीप्रमाणाः कुटुम्बिनः । भार्याप्रमाणाः । प्रमाणशब्देन सिद्धे कब्बाधनार्थं वचनम् ।

**अन्तर्बहिर्भ्यां लोम्नः** ॥१०१॥ [स० ५।४।१३६]

अन्तर्बहिर्भ्यां परो यो लोमन्शब्दस्तदन्तादब् भवति । अन्तर्लोमः बहिर्लोमः ।

[ **अन्तर्बहिर्भ्यां च लोम्नः** । पा० ५।४।११७ ]

**नक्षत्रान्नेतुः** ॥१०२॥ [स० ५।४।१३७]

नक्षत्रात्परो यो नेता तदन्तादब् भवति । मृगनेत्रा रात्रयः । पुष्य-

नेत्रा· । नक्षत्रादिति किम् ? देवदत्तनेतृक । नेत्रशब्देन सिद्धे कब्बाधनार्थं वचनम् ।

[ नेतुर्नक्षत्र उपसंख्यानम् । पा० ५।४।११६।२ ]

**नञ्सुव्युपत्रेश्चतुरोऽच्** ॥१०३॥ [०व्युपत्रिभ्यश्च० । स० ५।४।१३८]

नञादिभ्य परो यश्चतुर्शब्दस्तदन्तादज् भवति । नास्य चत्वार्यक्षीणि विषयीभवन्ति [1]अचतुर । सुतरामस्य चत्वारि विषयीभवन्ति सुचतुरः । विविधमस्य चत्वारि विषयीभवन्ति विचतुर । चत्वारि [2]समीप एषामुपचतुरा । त्रयो वा चत्वारो वा त्रिचतुरा ।

[ अचतुर-विचतुर-सुचतुर । पा० ५।४।७७, चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम् । वा० १ । [1]अचतुरम् L [2]समीपमेषाम् L ]

**नाभेः** ॥१०४॥ [स० ५।४।१३९]

नाभ्यन्तादज् भवति । पद्मनाभ । ऊर्णनाभ ।

[ नाभे ख्यौ । जै० ४।२।१५२ । अन्यत्रापि च दृश्यते । पद्मनाभ । ऊर्णनाभ· । काशिका ५।४।७५ ]

**सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्राः** ॥१०५॥

सुप्रातादयोऽजन्ता निपात्यन्ते । शोभन प्रातरस्य सुप्रातः । शोभनं श्वोऽस्य सुश्व । शोभनं दिवास्य सुदिव· । शारेरिव कुक्षिरस्य शारिकुक्ष । चतस्रोऽश्रयोऽस्य चतुरश्र । एणीपदोऽजपद प्रोष्ठपद इति भद्रपदवत्पदशब्देन सिद्धम् । रूढेश्चैषा नियतविषयत्वम् ।

[ सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः । पा० ५।४।१२०, ०प्रोष्ठपदभद्रपदा । स० ५।४।१४० । पादसमानार्थेन पदशब्देनैषां सिद्धिरिति चान्द्रा । तन्न बहुसम्मतम् । गोयीचन्द्र ७।३१७ । ]

**नञ्सुदुर्भ्यः सक्थ्नो वा** ॥१०६॥ [नञ्दु.सुभ्य.० । स० ५।४।१४१]

नञादिभ्य परो य सक्थिशब्दस्तदन्तादज् वा भवति । असक्थ·

असक्थि । सुसक्थ सुसक्थि । दु सक्थ दु सक्थि । नञादिभ्य इति किम्? दीर्घसक्थि शकटम् ।

[ नञ्दु सुभ्यो हलिसक्थ्योरन्यतरस्याम् । पा० ५।४।१२१, हलहलि-शब्दाभ्या सक्थसक्थिशब्दाभ्यामेव रूपद्वयसिद्धौ समासान्तविधानमेकस्मिन्नर्थे प्रयोगद्वयसिद्ध्यर्थम् । तथाच महद्धल हलिरित्युभयोरर्थभेदो विद्यत एव । किञ्च, अकृतसमासान्ताद्वा इति कबाधनार्थम् । चन्द्रस्तु कथ प्रत्याचष्ट इति नावधारयाम । गोयीचन्द्र ७।३१६ ]

**प्रजाया असिच्** ॥१०७॥

नञादिभ्य परो य प्रजाशब्दस्तदन्तादसिज् भवति । अप्रजा. । सुप्रजा । दुष्प्रजा ।

[ नित्यमसिच् प्रजामेधयो । पा० ५।४।१२२, नित्यमसिच् प्रजाया । स० ५।४।१४३ ]

**मन्दाल्पाच्च मेधायाः** ॥१०८॥ [जैनेन्द्र ४।२।१६०, मन्दाल्पाभ्या च० । स० ५।४।१४४]

मन्दाल्पाभ्या नञादिभ्यश्च परा या मेधा तदन्तादसिज् भवति । मन्दमेधा । अल्पमेधा । अमेधा सुमेधा दुर्मेधा ।

[ नित्यग्रहणं किम्, यावता पूर्वसूत्रेऽन्यतरस्याग्रहण नैव स्वर्यते? एवं तर्हि नित्यग्रहणादन्यत्रापि भवतीति सूच्यते । काशिका ५।४।१२२ । तथाहि मन्दाल्पाभ्या मेधाया इति चन्द्रवर्धमानसूत्रम् । गोयीचन्द्र ७।४५ ]

**नाम्नि नासाया नसोऽस्थूलात्** ॥१०९॥ [०नासिकाया० । स० ५।४।१४५]

स्थूलादन्यस्मात् परा या नासा तस्या सञ्ज्ञाया समासान्तो नसादेशो भवति । गोनस वाध्रीणस । नाम्नीति किम्? दीर्घनास । अस्थूलादिति किम्? स्थूलनास. ।

[ अञ् नासिकाया संज्ञाया नसं चास्थूलात् । पा० ५।४।११८ It will be noticed that Candra differs from Pāṇini in that he prescribes *nasa* as the substitute for *nāsā* and not for *nāsikā* ]

**प्रादिभ्यः ॥११०॥**

प्रादिभ्य परस्या[1] नासाया नसादेशो भवति। प्रणस मुखम्। उन्नसम्।

[उपसर्गाच्च। पा० ५।४।११९, स० ५।४।१४६। [1]पराया L]

**वेः ख्रः[1] ॥१११॥**

विपूर्वात्परस्या[2] नासाया ख्र[1] आदेशो भवति। विगता नासास्य विख्र[1]।

[Though वेर्ग्रो वक्तव्य। विग्र is found in the Bhāsya on v 4 119 Kielhorn notes that one Ms reads वे ख्रो वक्तव्य·। अपि ख्रादेशो वक्तव्य। विख्र.। This was probably the reading in Candra's Ms also The *Kāśikā* accepts the reading वेर्ग्रो वक्तव्य as is evident from the *Nyāsa* and the *Padamañjarī*. Jainendra has वे. खुखग्रा. iv 2 185 Bhoja has वे खुखग्राः v 4 147. Goyīcandra says under Sam vii 313 नसादेश बाधित्वा ख्रादेश एव नित्य भवतीति चन्द्रादिमतम्। [1]ख्र L [2]पराया L]

**खुरखराण्णस् वा ॥११२॥**

खुरखराभ्या परस्या नासाया णस् वा भवति। खुरणा खुरणस। खरणाः खरणस।

[खरखुराभ्या च नस् वक्तव्य। खरणाः खुरणा। भाष्यम् ५।४।११८, पक्षेऽच्प्रत्ययोऽपीष्यते। काशिका। खरखुराभ्या नस् वा। स० ५।४।१४८]

**धर्मादनिच् केवलात् ॥११३॥** [पा० ५।४।१२४, स० ५।४।१४९]

केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदन्तादनिज् वा भवति। कल्याणधर्मा कल्याणधर्मक·। तद्धर्मा तद्धर्मक·। विपरीतधर्मा विपरीतधर्मक। केवलादिति किम्? परमस्वधर्मक।

[The rule is compulsory in Pānini and the *Kāśikā* interprets it faithfully Jainendra follows Pānini. Bhoja

follows Candra Goyicandra says चन्द्रवर्धमानौ विकल्पेनानमिच्छत· । Sam. vii 460 ]

**सुहरिततृणसोमाज्जम्भात्** ॥११४॥ [०सोमेभ्य ० । स० ५।४।१५०]

स्वादिभ्य. परो यो जम्भशब्दस्तदन्तादनिञ् भवति। सुजम्भा हरितजम्भा तृणजम्भा सोमजम्भा । स्वादिभ्य इति किम्? पतितजम्भ ।

[जम्भा सुहरिततृणसोमेभ्य । पा० ५।४।१२५ ]

**दक्षिणेर्मा लुब्धयोगे** ॥११५॥ [पा० ५।४।१२६, स० ५।४।१५१]

दक्षिणेर्मेत्यनिजन्तो निपात्यते व्याधयोगे सति । ईर्मं व्रणम् । दक्षिणम् ईर्ममस्य दक्षिणेर्मा मृग· । लुब्धयोग इति किम्? दक्षिणेर्मं शाकटम् ।

**इञ् व्यतिहारे** ॥११६॥

क्रियाव्यतिहारे गम्यमानेऽन्यपदार्थे वर्तमानादिञ् भवति। केशाकेशि दण्डादण्डि । चकार इचि [ ५।२।४८ ] इति विशेषणार्थ· ।

[ इच् कर्मव्यतिहारे । पा० ५।४।१२७, इच् क्रियाव्यतीहारे । स०५।४।१५२]

**द्विदण्ड्यादीनि** ॥११७॥

द्विदण्ड्यादीनि शब्दरूपाणीजन्तानि निपात्यन्ते। द्वौ दण्डावस्य द्विदण्डि । द्विमुसलि । निपातनादर्थविशेषाश्रयणादिह न भवति–द्विदण्डा शालेति ॥ द्विदण्डि । द्विमुसलि । उभाञ्जलि । उभयाञ्जलि । उभादन्ति । उभयादन्ति । उभाकर्णि । उभयाकर्णि । उभाहस्ति । उभयाहस्ति । उभापाणि । उभयापाणि । उभाबाहु । उभयाबाहु । एकपदि । प्रोष्ठपदि । आच्यपदि[1] । निकुच्यकर्णि । सहतपुच्छि । प्रोष्ठपदि धावति, निकुच्यकर्णि धावतीति क्रियाविशेषणत्वात् क्रियैवान्यपदार्थ· ।

[ द्विदण्ड्यादिभ्यश्च । पा० ५।४।१२८ । क्रियायां द्वे दण्डमुसलाभ्याम् ।

उभोभयाभ्यामञ्जलिपाणिहस्तदन्तकर्णेभ्य । बाहोर्लुक् । सहतपुच्छयेकपद्याढ्यपद्याद्य । प्रोष्ठपदि निकुच्यकर्णि च । स० ५।४।१५३-१५७ । ¹आद्यपदि Ms ]

भृतिमासाट् ठञ् ॥११८॥

भृत्युपलक्षितान्मासाट् ठञ् भवति। पञ्चको मासोऽस्य पाञ्चकमासिक । दशकमासिक ।

[ मासाद् भृतिप्रत्ययपूर्वपदाट् ठञ्विधि । पा० ५।४।११६।४, मासाद् भृतिप्रत्ययादेष्ठञ् । स० ५।४।१५८ ]

सम्प्राज्जानुनो ज्ञः ॥११९॥

सम्प्रपूर्वाज्जानुनो ज्ञादेशो भवति। सगते जानुनी अस्य सज्ञ । प्रज्ञ ।

[ प्रसम्भ्या जानुनोर्ज्ञुः । पा० ५।४।१२९, स० ५।४।१५९ । सम्प्राज्जानोर्ज्ञुज्ञौ । जैनेन्द्र ४।२।१६४ । अकारान्तोऽयमादेशो बहुभि कृत । उकारान्तोऽपि कश्चित् । गोयीचन्द्र ७।५०५ ]

ऊर्ध्वाद् वा ॥१२०॥ [स० ५।४।१६०]

ऊर्ध्वशब्दात्परस्य जानुनो ज्ञादेशो वा भवति। ऊर्ध्वे जानुनी अस्य ऊर्ध्वज्ञ ऊर्ध्वजानु ।

[ ऊर्ध्वाद्विभाषा । पा० ५।४।१३० ]

धनुर्नाम्नि ॥१२१॥

सज्ञायामेवान्यपदार्थे धनु शब्द प्रयुज्यते। दृढधनु शतधनु । नाम्नीति किम्? गाण्डीवधन्वा। धन्वन्निति प्रकृत्यन्तरमविशेषेण सज्ञायामसज्ञाया वा ।

[ धनुषश्च । पा० ५।४।१३२ । धनुषोऽनङ् । स० ५।४।१६१ । वा सज्ञायाम् । पा० ५।४।१३३, स० ५।४।१६२ । Candra's rule reminds one of शिरोवेष्टनपूर्वकनासिकाप्रदर्शन. ]

जायाया निङ् ॥१२२॥ [पा०५।४।१३४, स०५।४।१६२क]

जायान्तस्य निङ् भवति। युवजानि वधूजानि ।

**सूत्पूतिसुरभेर्गन्धस्येत्** ॥१२३॥ [स० ५।४।१६२ख]

स्वादिभ्यः परस्य गन्धस्येद् भवति। सुगन्धि चन्दनम्। उद्गन्धि कुसुमम्। पूतिगन्धि शरीरम्। सुरभिगन्धि केसरम्।

[ गन्धस्येदुत्पूतिसुसुरभिभ्य.। पा० ५।४।१३५ ]

**आगन्तोर्वा** ॥१२४॥ [स० ५।४।१६२ग]

स्वादिभ्य परस्यागन्तोर्गन्धस्येद्वा भवति। सुगन्धिरापण सुगन्ध। उद्गन्धि उद्गन्ध। पूतिगन्धि पूतिगन्ध। सुरभिगन्धि सुरभिगन्ध।

**अल्पे** ॥१२५॥ [स० ५।४।१६२घ]

अल्पेऽर्थे वर्तमानस्य गन्धस्येद् वा भवति। सूपस्य गन्धोऽस्य सूपगन्धि भोजनम्। सूपगन्धम्। अन्नगन्धि अन्नगन्धम्।

[ अल्पाख्यायाम्। पा० ५।४।१३६। वा(?)ल्पे। जै० ४।२।१७०। In the extant Sarasvatīkanthābharana Mss rules corresponding to 122-124 have been dropped It is presumed they were identical with those found in Candra ]

**उपमानात्** ॥१२६॥ [स० ५।४।१६३]

उपमानात्परस्येद् वा भवति। उत्पलगन्धि उत्पलगन्ध।

[ उपमानाच्च। पा० ५।४।१३७ ]

**पादस्य पदहस्त्यादिभ्यः** ॥१२७॥

पादस्य हस्त्यादिवर्जितादुपमानात्परस्य पादित्ययमादेशो भवति। व्याघ्रस्येव पादावस्य व्याघ्रपात्। अहस्त्यादिभ्य इति किम्? हस्तिपाद ॥ हस्तिन्। कपाट[1]। कटोल। कटोलक। गण्डोल। गण्डोलक। महेला। दासी। गणिका। कुसूल।

[ पादस्य लोपोऽहस्त्यादिभ्य। पा० ५।४।१३८। पादस्य पादहस्त्यश्वाजदासी-महेला-गणिका-कुसूल-जाल-कटोल-गण्डोलकेभ्य। स० ५।४।१६४ [1]Hc. and others have कपोत. The word is not found in the *Kāśikā* nor in SK ]

**कुम्भपद्यादयः** ॥१२८॥

कुम्भपद्यादयः स्त्रिया ङीबन्ता एव कृतपदादेशा साधवो भवन्ति। कुम्भपदी। जालपदी। शतपदी। मुनिपदी। शितिपदी। सूत्रपदी। गोधापदी। कलशीपदी। विपदी। दासीपदी। अपदी। निष्पदी। आर्द्रपदी। कुणिपदी[1]। कृष्णपदी। द्रोणपदी। सूकरपदी। शकृत्पदी। अष्टापदी। सूचिपदी। एकपदीति न पठितव्यम् एकपादिति दर्शनात्[2]।

[कुम्भपदीषु च। पा० ५।४।१३९। कुम्भ-जाल-शत-सूत्र-स्थूणा-मुनि-शित्यार्द्र-गोधा-कलशी-दासीभ्य। विष्णु-कृष्ण-कुणि-गुण-द्रोणी-शकृत्-सूकर-सूची-शुचि-वि-नञ्-निर्-अष्टाभ्यश्च। स० ५।४।१६५-१६६। [1]Ms कुलपदी which points to कुणपदी which is found in the *Kāśikā*, but Bhoja's कुणिपदी is decisive [2]कथमेकपादिति? केचिदिहैकपदीशब्द न पठन्ति। हेमचन्द्रबृहद्वृत्ति।]

**सुसंख्यादेः** ॥१२९॥

सुपूर्वस्य सख्यापूर्वस्य च पादस्य पादित्ययमादेशो भवति। सुपात् द्विपात्।

[संख्यासुपूर्वस्य। पा० ५।४।१४०, [सु]सख्यादे। स० ५।४।१६७]

**वयसि दन्तस्य दतृ** ॥१३०॥ [पा० ५।४।१४१, स० ५।४।१६८]

वयसि गम्यमाने सुसंख्यादेर्दन्तस्य दत्रादेशो भवति। सुदन्। द्विदन्। त्रिदन्। वयसीति किम्? सुदन्तो दाक्षिणात्य। द्विदन्त कुञ्जर।

**षोडन्** ॥१३१॥ [स० ५।४।१६९]

षोडन्निति वयसि निपात्यते षड्दशान इत्यस्मिन्नर्थे।

[षष उत्वं दतृदशधासूत्तरपदादे ष्टुत्व च वक्तव्यम्। पा० ६।३।१०९।३]

**स्त्री नाम्नि** ॥१३२॥

स्त्रीसंज्ञाविषये दन्तस्य दत्रादेशो भवति। अयोदती हलदती। नाम्नीति किम्? समदन्ती। स्निग्धदन्ती।

[विभाषा संज्ञायाम्। पा० ५।४।१४३, स्त्रिया सज्ञायाम्। स० ५।४।१७०]

**अग्रान्तशुद्धशुभ्रवृषवराहाहिमूषिकश्यावशिखरारोकाद्वा** ॥१३३॥
[०रोकेभ्यो वा। स० ५।४।१७१]

अग्रान्ताच्छुद्धादिभ्यश्च परस्य दन्तशब्दस्य दत्रादेशो वा भवति। कुड्मलाग्रदन् कुड्मलाग्रदन्त । शुद्धदन् शुद्धदन्त । शुभ्रदन् शुभ्रदन्तः। वृषदन् वृषदन्त । वराहदन् वराहदन्त । अहिदन् अहिदन्त । मूषिकदन् मूषिकदन्त । श्यावदन् श्यावदन्त । शिखरदन् शिखरदन्त । अरोकदन् अरोकदन्त । अरोकोऽदीप्ति ।

[ विभाषा श्यावारोकाभ्याम्। अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च। पा० ५।४। १४४-१४५। अनुक्तसमुच्चयार्थश्चकार । अहिदन् अहिदन्त । मूषिकदन् मूषिकदन्त । गर्दभदन् गर्दभदन्त.। शिखरदन् शिखरदन्त । काशिका। गर्दभदन् गर्दभदन्त would appear to be an interpolation ]

**ककुत् ककुदस्यावस्थायाम्** ॥१३४॥ [स० ५।४।१७२]

ककुदस्य शरीरावस्थाया गम्यमानाया ककुदादेशो भवति। असञ्जातककुद् बाल । यष्टिककुद् युवा। पूर्णककुद् मध्यम । पन्निककुज्जीर्ण । स्थूलककुद् बलवान्। अवस्थायामिति किम्? श्वेतककुद ।

[ ककुदस्यावस्थाया लोप । पा० ५।४।१४६ ]

**त्रिककुत्पर्वते** ॥१३५॥ [पा० ५।४।१४७, स० ५।४।१७३]

त्रिककुदिति पर्वतेऽभिधेये निपात्यते। त्रिककुत् पर्वत । पर्वत इति किम्? त्रिककुद । ककुदशब्दनिवृत्त्यर्थं वचनम्।

**व्युदः काकुत् काकुदस्य** ॥१३६॥

व्युद्भ्या परस्य काकुदस्य काकुदित्ययमादेशो भवति। विकाकुत् उत्काकुत्। काकुद तालूच्यते।

[ उद्विभ्या काकुदस्य। पा० ५।४।१४८, उद्विभ्या काकुत्काकुदस्य। स० ५।४।१७४ ]

**पूर्णाद् वा** ॥१३७॥ [स० ५।४।१३५]

पूर्णात्परस्य काकुदस्य काकुदादेशो वा भवति। पूर्णकाकुत् पूर्णकाकुद ।

[ पूर्णाद्विभाषा। पा० ५।४।१४९ ]

**सुहृद्दुर्हृदौ मित्रामित्रयोः** ॥१३८॥ [पा० ५।४।१५०, स० ५।४।१७६]

सुहृन्मित्रे निपात्यते, दुर्हृदमित्रे। मित्रामित्रयोरिति किम्? सुहृदयः साधु, दुर्हृदयश्चौर । हृच्छब्देन सिद्धे हृदयशब्दनिवृत्त्यर्थं वचनम्।

**उरोभ्यः कप्** ॥१३९॥

उर प्रभृत्यन्तात् कब् भवति। व्यूढोरस्क प्रियसर्पिष्क ॥ उरस्। सर्पिस्। उपानह्। पुमान्। अनड्वान्। पय । नौ । लक्ष्मीः। दधि। मधु। शालि। येषामेकवचनान्ताना पाठस्तेषामन्यवचनान्ताना शेषाद्वा [ १४२ ] इति कब् विकल्पेन भवति। द्विपुमान् द्विपुस्क । द्विनौ· द्विनौक ।

[ उर प्रभृतिभ्य कप्। पा०५।४।१५१। उर-सर्पि-र्दधि-मधूपानच्-छालिभ्य. कप्। पुमनुडुन्नौपयोलक्ष्मीभ्य एकत्वे। स० ५।४।१७७-१७८. The *Kāśikā* reads अर्थान्नञ in this Gana and Bhoja has the rule नञोऽर्थात् v 4 179 here ]

**इनः स्त्रियाम्** ॥१४०॥ [पा० ५।४।१५२, स० ५।४।१८०]

इनन्तात् स्त्रियामभिधेयाया कब् भवति। बहुदण्डिका बहुस्वामिका नगरी। स्त्रियामिति किम्? बहुदण्डी राजा, बहुदण्डिक·।

**ङ्यूङृतोऽभ्रुवः** ॥१४१॥

ङयन्तमूङन्तमृदन्तं च यत्तदन्ताद् भ्रूवर्जितात् कब् भवति। बहुकुमारीक. बहुब्रह्मबन्धूक· बहुकर्तृक.। अभ्रुव इति किम्? सुभ्रू ।

[ नद्यृतश्च। पा० ५।४।१५३। ङ्यूङृत। शेषाद्वा। न सुभ्र्वादिभ्य। स० ५।४।१८१-१८३ ]

**शेषाद्वा** ॥१४२॥ [स० ५।४।१८२]

यतोऽन्यपदार्थे वर्तमानात्समासान्तो नोक्तस्ततः कब् वा भवति। बहुखट्वाक बहुखट्व ।

[ शेषाद्विभाषा। पा० ५।४।१५४ ]

**न नाम्नि** ॥१४३॥

संज्ञाया कब् न भवति। विश्वदेव.। विश्वयशा·।

[ न सञ्ज्ञायाम्। पा० ५।४।१५५, सञ्ज्ञायाम्। स० ५।४।१८४। न is obtained by anuvrttı from the previous rule न सुभ्रवादिभ्य ]

**ईयसः** ॥१४४॥ [स० ५।४।१८५, ईयसश्च। पा० ५।४।१५६]

ईयसन्तात् कब् न भवति। बहुश्रेयान्।

**ङ्य ईत्** ॥१४५॥

ईयस परस्य ङीप ईद् भवति। कपो ह्रस्वस्य चापवाद। बह्वय. श्रेयस्योऽस्य बहुश्रेयसी पुरुप। विद्यमानश्रेयसी।

[ ईयसश्च। पा० ५।४।१५६। ईयस उपसर्जनदीर्घत्व च। पुवद्वचनात् सिद्धम्। वा० १-२। ङया ईच। स० ५।४।१८६ ]

**स्तुतौ भ्रातुः** ॥१४६॥ [स० ५।४।१८७]

स्तुतौ गम्यमानाया भ्रातु कब् न भवति। पटुभ्राता। स्तुताविति किम्? मूर्खभ्रातृक।

[ वन्दिते भ्रातु। पा० ५।४।१५७ ]

**नाडीतन्त्र्योः स्वाङ्गे**॥१४७॥ [पा०५।४।१५९,स०५।४।१८८]

नाडीतन्त्र्यो स्वाङ्गे वर्तमानयो कब् न भवति। बहुनाडि काय। [1]बहुतन्त्रीर्ग्रीवा। तन्त्रीरत्र धमन्युच्यते। स्वाङ्ग इति किम्? बहुनाडीकः स्तम्ब.। बहुतन्त्रीका वीणा। अथवा स्वाङ्गमन्यपदार्थस्यावयव उच्यते। बहुनाडि. स्तम्ब। स्वाङ्ग इति किम्? बहुनाडीको गृहस्थ। बहुतन्त्रीको नट।

[ [1]बहुतन्त्री ग्रीवा। तन्त्र्यत्र० Ms ]

**निष्प्रवाणिः** ॥१४८॥ [स०५।४।१८९। ०श्च। पा०५।४।१६०]

कबभावो निपात्यते। प्रोयतेऽस्यामिति प्रवाणी, [1]तन्त्रवायशलाका। निर्गता प्रवाण्यस्य निष्प्रवाणि पट। तन्त्रादचिरापहृत इत्यर्थ.।

[ [1]In Bengal तन्तुवाय is much more common than तन्त्रवाय. Both *Kāśikā* and *Hrdayahārinī* have तन्तुवाय which appears to be the correct reading ]

इति चान्द्रे व्याकरणे चतुर्थोऽध्याय समाप्त ।

---

**सन्यङोराद्यमेकाज् द्विः** ॥१॥ [०राद्य एकाज्०। स०६।१।१]

सनन्तस्य यङन्तस्य च प्रथममेकाच्छब्दरूप द्विरुच्यते। तितिक्षते जुगुप्सते चिकीर्षति। लोलूयते पापच्यते।

[ एकाचो द्वे प्रथमस्य। लिटि धातोरनभ्यासस्य। सन्यङो। पा०६।१।१,८-९]

**चङ्लिटोः** ॥ २ ॥

चङि लिटि च परत आद्यमेकाज् द्विरुच्यते[1]। अपीपचत्। पपाच।

[ लिटि धातोरनभ्यासस्य। चङि। पा० ६।१।८,११। श्लुचङि। लिङ्यनामि। स० ६।१।२-३. [1]वृत्तगन्धि। ]

**आद्यादचः** ॥ ३ ॥

प्रथमादच परमेकाज् द्विरुच्यते। अटिटिषति अशिशिषति। अटाट्यते अशाश्यते। आटिटत् आशिशत्। प्रोर्णुनाव। आद्यादिति किम्? जजागार। अच इति किम्? पपाच।

[ अजादेर्द्वितीयस्य। पा० ६।१।२, अजादेर्द्वितीय। स० ६।१।४ ]

**नन्द्रो हलि** ॥ ४ ॥

नकारदकाररकारा हलि परतो न द्विरुच्यन्ते। उन्दिदिषति अड्डि-

डिषति उब्जिजिषति। न्द्र इति किम्? ईचिक्षिषते। हलीति किम्? प्राणिणिषति। आद्यादच इत्येव। दिद्रासति।

[नन्द्रा सयोगादय। पा० ६।१।३। बकारस्याप्यय प्रतिषधो वक्तव्य। उब्जिजिषति। यदा बकरोपध उब्जिरुपदिश्यते तदाय प्रतिषधः। दकारोपधोपदेशे तु न वक्तव्य। बत्व तु दकारस्य विधातव्यम्। काशिका। न न्द्रा· संयोगादय। स० ६।१।५]

**अयि रः** ॥ ५ ॥ [स० ६।१।६]

अयकारे हलि परतो रेफो न द्विरुच्यते। अर्चिचिषति अर्दिदिषति। अयीति किम्? अरार्यते।

[यकारपरस्य रेफस्य प्रतिषेधो न भवतीति वक्तव्यम्। काशिका ६।१।३]

**पुनः** ॥ ६ ॥ [स० ६।१।७]

यद् द्विरुक्त तत्पुनर्न द्विरुच्यते। जुगुप्सिषते लोलूयिषते।

[लिटि धातोरनभ्यासस्य। पा० ६।१।८]

**ईर्ष्यो यिः सन् वा** ॥ ७ ॥ [स० ६।१।८]

ईर्ष्यतेर्यिशब्दो द्विरुच्यते सन् वा। ईर्ष्यियिषति ईर्ष्यिषिषति।

[ईर्ष्यतेस्तृतीयस्य। ६।१।३।२। ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यम्। केचित्तावदाहुरेकाच इति। ईर्ष्यिषिषति। अपर आह व्यञ्जनस्येति। भाष्यम्।]

**सुपो यथेष्टम्** ॥ ८ ॥

सुबन्तस्य यथेष्टमाद्यमेकाजन्यद् वा द्विरुच्यते। पुपुत्रीयिषति पुतित्रीयिषति पुत्रीयियिषति पुत्रीयिषिषति। क्वचिद् द्वितीयतृतीयौ। अशिश्वीयिषति अश्वीयियिषति। कण्ड्वादीना तृतीय एव। कण्डूयियिषति। असूयियिषति।

[वा नामधातूनाम्। पा० ६।१।३।४। वा नामधातूनां तृतीयस्य द्वे भवत इति वक्तव्यम्। अश्वीयियिषति अशिश्वीयिषति। अपर आह—यथेष्टं वा। यथेष्टं वा नामधातूनामिति। पुपुत्रीयिषति पुतित्रीयिषति पुत्रीयियिषति। भाष्यम्। Patañjali mentions these forms, Candra-vrtti adds पुत्रीयिषिषति, the *Kāśikā* adds पुपुतित्रीयियिषति. Vopadeva has पुपुतित्रीयियिषिषति.

कण्ड्वादीनां च। पा० ६।१।३।३। सुब्धातूनां यथेष्टम्। अजादीना द्वितीयात्। कण्ड्वादीनां तृतीयात्। स० ६।१।९-११ ]

**दाश्वान् साह्वान् मीढ्वांश्चिक्लिदं चक्नसम् ॥ ९ ॥**

दाश्वानिति दाशे· क्वसावद्वित्वमनिट्त्वं च निपात्यते। साह्वानिति सहे. क्वसुदीर्घत्व च। मीढ्वानिति मिहेर्ढत्वं च। चिक्लिदमिति क्लिदे. के द्वित्वं च[1]। चक्नसमिति क्नसेरचि द्वित्वम्। कथ चक्रम् बभ्रु ययुरिति [2] [2]औणादिकाः [ दशपादी ८।१०३, पञ्चपादी १।२२,२१ ]।

[ दाश्वान् साह्वान् मीढ्वाश्च। पा० ६।१।१२, द्विर्वचनप्रकरणे कृञादीना के। वा० ५। द्विर्वचनप्रकरणे कृञादीना क उपसख्यान कर्तव्यम्। चक्रम् चिक्लिदम् चक्नसमिति। कादिष्विति वक्तव्यम्। इहापि यथा स्यात्। बभ्रु ययुरिति। भाष्यम्। दाश्वान् साह्वान् मीढ्वाश्च। क्लिदे के। क्नसेरचि। स० ६।१।१२-१३क। [1]This च is superfluous [2]Not found in Cāndra Unādi ]

**चराचरचलाचलपतापतवदावदघनाघनपाटूपटा वा ॥१०॥**

चरिचलिपतिवदीनामचि द्वित्वं पूर्वस्यागागमो हलोऽनादिलोपाभावश्च निपात्यते, हन्ते कुत्वं च, पाटेर्णिलुगूगागमो ह्रस्वाभावश्च।

द्विर्वचन यणयवायावादेशाल्लोपोपान्तलोपणिलोपादिभ्य पूर्वविप्रतिषेधेन। द्विर्वचनस्यावकाश·। बिभेद। यणादीनामवकाश। दध्यत्र मध्वत्र कर्त्रत्र। चयनम् लवनम्। चायक लावक.। गोद. कम्बलद। पितघ्न.। कारणा। इहोभयं प्राप्नोति। चक्रतु चक्रु। चिचयिथ लुलविथ। चिचाय लुलाव। पपतु पपु। जग्मतु जग्मु। आटिटत् आशिशत्। द्विर्वचनं भवति पूर्वविप्रतिषेधेन। द्विर्वचनादिग् यण आत्त्व रीत्वम् ईत्त्वम् इत्त्वम् उत्त्वम् अदेङादैच परविप्रतिषेधेन। द्विर्वचनस्यावकाश स एव। एषामवकाश.। इष्टम्। ग्लाता। मात्रीयति। पीयते। आस्तीर्णम्। निपूर्ता। कर्ता चेता। कारक.। इहोभय प्राप्नोति। ईजु। जग्लौ मम्लौ। चेक्रीयते। पेपीयते। आतेस्तीर्यते। निपोपूर्यते। चिचयिथ लुलविथ। चिचाय लुलाव। एते विधयो भवन्ति परविप्रतिषेधेन। एवमन्येऽपि द्रष्टव्या।

[ चरिचलिपतिवदीनामच्याक् चाभ्यासस्य । हन्तेर्वश्च । पाटेर्णिलुक् च दीर्घ- श्चाभ्यासस्योक् च । द्विर्वचन यणप्रवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वभ्य. । द्विर्वचनात्प्रसारणात्ववत्वादिविकाररीत्वेत्वेत्वोत्वगुणवृद्धिविधय. । पा० ६।१।१२।६-१० । चरिचलिपतिवदीना वाक् चाभ्यासस्य । हन्तेर्हश्च घ । पाटेर्णिलुग्दीर्घ ऊक् च । स० ६।१।१४-१६ ]

### ष्यङः प्रधानस्य पुत्रपत्योः स्वयोरिग् यणः ॥११॥

ष्यङोऽनुपसर्जनस्य पुत्रपत्योरात्मीययो परभूतयोर्यण इग् भवति । कारीषगन्धीपुत्र कौमुदगन्धीपति । करीषस्येव गन्धोऽस्य करीषगन्धि. । उपमानादित्त्वम् [४।४।१२६], तस्यापत्यम् [२।४।१६] इत्यण् । तस्य स्त्रिया ष्यङ् [२।३।८२], तनश्चाप् । यणिक [५।१।११४] इति पर-पूर्वत्वम् । यण इक [५।२।१४७] इति दीर्घत्वम् । ष्यङ इति किम् ? इभ्यापुत्र । प्रधानस्येति किम् ? अतिकारीषगन्ध्यपुत्र । अत एव ज्ञापकात् परमकारीषगन्धीपुत्र । पुत्रपत्योरिति किम् ? कारीषगन्ध्याकुलम् । स्वयो-रिति किम् ? कारीषगन्ध्यापतिक । कारीषगन्ध्याया पुत्रकुलम् कारीष-गन्ध्यापुत्रकुलम् इति कुलमत्र स्वम् । पुत्रस्य तु सामर्थ्यात् स्वत्वमवगम्यते । कारीषगन्धीपुत्रकुलमिति विवक्षाया भवत्येव । कारीषगन्ध्यापरमपतिरिति व्यवधानान्न भवति । इग् यण इत्यधिकार ।

[ ष्यङ सम्प्रसारण पुत्रपत्योस्तत्पुरुषे । पा० ६।१।१३, ष्यङ. प्रधानस्य सम्प्रसारणं पुत्रपत्यो केवलयोस्तत्पुरुषे । स० ६।१।१७ ]

### बन्धावन्यार्थे ॥१२॥

बन्धुशब्दे परतोऽन्यपदार्थेऽभिधेये ष्यङ प्रधानस्य यण इग् भवति । कारीषगन्ध्या बन्धुरस्य कारीषगन्धीबन्धु । बन्धाविति किम् ? कारीषगन्ध्या-दुहितृक । अन्यार्थ इति किम् ? कारीषगन्ध्याबन्धु । प्रधानस्येत्येव । अतिकारीषगन्ध्यबन्धु ।

[ बन्धुनि बहुव्रीहौ । पा० ६।१।१४, स० ६।१।१८. Candra uses the usual masculine form, but as the *Kāśikā* very pertinently

points out बन्धुनीति नपुसकलिङ्गनिर्देश शब्दरूपापेक्षया, पुलिङ्गाभिधेयस्त्वयं बन्धुशब्द. ]

**मातमातृकमातृषु वा** ॥१३॥ [मातज्-मातृक० । स० ६।१।१९]

मातादिषु परतोऽन्यपदार्थेऽभिधेये ष्यङोऽनुपसर्जनस्य यण इग् वा भवति। कारीषगन्धीमात कारीषगन्ध्यामात । कारीषगन्धीमातृक कारीषगन्ध्यामातृक कारीषगन्धीमाता कारीषगन्ध्यामाता । अस्मादेव निपातनान् ङ्यूङ्तो वा कप् ।

**[ मातज्मातृकमातृषु ष्यङ् प्रसार्यो विभाषया । श्लो० वा० ६।१।१४ ]**

**वचिस्वपियजादीनां लिट्यपिति** ॥१४॥ [स० ६।१।२०]

वचे स्वपेर्यजादीना च लिट्यपिति परे यण इग् भवति । ऊचतुः ऊचु. । सुषुपतु सुषुपु । ईजतु ईजु । ऊहतु ऊहु । अपितीति किम्? उवाच सुष्वाप इयाज।

**[ वचिस्वपियजादीनां किति । पा० ६।१।१५ ]**

**ग्रहिव्यधोः** ॥१५॥ [०व्यध्यो । स० ६।१।२१]

ग्रहिव्यधोर्लिट्यपिति यण इग् भवति । जगृहतु जगृहु । विविदतु विविदु । अपितीत्येव । जग्राह विव्याध ।

**[ १५-१९ । ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च । पा० ६।१।१६ ]**

**शिन्ङितोः** ॥१६॥ [स० ६।१।२२]

ग्रहिव्यधो शिति ङिति च परतो यण इग् भवति। गृह्णाति। विध्यति । जरीगृह्यते । वेविध्यते ।

**[ सार्वधातुकमपित् । पा० १।२।४ ]**

**ज्याव्रश्चप्रच्छभ्रस्जाम्** ॥१७॥

ज्यादीना शिन्ङितो· परतो यण इग् भवति। जिनाति वृश्चति पृच्छति भृज्जति। जेजीयते वरीवृश्च्यते परीपृच्छ्यते बरीभृज्ज्यते।

**[ ज्याव्रश्चभ्रस्जाम् । पृच्छेरनङि । स० ६।१।२३-२४ ]**

**वशस्तिङ्शित्यपिति** ॥१८॥

वशेस्तिङि शिति चापिति परतो यण इग् भवति। उष्ट उशन्ति। उशन्। अपितीति किम्? वष्टि।

[ वशोङ्र्यपिति ( v 1 वशेस्तिङ्शित्यपिति )। स० ६।१।२५ ]

**व्यचोऽञ्णित्यनसि** ॥१९॥ [स० ६।१।२६]

व्यचेरञ्णित्यस्वर्जिते परतो यण इग् भवति। उद्विचिता उद्विचितुम् उद्विचितव्यम्। अञ्णितीति किम्? व्याक। व्याचक। अनसीति किम्? उरुव्यचा कण्टक।

[ व्यचे कुटादित्वमनस्यञ्णिति सम्प्रसारणार्थम्। पा० ६।१।१७।४ ]

**किति तेषाम्** ॥२०॥ [०चैतेषाम्। स० ६।१।२७]

तेषा वच्यादीना किति यण इग् भवति। उक्त उक्तवान्। सुप्तः सुप्तवान्। इष्ट इष्टवान्। उप्त उप्तवान्। ऊढ. ऊढवान्। गृहीतः गृहीतवान्। विद्ध विद्धवान्। जीन जीनवान्। वृक्ण वृक्णवान्। पृष्टः पृष्टवान्। भृष्ट भृष्टवान्। उशित उशितवान्। विचित विचितवान्।

[ वचिस्वपियजादीना किति। पा० ६।१।१५ ]

**लिटयश्वेर्द्विरुक्ते** ॥२१॥

लिट्परे द्विरुक्ते परतस्तेत्रा वच्यादीना श्विवर्जिताना यण इग् भवति। उवाच उवचिथ। सुष्वाप सुष्वपिथ। इयाज इयजिथ। उवाप उवपिथ। उवाह उवहिथ। जग्राह जग्रहिथ। विव्याध विव्यधिथ। जिज्यौ जिज्यिथ। वव्रश्च वव्रश्चिथ। पप्रच्छ पप्रच्छिथ। बभ्रज्ज बभ्रज्जिथ। ग्रहिव्रश्चिप्रच्छिभ्रस्जाम् उरत्वात् [६।२।११८] अविशेष। उवास उवसिथ। विव्याच विव्यचिथ। अश्वेरिति किम्? शिश्वाय शिश्वयिथ।

[ लिट्यभ्यासस्योभयेषाम्। पा० ६।१।१७, लिट्यश्वीनामभ्यासस्य। स० ६।१।२८ ]

**ग्रहिप्रच्छोः सनि** ॥२२॥

ग्रहे प्रच्छेश्च सनि यण इग् भवति । जिघृक्षति पिपृच्छिषति ।

[ २२-२३ । रुदविदमुषग्रहिस्वपिप्रच्छ संश्च । पा० १।२।८, ग्रहिस्वपिप्रच्छां सनि । स० ६।१।२९ ]

**स्वपः** ॥२३॥

स्वपे सनि परतो यण इग् भवति । सुषुप्सति ।

**चङि** ॥२४॥ [स्वापे॰० । पा० ६।१।१८, स० ६।१।३०]

स्वपेश्चङि परत सामर्थ्याण्ण्यन्तस्य यण इग् भवति । असूषुपत् । चङीति किम् ? स्वापयति ।

**यङि** ॥२५॥

स्वपेर्यङि यण इग् भवति । सोषुप्यते ।

**व्येस्यमोः** ॥२६॥

व्येञ स्यमश्च यङि यण इग् भवति । वेवीयते । सेसिम्यते ।

[ २५-२६ । स्वपिस्यमिव्येञां यङि । पा० ६।१।१९, स० ६।१।३१ ]

**चायः कीः** ॥२७॥ [पा० ६।१।२१, स० ६।१।३२]

चायतेर्यङि कीभावो भवति । चेकीयते । दीर्घ किम् ? चेकीत ।

**प्रे स्त्यश्च ततवतोः** ॥२८॥

प्रे सति स्त्यायतेश्च ततवतोर्यण इग् भवति । प्रस्तीत प्रस्तीतवान् । [1]प्रस्त्यो म [६।३।८८] इति पक्षे मकार । प्रस्तीम । प्रस्तीमवान् । प्रसस्तीत प्रसस्तीतवान् । प्र इति किम् ? स्त्यान. ।

[ स्त्य. प्रपूर्वस्य । पा० ६।१।२३ । प्रस्त्याप्रसस्त्योर्निष्ठायाम् । स० ६।१।३३ । [1]This line is not found in Mss ]

**स्पर्शद्रवमूर्त्योः श्यः** ॥२९॥ [स० ६।१।३४]

स्पर्शे द्रवमूर्तौ च विषये श्यायतेस्ततवतोर्यण इग् भवति । शीतो वायु । शीन घृतम् । स्पर्शद्रवमूर्त्योरिति किम् ? सश्यानो वृश्चिक. शीतेन ।

[ द्रवमूर्तिस्पर्शयो श्य । पा० ६।१।२४ । स्पर्शद्रवकाठिन्याभ्यामन्यत्रैवाय विकल्प इति चान्द्रा एव स्वीकुर्वन्ति । गोयीचन्द्र २।५१७ ]

**प्रतेः** ॥३०॥ [स० ६।१।३५ । प्रतेश्च । पा० ६।१।२५]

प्रते परस्य श्यायतेस्तनवतोर्यण इग् भवति । प्रतिशीन । प्रतिशीनवान् ।

**वाभ्यवात्** ॥३१॥

अभ्यवाभ्या परस्य श्यायतेस्तनवतोर्यण इग् भवति वा । अभिशीनम् अभिश्यानम् । अवशीनम् अवश्यानम् ।

[ विभाषाभ्यवपूर्वस्य । पा० ६।१।२६ । वाभ्यवाभ्याम् । स० ६।१।३६ ]

**स्फायः स्फी** ॥३२॥ [स० ६।१।३७]

स्फायस्ततवतो स्फीभावो भवति वा । स्फीन स्फीतवान् । स्फातमिति व्यवस्थितविभाषया नियतविषये प्रयोग ।

[ स्फाय स्फी निष्ठायाम् । पा० ६।१।२२. Acc to Jainendra and Kātantrakrdvrtti the substitute is compulsory Hc says in his Brhadvrtti विकल्पं नेच्छन्त्यन्ये Jumara says under Sam iii 505 स्फातास्तण्डुला इति स्फातिरित्यस्य मत्वर्थीयात् प्रत्ययेन. Curiously enough Śākatāyana who generally follows Candra makes the substitute compulsory स्फाय iv 1 129 It is not clear from Candra's rule whether he intends it to be optional or compulsory Probably Candra himself thought of making the rule compulsory, whereas the author of the Vrtti supplied *vā* here from the previous rule *Hrdayahārinī* also regards Bhoja's rule as optional ]

**शृतं क्षीरहविषोः** ॥३३॥

शृतमिति निपात्यते श्राते श्रपयतेर्वा चौरादिकस्य ण्यन्तस्य क्षीरे हविषि चाभिधेये । शृत हवि. क्षीरं वा । प्रयोजकव्यापारे तु यो णिच्

नदन्तस्य न भवति । श्रपिन क्षीर देवदत्तेन । क्षीरहविषोरिति किम् ?
[1]श्राणा यवागू । श्रपिता यवागूः ।

[ श्रृत पाके । पा० ६।१।२७ । श्राश्रप्यो श्रृभाव । श्रपे श्रृतमन्यत्र हेतो । वा० १-२ । श्राते श्रृत क्षीरहविषो । स० ६।१।३८ । [1]आश्राणा Mss but *Bhāṣya*, *Kāśikā* all have श्राणा. ]

**प्यायः पीः** ॥३४॥ [०पी । पा० ६।१।२८]

प्यायस्तवतो पीभावो भवति । पीन मुखम् । पीनौ बाहू ।

[ प्याय पीरनुपसर्गस्य । स० ६।१।४० ]

**आङोऽन्धूधसोः** ॥३५॥ [स० ६।१।४१]

आङ एव परस्य प्याय पीभावो भवति, स चान्धूधसोरेव । आपीनोऽन्धु । आपीनमूध । आङ इति किम् । प्रप्यानमूध । अन्धूधसोरिति किम् ? आप्यानश्चन्द्रमा ।

[ आङ्पूर्वादन्धूधसो । पा० ६।१।२८।१ ]

**लिङ्यङोः** ॥३६॥ [स० ६।१।४२, ०च । पा० ६।१।२९]

लिटि यङि च परत प्याय पीभावो भवति । आपिप्ये, आपिप्याते । आपेपीयते ।

**वा श्वेः** ॥३७॥ [स० ६।१।४३]

श्वयतेर्लिङ्यङो र्यण इग् भवति वा । शुशाव शुशुवतु । शिश्वाय शिश्वियतु । शोशूयते शेश्वीयते । उभयत्र विभाषेयम्—लिट्यपिति यजादित्वात्प्राप्ते, पिति यङि चाप्राप्ते ।

[ विभाषा श्वे । पा० ६।१।३० ]

**णौ संश्चङोः** ॥३८॥ [स० ६।१।४४]

सन्परे चङ्परे च णौ विषयभूते श्वयतेर्यण इग् भवति वा । शुशावयिषति शिश्वाययिषति । अशूशवत् अशिश्वयत् ।

[ णौ च संश्चङो. । पा० ६।१।३१ ]

**ह्वः** ॥३९॥ [स० ६।१।४५]

ह्वयते सन्परे चङ्परे च णौ विषयभूते यण इग् भवति। जुहावयिषति अजूहवत्। योगविभागो नित्यार्थ·।

**[ ह्व· सम्प्रसारणम्। पा० ६।१।३२ ]**

**द्वित्वे** ॥४०॥ [स० ६।१।४६]

द्वित्वविषये ह्वयतेर्यण इग् भवति। जुहाव जोहूयते जुहूषति। द्वित्व इत्येव सिद्धे णिचा व्यवधाने वचनमन्याद्वित्वनिमित्तव्यवधानेऽभावज्ञापनार्थम्। ह्वायकमिच्छति ह्वायकीयति। ह्वायकीयते सन् जिह्वायकीयिषति।

**[ अभ्यस्तस्य च। पा० ६।१।३३। ह्व सम्प्रसारणमभ्यस्तस्येत्येकयोगेन सिद्धे पृथग्योगकरणमभ्यस्तनिमित्तप्रत्ययव्यवधाने सम्प्रसारणाभावज्ञापनार्थम्। काशिका। ]**

**न तस्मिन्** ॥४१॥ [स० ६।१।४७]

तस्मिन् यण इकि परे पूर्वस्य यण इग् न भवति। विद्ध विचित· संवीत वृक्ण·। अस्मादेव वचनात्परस्य तावद् विधि [1]।

**[ न सम्प्रसारणे सम्प्रसारणम्। पा० ६।१।३७। [1]एकयोगलक्षणमपि सम्प्रसारणमत एव वचनात्प्रथमं परस्य यण क्रियते, पूर्वस्य च प्रसक्त प्रतिषिध्यते। हृदयहारिणी। ]**

**लिटि** ॥४२॥

लिटि परतस्तस्मिन् यण इकि परे पूर्वस्य यण इग् न भवति। विव्याध विव्याच वव्रश्च। पुनर्वचनं हलोऽनादिलोप [ ६।२।११२ ]-बाधनार्थम्।

**वयो यः** ॥४३॥

वयतेर्यकारस्य लिटि परतो यण इग् न भवति। उवाय ऊयतु ऊयु।

**[ ४२-४३। लिटि वयो य.। पा० ६।१।३८, स० ६।१।४८ ]**

**वेरपिति वा** ॥४४॥

वयतेरपिति लिटि यण इग् वा भवति। ऊवतु ऊवु·। ववतु ववु।

[(वश्चास्यान्यतरस्यां किति।) वेञ। पा० ६।१।४०, वेञ। अपिति वा। स० ६।१।४९-५०]

**ल्यपि च** ॥४५॥ [पा० ६।१।४१]

ल्यपि लिटि च वयतेर्यण इग् न भवति। प्रवाय उपवाय। ववौ ववियं। लिटि [1]पृथग्वचनानर्थक्यात्प्रतिषेधस्यानुवृत्तिः।

[ल्यपि। स० ६।१।५१। [1]पृथग्विकल्पानर्थक्यात् इति पुस्तकान्तरे पाठः।]

**ज्यः** ॥४६॥ [स० ६।१।५२। ज्यश्च। पा० ६।१।४२]

जिनातेर्ल्यपि यण इग् न भवति। परिज्याय उपज्याय।

**व्यः** ॥४७॥ [स० ६।१।५३। व्यश्च। पा० ६।१।४३]

व्ययतेर्ल्यपि यण इग् न भवति। प्रव्याय। उपव्याय।

**परेर्वा** ॥४८॥ [स० ६।१।५४]

परे परस्य व्ययतेर्ल्यपि वा यण इग् न भवति। परिवीय परिव्याय।

[विभाषा परे। पा० ६।१।४४]

**एचोऽशित्यात्** ॥४९॥

एजन्तस्य धातोरशिद्विषय आत्त्वं भवति। ग्लाता ग्लातुम्। म्लाता म्लातुम्। निगाता निगातुम्। एच इति किम्? कर्ता। अशितीति किम्? ग्लायति। कथं जग्ले मम्ले? श एवेत् शित्। शकारश्च केवल इन्नास्तीति शकारादौ प्रतिषेधः। चेता स्तोतेति न भवति दीङोऽक्ङिति [५२] इति ज्ञापकेन लाक्षणिकस्याग्रहणात्। अधातोर्न भवति, धातो [1]प्रस्तावात्, अशितीति च प्रतिषेधस्य तत्रैव सम्भवात्। गोका नौका। विषयसप्तमीति किम्? सुत्र सुग्ल।

[आदेच उपदेशेऽशिति। पा० ६।१।४५, धातोरुपदेश एचोऽशिदेशोरात्। स० ६।१।५५। [1]प्रस्तावात्। गोका नौका। अशितीति L]

**अलिटि व्यः** ॥५०॥ [स० ६।१।५६]

व्ययतेरलिट्येचोऽशित्यात्त्वं[1] भवति। संव्याता। संव्यातुम्। अलिटीति किम्? संविव्याय संविव्ययिथ। अशितीत्येव। संव्ययति।

[न व्योऽलिटि। पा० ६।१।४६, [1]एच अशित्यात्त्व L ]

**स्फुरिस्फुलोर्घञि** ॥५१॥ [स्फुर० । स० ६।१।५७]

स्फुरे स्फुलेश्च घञ्येच आत्त्व भवति। विस्फार विस्फाल ।

[स्फुरतिस्फुलत्योर्घञि। पा० ६।१।४७ ]

**दीङोऽक्ङित्सनि ल्यपि** ॥५२॥

दीङोऽक्ङित्सन्विषये ल्यब्विषये चात्त्व भवति। उपदाता उपदातुम्। उपदाय ईषदुपदानम्। उपदायो वर्तते। अक्ङित्सनीति किम्? दीन देदीयते उपदिदीषते।

[मीनातिमिनोतिदीङा ल्यपि च। पा० ६।१।५०। दीङ एज्झेतौ। ल्यपि च। स० ६।१।५८-५९ Curiously enough both Candra and Bhoja ignore Sarvavarman's rule सनि दीङ Ākhyāta 146 कालापाः सन्यात्त्वं नित्यमत्रोदाहरन्ति, न पाणिनीयाश्चान्द्राश्च। गोयीचन्द्र.। इदम् [सनि] आत्त्वं सूत्रवार्त्तिकभाष्येषु न दृश्यते। माधव.। पदकारोऽप्याह—दीङ सन्यात्त्वं वक्तव्यम्। अत्र लालायित. फणी। दुर्गटीका। ]

**मिम्योरखलचि** ॥५३॥ [स० ६।१।६०]

मिनोतिमीनात्योर्मीयतेश्च[1] खलज्वर्जितेऽक्ङित्सन्विषये ल्यब्विषये चात्त्वं भवति। निमाता निमातुम् निमाय। प्रमाता प्रमातुम् प्रमाय। अखलचीति किम्? ईषन्निमय, निमयो वर्तते। ईषत्प्रमय., प्रमयो वर्तते। अक्ङित्सनीत्येव। मित्सम् मेमीयते। सनीसादेशादेवाविधि·।

[मीनातिमिनोतिदीङा ल्यपि च। पा० ६।१।५०, निमि-मी-लिया खलचोः प्रतिषेध.। वा० २। मिम्योरखलचीति चान्द्रे दृश्यते। गोयीचन्द्र। [1]मीयतेश्च is wanting in Mss, but Bhoja says मिम्योरिति मिनोतेर्मीनातेर्मीयतेश्च ग्रहणम् ]

**लियो वा** ॥५४॥ [स० ६।१।६१]

लीयतेर्लिनातेश्च खल्वर्जितेऽक्ङित्सनि ल्यपि चात्वं भवति वा। विलाता विलेता। विलाय विलीय। अखलचीत्येव। ईषद्विलयः, विलयो वर्तते। अक्ङित्सनीत्येव। लीनम् लेलीयते लिलीषते। व्यवस्थितविभाषया प्रलम्भनपूजाशालीनीकरणेषु णौ नित्यमात्वं भवति। कस्त्वामुल्लापयते? जटाभिरालापयते। श्येनो वर्तिकामुल्लापयते[1]।

[ विभाषा लीयते। पा० ६।१।५१। [1]One Ms has वर्तकामपलापयते here and under 1 4 122 and the other उपलापयते in both, places, but grammars generally have उल्लापयते here विसंवाद-न्यक्करणयोर्णौ नित्यमिति वामन। सम्पातने नित्यमिति धर्मदास। गोयीचन्द्र। Should we read सम्पातने च नित्यमिति धर्मदास ? ]

**अपगुरो णमुलि** ॥५५॥ [पा० ६।१।५३, स० ६।१।६३]

अपपूर्वस्य गुरोर्णमुल्येच आद् वा भवति। अपगारम् अपगारम्। अपगोरम् अपगोरम्।

**चिस्फुरोर्णौ** ॥५६॥ [पा० ६।१।५४, स० ६।१।६४]

चिनोतेः स्फुरतेश्च णौ परत एच आद् वा भवति। चापयति चाययति। स्फारयति स्फोरयति।

**प्रजने वियः** ॥५७॥ [स० ६।१।६५]

वेते प्रजने वर्तमानस्य णावेच आद् भवति वा। पुरोवातो गाः प्रवापयति, प्रवाययति। गर्भं ग्राहयतीत्यर्थ।

[ प्रजने वीयते। पा० ६।१।५५ ]

**भियः प्रयोजकात्** ॥५८॥

भियो णावेच आद् वा भवति, सा चेद् भी प्रयोजकाद् भवति। मुण्डो भापयते। मुण्डो भीषयते। प्रयोजकादिति किम्? कुञ्चिकयैनं भाययति। करणादत्र भीर्नतु प्रयोजकात्।

[ बिभेतेर्हेतुभये। पा० ६।१।५६, भियो हेतुभये। स० ६।१।६६ ]

**स्मेश्च** ॥५९॥

स्मयतेर्णिच्च आत्त्वं नित्य योगविभागात्, स्मयश्चेत्प्रयोजकाद् भवति। मुण्डो विस्मापयते। जटिलो विस्मापयते। प्रयोजकादित्येव। तपसैनं विस्माययति।

[नित्यं स्मयते। पा० ६।१।५७, स्मे स्मये नित्यम्। स० ६।१।६७]

**क्रीङ्जीनाम्** ॥६०॥ [स० ६।१।६९, ०णौ। पा० ६।१।४८]

क्रीणातेरिङो जयतेश्च णावेच आद् भवति। क्रापयति अध्यापयति जापयति। सिध्यतेरपारलौकिके [पा० ६।१।४९, स० ६।१।७०] इति न वक्तव्यम्। अन्न सावयति, ग्राम साधयतीति साधिना सिद्धम्। अन्नं सेधयतीति भवितव्यमेव, भौवादिकस्याप्रतिषेधात्, सुब्धातोश्च सम्भवात्। नियतविषयत्वेऽपि वा सिध्यतेरपि ण्यन्तस्यात्र प्रयोगो न भविष्यति। पारलौकिकेऽपि च दृश्यते। धर्मं साधयति, तप साधयति, ज्ञानं साधयतीति। तपस्तापस सेधयतीति, स्वान्येवैन कर्माणि सेधयन्तीति नावश्य पारलौकिकी सिद्धि, ऐहिक्या अपि सम्भवात्। तपस्तापस साधयतीति भवितव्यमेव, साधेरप्रतिषेधात्।

**अष्ठिवुष्वष्कादेः षः सः** ॥६१॥ [०वुष्वष्केरादे ०। स०६।१।७१]

ष्ठिवुष्वष्किवर्जिताना धातूनामादे षकारस्य सकारादेशो भवति। षह सहते। षिच षिञ्चति। ष्ठिवुष्वष्कपर्युदास किम्? ष्ठीव्यति ष्वष्कते। आदिग्रहण किम्? कषति। ष्ठिवुष्वष्किसदृशग्रहणादिह न भवति—षण्ड· षण्डीयति। अज्दन्त्यपरा सादय षोपदेशा स्मिदिस्वदिस्वञ्जिस्वपयश्च सृपिसृजिस्तृस्त्यासेकृसृवर्जम्।

[धात्वादे ष स। पा० ६।१।६४, सादेशे सुब्धातुष्ठिवुष्वष्कतीना प्रतिषेध। वा० १। अज्दन्त्यपरा· सादय· षोपदेशा स्मिङ्स्वदिस्विदिस्वञ्जिस्वपयश्च सृपिसृजिस्तृस्त्यासेकृसृवर्जम्। भाष्यम्।]

**णो नः** ॥६२॥ [पा० ६।१।६५, स० ६।१।७२]

धातूनाम्' आदेर्णकारस्य नकारो भवति। णह नह्यति। णम नमति। आदेरित्येव। रणति। ष्ठिवुष्वक्कसदृशप्रस्तावादिह न भवति। णकार णकारीयति। सर्वे नादयो णोपदेशा, नृतिनर्दिनन्दिनक्किनटिनाथृनाधृवर्जम्।

[सर्वे नादयो णोपदेशा नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृनृवर्जम्। भाष्यम् ६।१।६५। नृतिनन्दिनर्दिनक्किनाटिनाधृनाथृवर्जं नादयो णोपदेशा। स० ६।१।७२ हृदयहारिणी। 'धातूनाम् is dropped in Mss ]

**यो वलि लोपः** ॥६३॥

यकारस्य वलि परतो लोपो भवति। क्नोपयति पचेरन्। वलीति किम्? कनूय्यते। कथ जीरदानुरास्रेमाणमिति? छान्दसो वर्णलोप।

[लोपो व्योर्वलि। पा० ६।१।६६। अनारम्भो वा (वलोपस्य)। आस्रेमाणम् जीरदानुरिति वर्णलोपात्। वा० ६-७। व्योर्वलि लोप। स० ६।१।७३। भाष्यचान्द्रयोस्तु वान्ताद्धातोर्विजप्रमाणम्। कथमन्यथा व्वोर्लोपे वग्रहण प्रत्याख्यातम्? भाष्येऽप्युक्त वकारस्योदाहरण नास्ति। चन्द्रगोमिणा "यो वलि लोप." इति प्रणीतम्। कातन्त्रपरिशिष्टम् २।१२ ]

**वेरनचः** ॥६४॥ [स० ६।१।७४]

वेरनच्कस्य लोपो भवति। द्विट घृतस्पृक्। अनच इति किम्? दर्वि जागृवि।

[वेरपृक्तस्य। पा० ६।१।६७ ]

**हलस्तिप्सिपः** ॥६५॥ [स० ६।१।७५]

हल उत्तरस्य तिप सिपश्चानच्कस्य लोपो भवति। अबिभर्भवान्, अजागर्भवान्। अभिनोऽत्र, अच्छिनोऽत्र। हल इति किम्? अपचत् अपच। तिप्सिप इति किम्? अभैत्सीत्। अनच इत्येव। जागर्ति। बिभेद।

[६५-६७। हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्। पा० ६।१।६८ ]

**सोः** ॥६६॥ [स० ६।१।७६]

हल उत्तरस्य सोरनच्कस्य लोपो भवति। राजा तक्षा। हे राजन्, हे तक्षन्। अनच इत्येव। राजसु।

**ङ्यापो दीर्घात्** ॥६७॥ [स० ६।१।७७]

ङयन्तादाबन्ताच्च दीर्घात्परस्य सोर्लोपो भवति। कुमारी गौरी। खट्वा कारीषगन्ध्या। ङ्याप इति किम्? ग्रामणी शुभया। दीर्घादिति किम्? निष्कौशाम्बि· बहुखट्व। अनच इत्येव। खट्वासु।

**एङ्ह्रस्वात्सम्बुद्धावतः** ॥६८॥

एङन्ताद्ध्रस्वान्ताच्च परस्य सोरतकारकस्य सम्बोधने लोपो भवति। हे अग्ने, हे वायो, हे ब्राह्मण, हे नदि। हे कुण्डेति परत्वादम्भावाल्लोप। एङ्ह्रस्वादिति किम्? हे श्री। सम्बुद्धाविति किम्? वृक्ष। अत इति किम्? हे कतरत्।

[ एङ्ह्रस्वात्सम्बुद्धे। पा० ६।१।६९, सम्बुद्धिलोपे डतरादिभ्य प्रतिषेध। वा० १। एङ्ह्रस्वात्सम्बुद्धेरनत। स० ६।१।७८ ]

**ह्रस्वस्यातिङि पिति तुक्** ॥६९॥

अतिङि पिति परतो ह्रस्वान्तस्य धातोस्तुगागमो भवति। अग्निचित् सोमसुत्। प्रकृत्य प्रस्तुत्य। ह्रस्वस्येति किम्? आहूय। अतिङि पितीति किम्? पचति। अनिङीति तिङ्सदृशस्य साधनार्थस्य ग्रहणाद्विपि सुबादिषु च न भवति। अश्वति पटुषु पटुतम। ग्रामणिकुलमिति बहिरङ्गस्य ह्रस्वस्यासिद्धत्वात्, वृत्रहकुलमिति नलोपस्यासिद्धत्वात्तुग् न भवति।

[ ह्रस्वस्य पिति कृति तुक्। पा० ६।१।७१, स० ६।१।७९ ]

**छे** ॥७०॥

छकारे परतो ह्रस्वस्य तुग् भवति। इच्छति गच्छति यच्छति। संहितायामिति न वक्तव्यमाचारस्यौपश्लेषिकत्वात्।

[ संहितायाम्। छे च। पा० ६।१।७२-७३। संहिताया छे। स० ६।१।८० ]

**आङ्माङः** ॥७१॥ [०माङो । स० ६।१।८१]

छे परत आङो माङश्च तुग् भवति । आच्छायायाः । माच्छैत्सीत् । ङकार किम् ? आच्छाया आछाया । प्रमाच्छन्द प्रमाछन्दः ।

[ आङ्माङोश्च । पा० ६।१।७४ ]

**दीर्घस्य** ॥७२॥ [स० ६।१।८२]

दीर्घस्य च्छे परतस्तुग् भवति । ह्रीच्छति, म्लेच्छति ।

[ दीर्घात् । पा० ६।१।७५ ]

**पदान्तस्य वा** ॥७३॥ [स० ६।१।८३]

पदान्तस्य दीर्घस्य च्छे परतस्तुग् वा भवति । कुटीच्छाया कुटीछाया। कुवलीच्छाया कुवलीछाया ।

[ पदान्ताद्वा । पा० ६।१।७६ ]

**इको यणचि** ॥७४॥ [पा० ६।१।७७, स० ६।१।८४]

अचि य उपश्लिष्ट इक् तस्य यणादेशो भवति । दध्यत्र । मध्वत्र । कर्त्रर्थ ।

**एचोऽयवायावः** ॥७५॥ [पा० ६।१।७८, स० ६।१।८५]

एचः स्थानेऽचि परतोऽय् अव् आय् आव् इत्येत आदेशा भवन्ति । चयनम् लवनम् चायक लावक ।

**यि परेऽवावौ** ॥७६॥

यकारादौ परे[1] परत एचो यथास्वमवावौ भवत । गव्यम् नाव्यम् । यीति किम् ? गोभि । पर इति किम् ? गोयानम् नौयानम् । सप्तमीनिर्देशादेव परत्वे सिद्धे परवचन प्रकृतिनिवृत्त्यर्थम् । अवावाविति किम् ? रैयति ।

[ वान्तो यि प्रत्यये । पा० ६।१।७९, यि प्रत्ययेऽवावौ । स० ६।१।८६ । [1]परे = प्रत्यये. How cumbrous ! ]

**धातोस्तत्रैव** ॥७७॥

धातोर्य एच् तत्रैव यकारादौ विहितस्तस्यैचो यथास्वमवावौ भवतः ।

लव्यम्, अवश्यलाव्यम्। धातोरिति किम्? अधातोर्नियमो मा भूत्। तन्नियमे हि गव्य नाव्यमिति न स्यात्। तत्रेति किम्? तत्राविहितस्य मा भूत्। उपोयते लौयमानि। एवकार इष्टतोऽवधारणार्थ। विपरीतावधारणे हि बाभ्रव्यो माण्डव्य इति न स्यात्। अवात्रावित्येव। चेयम् जेयम्।

[ धातोस्तन्निमित्तस्यैव। पा० ६।१।८०, स० ६।१।८७ ]

**गव्यूतिरध्वमाने** ॥७८॥

गव्यूतिरध्वपरिमाणे निपात्यते। गोयूतिरन्यत्। कथ शरव्यम्? शरो शरार्थाद् यत्। शरान् व्ययतीति वा क.।

[ (गोयूतौ छन्दसि।) अध्वपरिमाणे च। पा० ६।१।७९।३। गव्यूतिरित्यध्वमाने। स० ६।१।८८ ]

**शक्ये क्षिज्योरय्** ॥७९॥ [स० ६।१।८९]

शक्येऽर्थे क्षिज्योरेचो यकारादावयादेशो भवति। शक्य. क्षेतुं क्षय्यः। शक्यो जेतु जय्य। शक्य इति किम्? क्षेयं पापम्, जेयो वृषलः। क्षिज्योरिति किम्? शक्यश्चेतुम् चेय।

[ क्षय्यजय्यौ शक्यार्थे। पा० ६।१।८१ ]

**क्रियः क्रयार्थे** ॥८०॥ [स० ६।१।९०]

क्रीणातेर्यकारादौ परत एचोऽयादेशो भवति, क्रयार्थेऽभिधेये। क्रय्य· पट, क्रयार्थं य प्रसारित। क्रयार्थ इति किम्? क्रेय नो धान्य न चास्ति क्रय्यम् [महाभाष्यम्]।

[ क्रय्यस्तदर्थे। पा० ६।१।८२ ]

**द्वयोरेकः** ॥८१॥

द्वयोर्निमितनिमित्तिनो पूर्वपरयोरेको भवतीत्येनदधिकृत वेदितव्यम्। अन्तादिवद्भावो न वाच्य। द्वादशान्यिक इति बह्वच्पूर्वपदाट् ठच् [३।४।६५] भविष्यति, समासे पूर्वोत्तरपदव्यपदेशस्य वाक्यापेक्षत्वात्। एतेन क्षीरपेणेति णत्वमेकाचो व्याख्यातम्। पिबन्तीति शिदाश्रय पिबादेशो नाशिदाश्रयः

प्रतिषेध । अमी अमू इत्यदस ईत्वोत्वे कृतैकादेशस्यापि तद्व्यपदेशात् । कार्येति स्वरितत्वमेकादेशाद्विप्रतिषेधेन । एवमुदके मिश्र[1] इति गुडोदके पूर्वपदान्तोदात्तत्वम् । प्राठितेति प्रादिकारकोपपदादुत्तरपदप्रकृतिस्वरत्वम् । उत्तरपदादैच्च पूर्वैपुकामशमीति, नेन्द्रस्य परस्य [ ६।१।३२ ] इति च ज्ञापकात् । अग्नी इति वायू इति द्विवचनान्तम् ईदूदन्तमचि न सन्धीयत एव, अत एवादिवद्भावानर्थक्यम् । वृक्षे पचे खट्वेति सुप्तिङाबन्ता एव । अद्याहृत इति सस्कृतयो पदयोरुत्तरकाल पदसन्धि । एवमद्यैहिष्टेति । धारय इत्यर्थवत्त्वादेव सुबुत्पत्ति । अन्तादिवद्भावे वा उपेयाजेति द्विरुक्तौ पूर्वस्य ह्रस्वत्व स्यात् । उपोह्यत इत्यूहे, अम्बात्र कुमारीदमिति सम्बुद्धौ, आराशस्त्रीदमिति नपुसके, निष्कौशाम्बीदमित्युपसर्जनस्य ह्रस्वत्व स्यात्, खट्वाभिरित्यतो भिस ऐस् [ २।१।२ ] स्यात् । जुहावेति णल औत्वम् [ १।४।१४ ] । अस्यै अश्वमित्येङ पदान्तात् [ पा० ६।१।१०९[2] ] इति परपूर्व स्यात् । षत्वतुकोरसिद्ध [ पा० ६।१।८६ ] इत्यपि न वाच्यम् । कोऽसिचदिति बहिरङ्गत्वादसिद्धत्वम्, अधीत्येति द्विपदाश्रयत्वात् । तद्वचने वा शक्हूषु परिवीष्विति षत्व न स्यात्, वृक्षे छत्रम् अपचे छत्रमिति तुग्विकल्पो न स्यात् ।

[ एक पूर्वपरयो. । अन्तादिवच्च । पा० ६।१।८४-८५, स० ६।१।९१-९२ । षत्वतुकोरसिद्ध । पा० ६।१।८६, स० ६।१।९४ । नाभ्यासोपसर्जनसम्बुद्धिनपुंसकह्रस्वत्वोभयाश्रयवर्णविधिषु । न सम्प्रसारणङीट्सु । स० ६।१।९३-९५ । [1]उदके मिश्रे is a rule from Chapter viii of Candra's Vyākarana corresponding to Pānini's उदकेऽकेवले vi 2 96 [2]Candra's rule is एङोऽति पदादौ v 1 115 Goyīcandra also sometimes quotes Panini's rules ]

**आददेङ्** ॥८२॥

अवर्णात्परो योऽच्, अचि च पूर्वं यदवर्णम्, तयोर्द्वयोरेकोऽदङ् भवति, एङ् च । तत्र प्रत्यासत्तेरवर्णेवर्णयोरेकार । तवेदम् खट्वेयम् ।

तवेहते खट्वेहते । अवर्णोवर्णयोरोकार । तवोदकम खट्वोदकम् । तवोहते खट्वोहते'। शेषाणामकार । तवर्षि खट्वर्षि तवल्कार खट्वल्कार । अवर्णे दीर्घं वक्ष्यति [ १०६ ], एच्यादैचम् [ ८४ ] । अचीत्यनुवृत्तेर्न व्यञ्जनस्य । आदिति किम् ? दधीदम् । तपर किम् ? द्विमात्रबहुमात्राणा स्थानिना स्थाने द्विमात्रबहुमात्रा आदेशा मा भूवन्निति ।

[ आद् गुण । पा० ६।१।८७, स० ६।१।९६ । 'तवोहते खट्वोहते are not found in Mss , but have been supplied by Liebich form the *Kāśikā* ]

**आदैजेवाद्यट: ॥८३॥**

पदादेरट परो योऽच्, तस्माच्च पूर्वो योऽट्, तयोर्द्वयोरेक आद् भवति, ऐच्च । आर्ध्नोत् ऐक्षत औम्भीत । एवकारादादैजेव भवति, ओमाङो , उस्यनादौ, अतोऽदेङि [ ५।१।९९-१०१ ] इति पररूप न भवति । ओङ्कारमैच्छत् औङ्कारीयत् । आ ऊढा ओढा, तामैच्छत् औढीयत् । आ उस्रा ओस्रा, ओस्रामैच्छत औस्रीयत । आटीत् आसीत । आदिग्रहणं किम् ? अस्वपोऽत्र । आयन् आसन् इत्यन्तरङ्गत्वादेकादेश ।

[ ( वृद्धिरेचि । ) आटश्च । पा० ६।१।९० । वृद्धिरेवाद्यट । स० ६।१।९७ ]

**एचि ॥८४॥** [स० ६।१।९८]

एचि पूर्व यदवर्ण तस्माच्च परो य एच् तयोर्द्वयोरेक ऐज् भवति । ब्रह्मैडका खट्वैडका, ब्रह्मौदन खट्वौदन , ब्रह्मैतिकायत खट्वैतिकायन , ब्रह्मौपगव खट्वौपगव । वृक्षै भवत्यै खट्वायै सरय्यै । आदित्येव । दध्येतत् ।

[ वृद्धिरेचि । पा० ६।१।८८ ]

**इणेधो: ॥८५॥** [स० ६।१।९९]

एत्येधत्योर्य एच् तत्र पूर्वं यदवर्ण तस्माच्च परो य एच् तयोरेक ऐज् भवति । उपैति उपैषि उपैमि उपैधते । एचीत्येव । उप इतः उपेत ।

एङि पररूप-[ ९५ ]-बाधनार्थ आरम्भ । पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते न परान् इत्योमाङो-[ ९९ ]-रिति पररूप न बाधते। उप आ इत उपेत ।

[ ८५-८६ । एत्येधत्यूठ्सु । पा० ६।१।८९ ]

**ऊठि** ॥८६॥ [स० ६।१।१००]

ऊठि पूर्वं यदवर्णं तस्माच्च परो य ऊठ् तयोर्द्वयोरेक ऐच् प्रत्यासन्नो भवति। धौत धौतवात् ।

**अक्षादूहिन्याम्** ॥८७॥ [पा० ६।१।८९।३, स० ६।१।१०१]

अक्षशब्दादूहिन्या परतो द्वयोरेक ऐज् भवति। अक्षौहिणी ।

[ It is curious that both the editions of Bhoja read **अक्षादूहिन्या** where the visarga would appear to have been imported from the next rule **स्वादीरेरिणो** . The com distinctly says **ऊहिन्या परत** ]

**स्वादीरेरिणोः** ॥८८॥ [पा० ६।१।८९।५, स० ६।१।१०२]

स्वशब्दादीरेरिणो परतो द्वयोरेक ऐज् भवति। स्वैर स्वैरी। इनिना सिद्धे पृथग्वचनमेङ्निवृत्त्यर्थम् ।

**प्रादूढोढ्येषैष्येषु** ॥८९॥ [स० ६।१।१०३]

प्रशब्दादूढादिषु परतो द्वयोरेक ऐज् भवति। प्रौढ· प्रौढि, प्रैष प्रैष्य । प्रादिति किम्? उपोढ । एङि पररूपे [९५] [1]प्राप्ते वचनम् ।

[ प्रादूहोढोढ्येषैष्येषु। पा० ६।१।८९।४, जै० ४।३।८१ (ष्ये for ष्येषु). Candra does not mention **ऊह**, nor does the *Kāśikā* J, Śak and Hc all mention it [1]Mss have **पररूपे च प्राप्ते**, but **च** would be misleading ]

**ऋते तृतीयासमासे** ॥९०॥ [स० ६।१।१०४]

ऋते परतोऽवर्णात् तृतीयासमासे द्वयोरेक आदैज् भवति। सुखार्तः

दु.खार्त.। ऋत इति किम्? सुखेन। तृतीयाग्रहणं किम्? परमर्त। समास इति किम्? सुखेनर्त।

[ऋते च तृतीयासमासे। पा० ६।१।८९।६]

**प्रदशर्णवसनकम्बलवत्सराद्णे** ॥९१॥ [०वत्सतराद्णे। स० ६।१।१०५]

प्रादिभ्य ऋणे परतो द्वयोरेक आदैज् भवति। प्रार्णम् दशार्णम् ऋणार्णम् वसनार्णम् कम्बलार्णम् वत्सरार्णम्।

[प्रवत्सतरकम्बलवसनाना चर्णे। ऋणदशाभ्या च। पा० ६।१।८९।७-८, वत्सतरमनादृत्य वत्सरश्चान्द्रकाशिकादौ पठ्यते, तदिहासम्मतम्, पतञ्जलिशाकटायनादीनां वत्सतरस्यैवेष्टत्वात। कातन्त्रपरिशिष्टम् १।८ Printed *Kāśikā* has वत्सतर.]

**ओतोऽम्शसोरात्** ॥९२॥ [स० ६।१।१२०]

ओतोऽम्शसो परतो द्वयोरेक आद् भवति। गा पश्य, गा पश्य। द्या पश्य, द्या पश्य। अमिति द्वितीयैकवचन गृह्यते शस्साहचर्यात्। इह न भवति—अचिनवम् असुनवम्।

[औतोऽम्शसो। पा० ६।१।९३]

**प्रादीनामृति धातौ** ॥९३॥

प्रादीनामवर्णान्तानामृकारादौ धातौ परतो द्वयोरेक आद् भवति। प्रार्छति उपार्छति। प्रार्ध्नोति उपार्ध्नोति। प्रादीनामिति किम्? खट्वर्छति। ऋतीति किम्? उपेत। तपर इति किम्? ऋकारात् क्यचि, उपकारीयतीति परेण विकल्पो मा भूत्। प्रादीना क्रियायोगित्वाद् यत्क्रियायुक्तास्तत्र विधि.। इह न भवति। प्रगता ऋच्छका अस्माद्देशात् प्रर्च्छको देश.। उत्तरत्र सुब्ग्रहणादिह धातौ सिद्धे धातुग्रहणं पक्षे ह्रस्वनिवृत्त्यर्थम्।

[उपसर्गादृति धातौ। पा० ६।१।९१, स० ६।१।१०६]

**वासुप्यृलति च** ॥९४॥ [स० ६।१।१०७]

सुब्धातावृकारादाव्लृकारादौ च परत प्रादीनामवर्णान्ताना द्वयोरेक आद् वा भवति। उपाल्कारीयति उपल्कारीयति। उपार्षभीयति उपर्षभीयति।

[ वा सुप्यापिशले । पा० ६।१।९२ । ऋकारलृकारयो सावर्ण्यविधिरिति ऋतीति लृकारोऽपि गृह्यते। काशिका। ]

**एङि पररूपम्** ॥९५॥ [पा० ६।१।९४, स० ६।१।१०८]

एङादौ धातौ परत प्रादीनामवर्णान्ताना द्वयोरेक पररूप भवति। उपेल्यति प्रेल्यति। उपोखति प्रोखति। वा सुपीत्येव। उपेकीयति उपैकीयति। उपोदनीयति उपौदनीयति।

**अनियोग एवे** ॥९६॥ [स० ६।१।१०९]

एवे परतोऽकारस्य नियोगादन्यत्र पररूप भवति। अद्येव इहेव। अनियोग इति किम्? इहैव तिष्ठ, मा गा।

[ एवे चानियोगे। पा० ६।१।९४।३ ]

**ओष्ठोत्वोः समासे वा** ॥९७॥ [स० ६।१।११०]

ओष्ठ ओतौ च परतोऽवर्णस्य समासे पररूप वा भवति। स्थूलोष्ठः स्थूलौष्ठ। स्थूलोतु स्थूलौतु। समास इति किम्? हे देवदत्तौष्ठं पश्य।

[ ओत्वोष्ठयो समासे वा। पा० ६।१।९४।५. Candra saves a syllable by reversing the order of the two words ]

**शकन्ध्वादयः** ॥९८॥

शकन्ध्वादय कृतपररूपा साधवो भवन्ति। शक अन्धु शकन्धु। कुल अटा कुलटा। सीमन्त. केशेषु। केशेष्विति किम्? ग्रामसीमान्त। तुन्वोर्वकारादावसख्ये पररूपं न वक्तव्यम्, तु वै त्वै नु वै न्वै इति, असख्यान्तरत्वात्। आकृतिगणत्वात् पिनद्धादय·।

[ शकन्ध्वादिषु च। पा० ६।१।९४।४, पररूपप्रकरणे तुन्वोर्वि निपात उपसंख्यानम्। न वा निपातैकत्वात्। ६।१।९४।१-२। शककुलपतादिभ्योऽन्ध्वटाअल्यादिषु। सीमन्त केशेषु। स० ६।१।१११-११२ ]

**ओमाङोः** ॥९९॥ [स० ६।१।११३, ०ङोश्च। पा० ६।१।९५]

ओमाङो: परतोऽवर्णस्य पररूप भवति। का ओमित्यवोचत् कोमित्यवोचत्। आ ऊढा ओढा, अद्य ओढा अद्योढा। आ ऋश्यात् अर्श्यात्, अद्य अर्श्यात् अद्यर्श्यात्। दीर्घस्यापवाद। आङि पररूपवचन ज्ञापकमन्तरङ्गबलीयस्त्वस्य।

**उस्यनादौ** ॥१००॥

उस्यपदादौ परतोऽवर्णस्य पररूप भवति। भिन्द्यु छिन्द्यु.। अनादाविति किम्? का उस्रा कोस्रा। का उषिता कोषिता। आदित्येव। चक्रु:।

[उस्यपदान्तात्। पा० ६।१।९६, उस्यपदादौ। स० ६।१।११४]

**अतोऽदेङि** ॥१०१॥

अकारस्यात्येङि चापदादौ परत. पररूप भवति। पचन्ति पचे। अत इति किम्? यान्ति। अदेङीति किम्? वृक्षे। अनादावित्येव। दण्डाग्रम्।

[अतो गुणे। पा० ६।१।९७, स० ६।१।११५]

**अव्यक्तानुकरणस्यानेकाचोऽत इतौ** ॥१०२॥ [स०६।१।११६]

अव्यक्तस्य यदनुकरणमनेकाच् तदीयस्याच्छब्दस्येतौ परत: पररूपं भवति। पटत् इति पटिति। घटत् इति घटिति। अव्यक्तानुकरणस्येति किम्? जगदिति। अनेकाच इति किम्? श्रद् इति। अत इति किम्? मरडिति[1]। तकार किम्? ऋणदिति दकारान्तस्य मा भूत्। इताविति किम्? पटदत्र।

[अव्यक्तानुकरणस्यात इतौ। पा० ६।१।९८। [1]मरुदिति Mss.]

**न द्वित्वे** ॥१०३॥ [स० ६।१।११७]

द्विर्वचने सत्यव्यक्तानुकरणस्य योऽच्छब्दस्तस्येतौ पररूप न भवति।

पटत्पटदिति करोति। आभीक्ष्ण्ये द्विर्वचनम्। समुदायानुकरणस्य तु न प्रतिषेधः। पटत्पटिति करोति।

[ १०३-१०४। नाम्रेडितस्यान्त्यस्य तु वा। पा० ६।१।९९ ]

**तो वा** ॥१०४॥ [स० ६।१।११८]

द्वित्वे सति तकारस्येतौ परत परररूप वा भवति। पटत्पटदिति पटत्पटेति।

**डाचि पूर्वस्य** ॥१०५॥

डाचि परतोऽव्यक्तानुकरणस्य द्वित्वे सति पूर्वस्य तकारस्य पररूप भवति। पटत्पटाकरोति दमदमाकरोति।

[ नित्यमाम्रेडिते डाचि। पा० ६।१।९९।१, काशिका ६।१।१००। नित्यं डाचि पूर्वस्य। स० ६।१।११९ ]

**अकोऽकि दीर्घः** ॥१०६॥

अकोऽकि परतो द्वयोरेको दीर्घो भवति। दण्डाग्रम्, दधीन्द्रः मधूष्ट्र। अक इति किम्? गायति। अकीति किम्? दध्येतत्।

[ अक सवर्णे दीर्घ। पा० ६।१।१०१, स० ६।१।१२१ ]

**ऋत्यृत ऋर्वा** ॥१०७॥ [स० ६।१।१२२]

ऋति परत ऋतो द्वयोरेक ऋ भवति, दीर्घो वा। होतृ ऋकारः होतृकार· होतॄकार।

[ सवर्णदीर्घत्वे ऋति ऋवावचनम्। पा० ६।१।१०१।१ ]

**ऌति ऌः** ॥१०८॥ [स० ६।१।१२३]

ऌति परत ऋकारस्य द्वयोरेक ऌ भवति, दीर्घो वा। होतॢकारः होतॢकार होतॄकार। ऌवर्णस्य दीर्घाभावादृतश्च दीर्घासम्भवादॄकार·।

[ ऌति ऌवावचनम्। पा० ६।१।१०१।२ ]

**प्रथमयोरचि** ॥१०९॥

प्रथमयोर्विभक्त्योरजाद्योः परतोऽको यो दीर्घ स द्वयोरेको भवति।

अग्नी वायू वृक्षाः। प्रत्यासत्तेर्न व्यतिकरः। प्रथमयोरिति किम्? अग्न्योः वाय्वो'। अचीति किम्? वृक्ष' अग्नि। अक इत्येव। नावौ नाव।

**[प्रथमयो पूर्वसवर्ण। पा० ६।१।१०२, शसि पूर्वसवर्ण। आज्जसि। इदुद्भ्यामौति। स० ६।१।१२४,१२६-१२७]**

**ततः शसो नः पुंसि** ॥११०॥ [स०६।१।१२५, तस्माच्छसो०। पा० ६।१।१०३]

तस्माद्दीर्घीभूतात्परस्य शसोऽवयवस्य पुंसि नकारो भवति। वृक्षान् अग्नीन् वायून् कर्तॄन्। पण्डकान् पण्डकान्। तत इति किम्? एतान् गा पश्य। शस इति किम्? वृक्षा। पुसीति किम्? कुमारी' वधू।

**नादिचि** ॥१११॥ [पा० ६।१।१०४]

अवर्णादिचि परत प्रथमयोर्द्वयोरेको दीर्घो न भवति। वृक्षौ खट्वे कुण्डे सर्वे। आदिति किम्? अग्नी। इचीति किम्? वृक्षा।

**दीर्घाज्जसि च** ॥११२॥ [पा० ६।१।१०५]

दीर्घाज्जसीचि च परत प्रथमयोर्द्वयोरेको दीर्घो न भवति। कुमार्यौ कुमार्य, वध्वौ वध्व।

**[आज्जसि। स० ६।१।१२६]**

**अमि पूर्वः** ॥११३॥ [पा० ६।१।१०७]

अमि परतोऽको द्वयोरेक पूर्वो भवति। वृक्षम् अग्निम् वायुम् खट्वाम् कुमारीम् वधूम्। अक इत्येव। नावम्।

**[अणोऽमि पूर्वं। स० ६।१।१२८]**

**यणिकः** ॥११४॥

यण स्थाने य इक् तस्मात्पर पूर्वो भवति। इष्टम् उप्तम् गृहीतम्। यण इति किम्? शकह्वर्य परिव्यर्थ। इकः स्थाने हि दीर्घत्वम्।

**[सम्प्रसारणाच्च। पा० ६।१।१०८, सम्प्रसारणात्। स० ६।१।१२९]**

**एङोऽति पदादौ** ॥११५॥ [स० ६।१।१३०]

एङ· पदादावति परतो द्वयोरेक पूर्वो भवति। अग्नेऽत्र वायोऽत्र। एङ इति किम्? दध्यत्र। अतीति किम्? वायविति। तपर किम्? वायवायाहि। पदादाविति किम्? चयनम् लवनम्।

[एङ· पदान्तादति। पा० ६।१।१०९]

**ङसिङसोः** ॥११६॥ [स० ६।१।१३१, ०सोश्च। पा० ६।१।११०]

ङसिङसोरति परत एङो द्वयोरेक पूर्वो भवति। अग्नेरागच्छति, अग्ने स्वम्। वायोरागच्छति, वायो स्वम्।

**ऋत उत्** ॥११७॥ [पा० ६।१।१११, स० ६।१।१३२]

ऋतो ङसिङसो परतो द्वयोरेक उद्भवति। कर्तुरागच्छति, कर्तुः स्वम्। उभयो स्थाने यो भवति लभतेऽसावन्यतरव्यपदेशमिति रपरत्वम्।

[इह यो द्वयो. षष्ठीनिर्दिष्टयो प्रसङ्गे भवति लभतेऽसावन्यतरतो व्यपदेशम्। भाष्यम् १।१।५१]

**सख्युः पत्युः** ॥११८॥

सखिपतिभ्या ङसिङसोरिद रूप निपात्यते। सख्युरागच्छति, सख्युः स्वम्। पत्युरागच्छति, पत्यु स्वम्। अथवा सखीयते क्विबन्तस्य सख्युरिति निपात्यते, पतीयते· पत्युरिति। केवलस्य निपातनात्तदन्तस्य न भवति। अतिसखे· अतिपते.। येषा ख्यत्यात् परस्य [पा०६।१।११२,स०६।१।१३३] इति सूत्रं तेषामिहैव स्यात् सख्यात् 'गार्हपत्यादिति साचूकस्य श्रवणात्। अनचूकव्याख्यानेऽपि लूनीयते· क्विपि लून्युरिति न भवितव्यमेव, त्यशब्दस्याश्रवणात्। असिद्धत्वात् सिद्धमिति चेत्, न, बहिरङ्गत्वादीत्वयणादेशयोरप्यसिद्धे।

[आगन्तुनाकारेण कृतयणादेशयोरिदं ग्रहणं ख्यत्यादिति। हृदयहारिणी। किमिद ख्यत्यादिति? सखिपत्योर्विकृतग्रहणम्। कि पुन कारण सखिपत्योर्विकृत-

ग्रहणं क्रियते, न सखिपतिभ्यामित्येवोच्येत ? नैवं शक्यम्। गरीयांश्चैव हि निर्देशः स्यात्। इह च प्रसज्येत। अतिसखेरागच्छामि। अतिसखे स्वम्। इह च न स्यात्। सखीयतेरप्रत्यय । सख्यु पत्यु । लूनीयतेरप्रत्यय. । लून्यु पून्युः। भाष्यम् ६।१।११२। यस्तु खत्यादिति सूत्रं कृतवांस्तन्मते सख्युर्य [५।१।१२६] इति ज्ञापकादकार उच्चारणार्थं इति सख्याद् गार्हपत्यादित्यत्र न भवति। सखीयति सुसखीयति क्विप्, तन्मते सख्यु सुसख्युरिति भवितव्यम्, तथा लूनीयति पूनीयति इति क्विप्, नकारस्यासिद्धत्वात् लून्यु पून्युरिति। तदिहाप्रमाणम्। चूर्णिकारोऽप्याह—नस्यासिद्धत्वेऽन्तरङ्गे कर्तव्ये बहिरङ्गमीत्व यत्वमप्यसिद्धमिति। कातन्त्रटीका, च ६२। [1]पत्यादिति L ]

**हशि चातो रोः** ॥११९॥ [स० ६।१।१३४]

हश्यति च परतोऽत परस्य रोरुकारो भवति। देवो हसति, देवो याति। देवोऽत्र। हशि चेति किम् ? देव इह। अतीति तपरत्वादिह न भवति। देव आश्रय । पय आ३ ग्निदत्त। अत इति किम् ? अग्निर्याति वायुरत्र। तपर· किम् ? मेघा यान्ति। वृक्षा अत्र। सुस्रोता३ अत्र न्वसि। स्वरसन्धिप्रतिषेधात् प्लुतस्य सिद्धत्वम्।

[ अतो रोरप्लुतादप्लुते। हशि च। पा० ६।१।११३-११४ ]

**गोरो वा** ॥१२०॥ [स० ६।१।१३५]

गोशब्दस्याति परत ओकारो वा भवति। गोऽग्रम् गोअग्रम्।

[ सर्वत्र विभाषा गोः। पा० ६।१।१२२ ]

**अच्यवङ्** ॥१२१॥ [स० ६।१।१३६]

अचि परतो गोरवङादेशो वा भवति। गवाग्रम् गोऽग्रम् गोअग्रम्। गवाजिनम् गोऽजिनम् गोअजिनम्। गवोष्ट्रौ गवुष्ट्रौ[1]। गवौदनम् गवोदनम्।

[ अवङ् स्फोटायनस्य। पा० ६।१।१२३ [1]Liebich following Mss. has *gavostrī gavustrī* ]

**अक्षेन्द्रे** ॥१२२॥

अक्षे इन्द्रे च परतो गोरवङ् भवति नित्यं पुनर्विधानात्। गवाक्ष· गवेन्द्र· ।

[इन्द्रे च नित्यम्। पा० ६।१।१२४।
देवत्रातो गलो ग्राह इतियोगे च सद्विधि·।
मिथस्ते न विभाष्यन्ते गवाक्ष संशितव्रत ॥
भाष्यम् ३।३।१५६, ७।४।४१। नित्यमिन्द्रे। अक्षे संज्ञायाम्। स० ६।१।१३७-१३८]

**न प्लुतोऽनितौ** ॥१२३॥

प्लुतोऽनितावचि न सन्धीयते। देवदत्ता३ अत्र। यज्ञदत्ता३ इदम्। अनिताविति किम्? सुश्लोका३ इति सुश्लोकेति।

[प्लुतप्रगृह्या अचि। अप्लुतवदुपस्थिते। पा० ६।१।१२५,१२९। किमिदमुपस्थितं नाम? अनार्षं इतिकरण। भाष्यम्। (प्रगृह्य· प्रकृत्या।) प्लुतोऽनितौ। स० ६।१।१४०]

**क्वचिद्वा** ॥१२४॥

प्लुत क्वचिद्वा न सन्धीयते। अस्तु ही३ इत्यब्रवीत्। अस्तु हीत्यब्रवीत्। चिनु ही३ इदम्, चिनु हीदम्। वशा३ इयम् वशेयम्।

[ई३ चाक्रवर्मणस्य। पा० ६।१।१३०। ई३ वा। आ३ च क्वचित्। स० ६।१।१४१-२। ईकारग्रहणेन नार्थ·। अविशेषेण चाक्रवर्मणस्याचार्यस्याप्लुतवद्भवतीत्येव। इदमपि सिद्धं भवति। वशा३ इयम् वशेयम्। भाष्यम्।]

**ईदूदेद्द्विवचनम्** ॥१२५॥

ईदन्तमूदन्तमेदन्त च द्विवचनान्तमचि परतो न सन्धीयते। अग्नी इति। वायू इति। कुण्डे इति। खट्वे इति। पचेते इति। पचेथे इति। ईदूदेदिति किम्? वृक्षावत्र। द्विवचनमिति किम्? कुमार्यत्र।

[ईदूदेद्द्विवचन प्रगृह्यम्। पा० १।१।११, स० १।१।१०५। प्लुतप्रगृह्या अचि नित्यम्। पा० ६।१।१२५। प्रगृह्य प्रकृत्या। स० ६।१।१३९]

**अमू अमी** ॥१२६॥ [स० १।१।१०६]

एतौ शब्दावचि न सन्धीयेते। अमू अत्र। अमी अत्र।

[अदसो मात्। पा० १।१।१२]

**अजनाङ्** ॥१२७॥

आङोऽन्यो योऽच् तदचि न सन्धीयते। अ अपेहि। इ इन्द्रम्। उ अपकस। आ एवं नु मन्यसे। आ एव किल तत्। अनाङिति किम्? आ उदकान्तात् ओदकान्तात्। आङ्सदृशस्यासंख्यस्य ग्रहणादिह न भवति। चकारात्र। जानु उ अस्य रुजति, जान्वस्य रुजतीति कृतैकादेशस्य शब्दान्तरत्वाद् यणादेश।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च य।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्॥ [भाष्यम् १।१।११]

**[निपात एकाजनाङ्। पा०१।१।१४, निपात. केवलाजनाङ्। स० १।१।१०७]**

**ओत्** ॥१२८॥ [पा० १।१।१५, स० १।१।१०८]

ओदन्तमचि न सन्धीयते। अहो इति, उताहो इति। आङ्सदृशस्य ग्रस्तात्रादिह न भवति। गो अजिनम् गोऽजिनम्, गो इति गविति।

**सौ वेतौ** ॥१२९॥

सावोकार इतौ परतो वा न सन्धीयते। भानो इति भानविति। पटो इति पटविति। साविति किम्? गवित्ययमाह। इताविति किम्? भानोऽत्र।

**[सम्बुद्धौ शाकल्यस्येतावनापे। पा० १।१।१६, सम्बुद्धावितौ वा। स० १।१।१०९]**

**उञ्** ॥१३०॥ [स० १।१।११०]

उञ् इतौ परतो वा न सन्धीयते। उ इति विति।

**[उञ। पा० १।१।१७]**

ऊँ ॥१३१॥ [पा० १।१।१८]

ऊँ इत्ययमादेश उञो वा भवति, न च सन्धीयते। ऊँ इति, उ इति, विति।

**[ऊँ वास्य। स० १।१।१११]**

**इकोऽसस्थाने ह्रस्वश्चासमासे ॥१३२॥**

इकोऽसमानस्थाने वर्णे परतोऽसमासे ह्रस्वो वा भवति न च सन्धीयते। कुमारि अत्र कुमार्यत्र। दधि अत्र दध्यत्र। मधु अत्र मध्वत्र। इक इति किम्? खट्वेन्द्र। असस्थान इति किम्? कुमारीन्द्र। असमास इति किम्? वाप्यश्व। ह्रस्ववचनात् सिद्धे स्वरसन्धिप्रतिषेधस्यापूर्वस्य विधानात्प्लुतादिषु न ह्रस्वत्वम्। हे कुमारी३ अत्र। अग्नी अत्र।

[ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च। पा० ६।१।१२७। सिन्नित्यसमासयोः शाकलप्रतिषेध। वा० १। नित्यग्रहणेन नार्थं। भाष्यम्। प्रकृतिह्रस्वयोर्नित्यसमासे निषेध इति वार्त्तिकम्, भाष्ये तु समासमात्रे निषेध, चन्द्रस्यापि मतमेतत्। कातन्त्रपरिशिष्टम्। १।२८। अप्लुतादीनामिकोऽसवर्णे ह्रस्वाश्चासमासे। स० ६।१।१४३। The *Kāśikā* follows Kātyāyana and is followed by Sam ]

**ऋद्लृत्यकः ॥१३३॥** [स० ६।१।१४४]

ऋति लृति च परतोऽको ह्रस्वो वा भवति, न च सन्धीयते। खट्वऋश्यम् खट्वर्श्यम्। खट्वलृकार खट्वल्कार। ऋद्लृतीति किम्? खट्वौदन। अक इति किम्। वटो ऋक्ष वटवृक्ष।

[ ऋत्यक। पा० ६।१।१२८ ]

**एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ॥१३४॥** [पा० ६।१।१३२]

एतत्तदौ यावककारकौ तयोर्हलि परत सुलोपो भवति, नञ्समासे चेन्न वर्तेते। एष ददाति, एष भुङ्क्ते। स ददाति, स भुङ्क्ते। एतत्तदोरिति किम्? यो ददाति, यो भुङ्क्ते। सुग्रहण किम्? एतौ गच्छत, तौ गच्छत। अकोरिति किम्? एषको ददाति, सको ददाति। अनञ्समास इति किम्? अनेषो ददाति, असो ददाति। हलीति किम्? एषोऽत्र, सोऽत्र।

[ तद. सोर्लोपोऽचि पादपूरणं चेत्। एतदश्चानकचोऽनञ्समासे हलि। स० ६।१।१४५-१४६ ]

**दिवोऽन्ते चोत् ॥१३५॥**

दिव· पदान्ते वर्तमानस्य हलि च परत उत्त्वं भवति। द्युकामः द्युमान् द्युभ्याम् द्युभि. विमलद्यु अह । अन्ते चेति किम्? दिवौ दिव.। निरनुबन्धकग्रहणादिह न भवति। अक्षद्यूभ्याम् अक्षद्यूभि । तपरत्वमूड-भावार्थम्[1] ।

[ दिव उत्। पा० ६।१।१३१। एङ पदान्तादतीत्यत पदग्रहणमनुवर्तते। काशिका। पदान्ते दिव उत्। स० ६।१।१४७। [1]ऊतभावार्थम् Ms ऊठ-भावार्थम् L ]

**सम्परेः कृञः सुट् ॥१३६॥**

सपरिभ्या परस्य करोते सुडागमो भवति। सस्करोति सस्कृतम् संस्कार । परिष्करोति परिष्कृतम् परिष्कार । सञ्चस्करतु सञ्चस्करुरिति द्विर्वचनात् सुट्परत्वात् । समस्करोत् समस्कार्षीदित्यत सुडन्तरङ्गत्वात । पूर्वं हि धातु प्रादिभिर्युज्यते पश्चात् साधनेन। सकृतिरिति गर्गादिपाठात् [२।४।२४] सिद्धम्। सङ्कार सङ्कर इति किरतेर्घञपौ बहुलाधिकारात् [१।१।१०३]।

[ सुट् कात्पूर्व । अडभ्यासव्यवायेऽपि। सपर्युपेभ्य करोतौ भूषणे। पा० ६।१।१३५-१३७। सम्परिभ्या कृञ सुट्। स० ६।१।१४८ ]

**उपाद् भूषणसमवाययत्न[1]वैकृताध्याहारेषु ॥१३७॥**

उपात्परस्य करोतेर्भूषणादिष्वर्थेषु सुड् भवति। उपस्करोति कन्याम्। तत्र न उपस्कृतम्। काण्ड[2] गुणस्योपस्कुरुते। उपस्कृतं भुङ्क्ते। सोपस्कारं सूत्रम्। एतेष्विति किम्? उपकरोति।

[ संपर्युपेभ्य करोतौ भूषणे। समवाये च। उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च। पा० ६।१।१३७-१३९। उपाद् भूषणसमवायप्रतियत्नविकृतवाक्याध्याहारेषु। स० ६।१।१४९। [1]०वैकृत्या० Mss. [2]काण्डगुणस्य—Mss, L ]

**किरो लवने ॥१३८॥**

उपात्परस्य किरतेर्लवनविषये सुड् भवति। उपस्कार मद्रका लुनन्ति।

विक्षिप्य लुनन्तीत्यर्थ । णमुल् बहुलाधिकारात् [१।१।१०३]। लवन इति किम्? उपकिरति।

[किरतौ लवने। पा० ६।१।१४०, स० ६।१।१५०]

**हिंसायां प्रतेश्च** ॥१३९॥ [पा० ६।१।१४१, स० ६।१।१५१]

प्रतेरुपाच्च परस्य किरतेर्हिंसाया गम्यमानाया सुड् भवति। प्रतिस्कीर्णं ह ते वृषल भूयात्। उपस्कीर्ण ह ते वृषल भूयात्। हिंसायामिति किम्? प्रतिकीर्णम् उपकीर्णम्।

**अपाच्चतुष्पाच्छकुनिषु हृष्टान्नकुलायार्थिषु** ॥१४०॥ [स० ६।१।१५२]

अपात्परस्य किरतेश्चतुष्पाच्छकुनिषु हृष्टेष्वन्नार्थिषु कुलायार्थिषु च वर्तमानस्य सुड् भवति। अपस्किरते वृषभो हृष्ट। अपस्किरते कुक्कुटो भक्षार्थी। अपस्किरते श्वा निवासार्थी। चतुष्पाच्छकुनिष्विति किम्? अपकिरति मल्लो हृष्ट। हृष्टादिष्विति किम्? अपकिरति श्वौदनपिण्डमाशित।

[अपाच्चतुष्पाच्छकुनिष्वालेखने। पा० ६।१।१४२ किरतेर्हर्षजीविकाकुलायकरणेषु। वा० १]

**अपरस्पराः सातत्ये** ॥१४१॥

अपरस्परा इति सातत्ये गम्यमाने निपात्यते। अपरस्परा सार्था गच्छन्ति। सार्थाना गतिविशिष्टानामत्र सातत्यम्। क्रियाविशेषणे तु अपरस्पर गच्छन्ति। सातत्य इति किम्? अपरपरा ब्राह्मणा भोज्यन्ताम्। अपरे च परे च। कथ परस्परमिति? व्यतिहारे सर्वादीना सुर्बहुलम् [६।३।९] इति द्वित्वम्। पूर्वस्य कस्कादित्वात् [६।४।४५] सत्वम्।

[अपरस्परा क्रियासातत्ये। पा० ६।१।१४४, स० ६।१।१५३]

**पारस्करादीनि नाम्नि** ॥१४२॥

पारस्करादीनि शब्दरूपाणि सज्ञाया निपात्यन्ते। पारस्करो देश। कारस्करो वृक्ष। अवस्करो वर्चस्कम्। अपस्करो रथाङ्गम्। रथस्पा नदी।

आस्पद प्रतिष्ठा। गोष्पदम् अल्पम्। योऽपि गोभि सेवितो गोष्पदो देश-स्तत्रापि ग्रामसामीप्यादध्वनोऽल्पत्व गम्यते। यत्पुनर्गोभिरसेवितमगोष्पदम-रण्यम् तत्रापि दूरत्वादध्वनोऽल्पत्व [1]न गम्यते। गोष्पदमात्र क्षेत्रम्, गोष्पदपूर वृष्टो देव इत्यल्पत्वमेव गम्यते। अल्पमिति किम्? गोपदम्। किष्कु प्रमाणम्। किष्किन्धा गुहा। तस्करश्चौर। बृहस्पतिर्देवता। वनस्पतिर-पुष्पतरु। [2]प्रस्तुम्पति गौ, प्रतुम्पत्यन्य। कुस्तुम्बुरु धान्यकम्। धान्यक-मिति किम्? कुत्सितानि तुम्बुरूणि कुतुम्बुरूणि धान्यकसदृशानि। आश्चर्य-मद्भुतम्। विष्किर शकुनिर्विकिरो वा। प्रतिष्कश. सहायो वार्तिकोऽग्र-गामी वा। प्रस्कण्वहरिश्चन्द्रावृषी। ऋषी इति किम्? प्रकण्वो देश। हरिचन्द्रो माणवक। मस्करमस्करिणौ वेणुपरिव्राजकौ। मकरो मकरी चान्य। कास्तीराजस्तुन्दे नगरे। कातीरमजतुन्द चान्यत्। प्रायश्चित्त-प्रायश्चित्ती। आकृतिगणोऽयम्।

[पारस्करप्रभृतीनि च सञ्ज्ञायाम्। पा० ६।१।१५७। कुस्तुम्बुरूणि जाति। गोष्पद सेवितासेवितप्रमाणेषु। आस्पद प्रतिष्ठायाम्। आश्चर्यमनित्ये। वर्चस्केऽवस्कर। अपस्करो रथाङ्गम्। विष्किर शकुनिर्विकिरो वा। ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे। प्रतिष्कशश्च कशे। प्रस्कण्वहरिश्चन्द्रावृषी। मस्करमस्करिणौ वेणुपरिव्राजकयो। कास्तीराजस्तुन्दे नगरे। कारस्करो वृक्ष। पा० ६।१।१४३-१५६। पारस्करो देशे। कारस्करो वृक्षे। वनस्पतिश्च। रथस्या नद्याम्। किष्कु प्रमाणे। किष्किन्ध्या गुहायाम्। गोष्पद सेवितासेवितप्रमाणेषु। आस्पद प्रतिष्ठायाम। आश्चर्यमद्भुते। अवस्करो वर्चस्के। अपस्करो रथाङ्गे। मस्करमस्करिणौ वेणुपरिव्राजकयो। प्रस्कण्व-हरिश्चन्द्रावृषी। कास्तीराजस्तुन्दे नगरे। कुस्तुम्बुरुरोषधौ। शष्कुली कृतान्नम्। वौ विष्किरो वा। प्रतिष्कश प्रष्ठसहायदूतेषु। तस्करबृहस्पती चोरदेवतयो.। प्रात्तुम्पते-र्गवि। प्रायश्चित्तिचित्तयो। पर शतपर सहस्रादयश्च। स० ६।१।१५४-१७५। सुषामादिगणे पाठान्मूर्धन्यो गोष्पदे भवेत्। प्रतिष्कशे रथष्पायामपि चान्द्रैरयम्मत॥ कातन्त्रपरिशिष्टम् १।१२२। [1]न गम्यते appears to have been used in the sense of पर्युदस्यते. [2]प्रस्तुम्पतिर्गौ प्रतुम्पतिरन्य Mss but this is the later idea]

इति चान्द्रे व्याकरणे पञ्चमाध्यायस्य प्रथम पाद समाप्त॰।

**अलुगुत्तरपदे** ॥ १ ॥ [पा० ६।३।१, स० ६।२।१]

अलुग् इत्युत्तरपद इति चैतदधिकृत वेदितव्यम् ।

**पञ्चम्याः स्तोकादिभ्यः** ॥ २ ॥ [पा० ६।३।२]

स्तोकादिभ्य परस्या पञ्चम्या उत्तरपदेऽलुग् भवति । स्तोकान्मुक्तः । अल्पान्मुक्त । कृच्छ्रान्मुक्त । कतिपयान्मुक्त. । असत्त्ववचनत्वादेकवचनमेव । उत्तरपद इत्येव । निष्क्रान्त स्तोकात् निःस्तोक ।

[ पञ्चम्याः स्तोकान्तिकदूरार्थकृच्छ्रेभ्य । स० ६।२।२ ]

**ब्राह्मणाच्छंसी** ॥ ३ ॥ [स०६।२।३]

ब्राह्मणात् परस्या पञ्चम्या शसिन्युत्तरपदेऽलुग् निपात्यते ।

[ पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानम् । पा० ६।३।२।१ ]

**खितीच एकाचोऽमः** ॥ ४ ॥ [स० ६।२।४]

खिदन्त उत्तरपद इजन्तादेकाच परस्यामोऽलुग् भवति । गामन्यः स्त्रीमन्य स्त्रियमन्य नावमन्य श्रियमन्य भुवंमन्य. । श्रियमिवात्मान मन्यते ब्राह्मणकुलम् इति श्रियम्मन्यम्[1] । आत्मसमानाधिकरणस्य नपुंसके वृत्त्यभावादाविष्टलिङ्गत्वाच्च । [2]श्रियमन्यमित्यन्ये पठन्ति । यथा किल प्रष्ठादय शब्दा स्त्रिया वर्तन्ते, तथायमपि नपुसके वर्तत इति । न चाय स्वमोर्लुकोऽपवाद , उत्तरपदे विधानात् । खितीति किम् ? स्त्रीमानी । इच इति किम् ? वाङ्मन्य । एकाच इति किम् ? हरिणिंमन्य ।

[ इच एकाचोऽम्प्रत्ययवच्च । पा० ६।३।६८ । [1]श्रियंमन्य L. [2]श्रियंमन्यमित्यन्ये L ]

**ओजःसहोऽम्भस्तपोऽञ्जसस्तृतीयायाः** ॥ ५ ॥

ओज प्रभृतिभ्य परस्यास्तृतीयाया उत्तरपदेऽलुग् भवति । ओजसाकृतम् सहसाकृतम् अम्भसाकृतम् तपसाकृतम् अञ्जसाकृतम् ।

[ ओज सहोऽम्भस्तमसस्तृतीयाया । पा० ६।३।३, अञ्जस उपसंख्यानम् । वा० १ । ओज सहोऽम्भस्तमोऽञ्जसेभ्यस्तृतीयाया । स० ६।२।५ । तम स्थाने तपः

पठन्ति शाक्याः। व्योषकाव्येप्यलुकि तदेव प्रयुक्तम्। कातन्त्रपरिशिष्टम् ७।४। तपस इति चान्द्रा । संक्षिप्तसारवृत्ति ७।५३८। तपस इति चान्द्रा इति। ते हि तमस स्थाने तपस इति पठन्ति। [1]षड्भि. प्रकारै सत्तायामनुपलब्धिर्भवति—अतिसन्निकर्षात् अतिविप्रकर्षात् इन्द्रियदौर्बल्यात् तमसावृतत्वात् मूर्त्यन्तर्धानात् सदृशत्वाच्चेति भाष्ये [ ४।१।३ ] अतिसन्निकर्षादित्याद्येकपदोपात्तहेतुप्रकरणे तमसावृतत्वादित्यस्य दर्शनात्, *तप कृशामभ्युपपत्तुम् ऐच्छत् [ कुमारसम्भव· ५।६१ ? ] †तप कृशतरैरङ्गै [ किरातार्जुनीयम् ११।५ ? ] इत्यादिमहाकविश्लोकाच्च चान्द्राणां मतमसङ्गतमेव प्रतिभाति। गोयीचन्द्र । [1]षड्भि· प्रकारै सतां भावानामनुपलब्धिर्भवति—अतिसन्निकर्षादतिविप्रकर्षान्मूर्त्यन्तरव्यवधानात्तमसावृतत्वादिन्द्रियदौर्बल्यादतिप्रमादादिति। *Mahābhāsya* ed Kielhorn vol 11 p 197. ]

**मनसो नाम्नि ॥ ६ ॥**

मनस परस्यास्तृतीयाया. संज्ञायामलुग् भवति। मनसादेवी। नाम्नीति किम्। मनोदत्ता।

[ मनस संज्ञायाम्। पा० ६।३।४, स० ६।२।६ ]

**आज्ञायिनि ॥ ७ ॥** [स० ६।२।७, ०च। पा० ६।३।५]

मनस. परस्यास्तृतीयाया आज्ञायिन्युत्तरपदेऽलुग् भवति। मनसाज्ञायी।

**पुंजनुर्भ्यामनुजान्धयोः ॥ ८ ॥** [स० ६।२।८]

पुसो जनुषश्च परस्यास्तृतीयाया अनुजान्धयोरुत्तरपदयोरलुग् भवति। पुंसानुजा कन्या। जनुषान्ध ।

[ पुसानुजो जनुषान्धो विकृताक्ष इति च। पा० ६।३।३।२ ]

**आत्मनः पूरणे ॥ ९ ॥** [स०६।२।९, ०नश्च०। पा०६।३।५।१]

आत्मन परस्यास्तृतीयाया· पूरण उत्तरपदेऽलुग् भवति। आत्मनापञ्चम आत्मनाषष्ठ·। पञ्चमीभवने करणत्वादात्मन समास.। कथ जनार्दनस्त्वात्मचतुर्थ एवेति [भाष्यम्] ? अन्यपदार्थे।

**नाम्नि पराच्च चतुर्थ्याः ॥१०॥**

---

*तप कृशामभ्युपपत्स्यते सखीम्। कु० स०। †अङ्गैस्तप.कृशैरपि ? कि०

परादात्मनश्च परस्याश्चतुर्थ्या संज्ञायामलुग् भवति। परस्मैपदम्। परस्मैभाषा। आत्मनेपदम्। आत्मनेभाषा।

[ वैयाकरणाख्यायां चतुर्थ्याः। परस्य च। पा० ६।३।७-८। आत्मनेभाष-परस्मैभाषयोरुपसंख्यानम्। वा० १। पराच्च वैयाकरणाख्याया चतुर्थ्याः। स० ६।२।१० ]

सप्तम्या बहुलम् ॥११॥

सप्तम्या उत्तरपदे बहुलमलुग् भवति। स्तम्बेरम कर्णेजप। अप्सुयोनि अप्सुमति। अप्सुचर गोषुचर। वर्षासुज अप्सुज। हृदिस्पृक् दिविस्पृक्। प्रावृषिज शरदिज कालेज दिविज। क्वचिद्विकल्प। वर्षज वर्षेज, क्षरज क्षरेज, शरज शरेज, वरज वरेज। पूर्वाह्णतरे पूर्वाह्णेतरे, पूर्वाह्णतमे पूर्वाह्णेतमे, पूर्वाह्णकाले पूर्वाह्णेकाले, पूर्वाह्णतने पूर्वाह्णेतने, खशयः खेशय, ग्रामवास ग्रामेवास, ग्रामवासी ग्रामेवासी, मध्यगुरु मध्येगुरु, अन्तगुरु अन्तेगुरु, हस्तबन्ध हस्तेबन्ध, चक्रबन्ध चक्रेबन्ध। क्वचिन्न भवति। अक्षशौण्ड कुरुचर स्थण्डिलशायी स्थण्डिलवर्ती साङ्काश्यसिद्ध काम्पिल्यसिद्ध। अजन्ते। चक्रबन्ध चारकबन्ध समस्थ विषमस्थ कूटस्थ पर्वतस्थ। क्वचिदनुत्तरपदेऽपि भवति। अप्सु भव अप्सव्य। क्वचित् संज्ञायाम्। गविष्ठिर युधिष्ठिर त्वचिसार। अरण्येतिलका अरण्येमाषका। सूपेशाण मुकुटेकार्षापण दृषदिमाषक हलेद्विपदिका। क्वचिन्न भवति। अभ्यर्हितपशु यूथपशु अविकटोरण नदीकुक्कुटिका भूमिपाशक। क्वचिदन्यपदार्थे। कण्ठेकाल बहेगडु उरसिलोमा उदरेमणि। क्वचिन्न भवति। मूर्धशिख मस्तकशिख मुखकाम. अङ्गुलित्राणः जङ्घावलि.।

[ हलदन्तात्सप्तम्या संज्ञायाम्। पा० ६।३।९। हृद्द्युभ्यां ङेरुपसंख्यानम्। वा १। कारनाम्नि च प्राचां हलादौ। मध्याद् गुरौ। पा० ६।३।१०-११। गुरावन्ताच्च। वा १। अमूर्धमस्तकात् स्वाङ्गादकामे। बन्धे च विभाषा। तत्पुरुषे कृति बहुलम्। प्रावृट्शरत्कालदिवां जे। विभाषा वर्षक्षरशरवरात्। घकालतनेषु कालनाम्न.। शयवासवासिष्वकालात्। पा० ६।३।१२-१८। अपो योनियन्मतिषु च। पा० ६।३।१।७। नेन्सिद्धबध्नातिषु च। स्थे च भाषायाम्। पा० ६।३।१९-२०।

सप्तम्यास्तत्पुरुषे कृति बहुलम्। हलदन्तात् सञ्ज्ञायाम्। प्राचा कारे हलादौ। मध्यान्ताभ्या गुरौ। अमूर्धमस्तकात्स्वाङ्गादकामे। अपो यद्योनिमतिषु। द्युप्रावृड्-वर्षाशरत्कालेभ्यो जे। वर्ष-क्षर-शर-वरापूसर-प्रभृतिभ्यो वा। बन्धे घञि। चतनकालेषु कालनाम्न। शयवासवासिष्वकालात्। नेन्बन्धिसिद्धशस्थेषु। स० ६।२।११-२२ ]

**षष्ठ्या आक्रोशे** ॥१२॥ [पा० ६।३।२१, स० ६।२।२३]

आक्रोशे गम्यमाने षष्ठ्या उत्तरपदेऽलुग् भवति। चौरस्य कुलम्, दासस्य कुलम्। आक्रोश इति किम्? ब्राह्मणकुलम्।

**पुत्रे वा** ॥१३॥ [स० ६।२।२४]

पुत्र उत्तरपद आक्रोशे गम्यमाने षष्ठ्या अलुग् वा भवति। दास्याः पुत्र· दासीपुत्र। वृषल्या पुत्र वृषलीपुत्र। आक्रोश इत्येव। ब्राह्मणपुत्रः।

[ पुत्रेऽन्यतरस्याम्। पा० ६।३।२२ ]

**वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु** ॥१४॥ [स० ६।२।२५]

वागादिभ्य· परस्या षष्ठ्या युक्त्यादिषूत्तरपदेष्वलुग् भवति। वाचो-युक्ति. दिशोदण्ड पश्यतोहर।

[ षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषूपसंख्यानम्। पा० ६।३।२१।१ ]

**अदसः फग्वुञोः** ॥१५॥ [स० ६।२।२६]

अदस परस्या षष्ठ्या फकि वुञि चालुग् भवति। आमुष्यायण.। नडादित्वात् [२।४।३५] फक्। आमुष्यकुलिका आमुष्यपुत्रिका। मनोज्ञादित्वात् [४।१।१४९] वुञ्। पाठसामर्थ्यादेव वुञा व्यवधानमाश्रीयते। कथं देवानाप्रिय· ? °देवानाप्रियैस्तेऽन्याभ्यश्च [४।३।१२] इति निपातनात्।

[ आमुष्यायणामुष्यपुत्रिकेत्युपसंख्यानम्। पा० ६।३।२१।२। आमुष्यकुलिकेति च वक्तव्यम्। भाष्यम्। देवानाप्रिय इति च। वा० २। देवानाप्रिय। स० ६।२।२७ ]

शुनः शेफपुच्छलाङ्गूलेषु नाम्नि ॥१६॥

शुन परस्या षष्ठ्या शेफादिषूत्तरपदेषु सञ्ज्ञायामलुग् भवति। शुनः-शेफः शुन पुच्छ शुनोलाङ्गूल । नाम्नीति किम्? श्वपुच्छ ।

[शेफपुच्छलाङ्गूलेषु शुन संज्ञायाम्। पा० ६।३।२१।४, शुन शेपपुच्छ-लाङ्गूलेषु संज्ञायाम्। स० ६।२।२८। शीङो नीदापादित्वात्पप्रत्यये सति शेप इति प्रथमोपधं शब्दान्तरमित्येकं मतम्। निर्देशबलान्निपातितसलोपस्य प्रथमवत शेपसो ग्रहणमित्यपरम्। तत्रार्वाचीनाना तृतीयवत इति। कातन्त्रपरिशिष्टम् ७।२१। सकारान्तश्चायं शेफ शब्दश्चान्द्रोणादौ कालापकोणादौ। तन्त्रप्रदीप । ६।३।२१]

दिवो दासे ॥१७॥

दिव परस्या षष्ठ्या दास उत्तरपदे सञ्ज्ञायामलुग् भवति। दिवोदास ।

[दिवश्च दासे। पा० ६।३।२१।५, दिवोदास-दिवस्पति-वाचस्पति-वास्तो-ष्पतय । स० ६।२।२९]

ऋतो विद्यायोनिसम्बन्धात्तत्र ॥१८॥

ऋदन्ताद्विद्यासम्बन्धिनो योनिसम्बन्धिनश्च परस्या षष्ठ्यास्तस्मिन्नेव विद्यायोनिसम्बन्धिन्युत्तरपदेऽलुग् भवति। होतु·पुत्र होतुरन्तेवासी, पितु·-पुत्र. पितुरन्तेवासी। ऋत इति किम्? आचार्यपुत्र । मातुलपुत्र.। विद्यायोनिसम्बन्धादिति किम्? दातृपुत्र.। तत्रेति किम्? होतृधनम् पितृगृहम्।

[ऋतो विद्यायोनिसम्बन्धेभ्य। पा० ६।३।२३। विद्यायोनिसम्बन्धेभ्यस्त-त्पूर्वपदोत्तरपदग्रहणम्। वा० १। ऋतो विद्यायोनिसम्बन्धिनस्तस्मिन्। स० ६।२।३०]

स्वसृपत्योर्वा ॥१९॥ [स० ६।२।३१]

स्वसृ पति इत्येतयोरुत्तरपदयोर्ऋतो विद्यायोनिसम्बन्धात् परस्याः षष्ठ्या अलुग् वा भवति। मातु ष्वसा मातृष्वसा। पितु·ष्वसा पितृष्वसा। दुहितु·पति दुहितृपति ।

[विभाषा स्वसृपत्यो । पा० ६।३।२४]

**मातरपितरौ चार्थे** ॥२०॥

मानरपितरावििति चार्थसमासविषये वा निपात्यते। मातरपितरौ माता-पितरौ। चार्थ इति किम्? मातु पितरौ।

[ मातरपितरावुदीचाम्। पा० ६।३।३२। मातु पितर्यरङ् च। स० ६।२।३४। It is evident that Candra like the Bhāsyakāra does not admit the a-stem मातरपितर which would appear to have been first explicitly mentioned by Śākatāyana in his rule मातरपितर द्वन्द्वे वा ii 2 30 This is referred to as the view of Ksapanaka by Kramadīśvara in his rule पितुश्च पितर इति क्षपणक (Sam vii 407) and by Maitreya Raksita in his *Tantrapradīpa* As usual Hemacandra follows Śākatāyana and frames the rule मातरपितर वा iii 2 47 remarking in his Brhadvrtti· उत्तरपदस्यार नेच्छन्त्यन्ये ]

**ऋतस्तत्रानङ्** ॥२१॥

ऋदन्तस्य विद्यायोनिसम्बन्धस्य नस्मिन्नेव ऋदन्ते विद्यायोनि-सम्बन्धिन्युत्तरपदे चार्थसमासविनय आनडादेशो भवति। होतापोतारौ माता-पितरौ। नकारो रपरत्वनिवृत्त्यर्थ। ऋत इति किम्? पतिभ्रातरौ। तत्रेति किम्? पितृपितामहौ। चार्थ इत्येव। मातृष्वसा। विद्यायोनिसम्बन्धादित्येव। दातृभ्रातरौ। तत्रेत्येव। पितृभोक्तारौ।

[ आनङृतो द्वन्द्वे। पा० ६।३।२५, स० ६।२।३२ ]

**पुत्रे** ॥२२॥ [स० ६।२।३३]

ऋदन्तस्य विद्यायोनिसम्बन्धस्य पुत्र उत्तरपदे चार्थसमासविषय आनडादेशो भवनि। पितापुत्रौ मातापुत्रौ।

[ ऋकारान्तानां द्वन्द्वे पुत्र उपसंख्यानम्। पा० ६।३।२५।१ ]

**देवतानामवायूनां वेदे सहश्रुतानाम्** ॥२३॥ [स० ६।२।३५]

देवताशब्दाना वायुवर्जिताना वेदे सहश्रुताना चार्थविषय उत्तरपदे

आनङ् भवति। सूर्याचन्द्रमसौ मित्रावरुणौ। देवतानामिति किम्? यूप-चषाले। अवायूनामिति किम्? अग्निवायू वाय्वग्नी। वेद इति किम्? शिववैश्रवणौ स्कन्दविशाखौ। सहेति किम्? विष्णुशक्रौ। श्वनानामिति किम्? चन्द्रसूर्यौ दिवाकरनिशाकरौ।

[ देवताद्वन्द्वे च। पा० ६।३।२६। देवताद्वन्द्व उभयत्र वायो प्रतिषेध॰। वा० १। द्वन्द्व इति वर्तमाने पुनर्द्वन्द्वग्रहणस्यैतत्प्रयोजन लोकवेदयोर्यो द्वन्द्वस्तत्र यथा स्यात्। कश्च लोकवेदयोर्द्वन्द्व? वेदे ये सहनिर्वापनिर्दिष्टा। भाष्यम्। Quoted by Goyīcandra under VII 101 ]

**नादैच्यग्नेरविष्णौ** ॥२४॥

अग्नेरादैजादावविष्णावुत्तरपदे विषय आनङ् न भवति। आग्नि-मारुत क्रियते। आदैचीति किम्? अग्नामरुतौ। अविष्णाविति किम्? आग्नावैष्णव चरुं निर्वपेत्।

[ इद् वृद्धौ। पा० ६।३।२८। इद्वृद्धौ विष्णो प्रतिषेध। वा० १। इद्वृद्धि-मत्यविष्णौ। स० ६।२।३७ ]

**सोमवरुणयोरीत्** ॥२५॥

सोमवरुणयोरुत्तरपदयोरग्नेरीद् भवति। अग्नीषोमौ अग्नीवरुणौ। नादैचीत्येव। आग्निवारुणीमनड्वाहीमालभेत।

[ ईदग्ने सोमवरुणयो। पा० ६।३।२७, अग्ने सोमवरुणयोरीत्। स० ६।२।३६ ]

**दिवो द्यावा** ॥२६॥ [पा० ६।३।२९, स० ६।२।३८]

दिवो देवताना चार्थे द्यावादेशो भवति। द्यावाभूमी।

**दिवस्पृथिव्यां वा** ॥२७॥ [स० ६।२।३९]

पृथिव्यामुत्तरपदे दिवो दिवसादेशो वा भवति। दिवस्पृथिव्यौ द्यावा-पृथिव्यौ। सकारनिर्देशो रुत्वाभावार्थ।

[ दिवसश्च पृथिव्याम्। पा० ६।३।३०। अकारोच्चारण सकारस्य विकारा-भावप्रतिपत्त्यर्थम्। तेन रुत्वादीनि न भवन्ति। काशिका। ]

**उषासोषसः** ॥२८॥ [पा० ६।३।३१, स० ६।२।४०]

उषसो देवताना चार्थे उत्तरपदे उषासादेशो भवति। उषासानक्तम्।

[ Ms has उषासानक्तम् which is found also in the Bhāsāvrttı, Brhadvrttı (Hc), Cıntāmanılaghuvrttı, Hrdayahārını, Rasavatī, etc The prınted Kāśıkā gıves the correct form उषासानक्ता, but the Nyāsa reads °नक्तम्. The Padamañjarī is ıllumınatıng उषासानक्तेति। छान्दसोऽयं प्रयोग । उषाश्च नक्तश्चेति द्वन्द्व । प्रथमाद्विवचनस्य डादेश । अत्र पदकाले पदकारा उषसानक्तमिति ह्रस्वमधीयते।]

**स्त्रियां पुंवदुक्तपुंस्कमनूङेकार्थे स्त्रियामप्रधानपूरणीप्रियादौ** ॥२८॥

स्त्रिया वर्तमान भाषितपुंस्कमनूङन्त समानाधिकरणे स्त्रीलिङ्ग उत्तरपदे प्रधानपूरणीप्रियादिवर्जिते पुवद्भवति। कुमारभार्य [1]पटुभार्य एतभार्यः दीर्घजङ्घ युवजानि । स्त्रियामिति किम्? ग्रामणि कुल दृष्टिरस्य ग्रामणिदृष्टि·। उक्तपुस्कमिति किम्? खट्वाभार्य । अनूङ् इति किम्? ब्रह्मबन्धूभार्य·। एकार्थ इति किम्? कल्याण्या माता कल्याणीमाता। स्त्रियामिति किम्? कल्याणी प्रधानमेषा कल्याणीप्रधाना इमे। अप्रधानपूरणीप्रियादाविति किम्? कल्याणी पञ्चमी यासा रात्रीणा ता कल्याणीपञ्चमा रात्रय । कल्याणीप्रिय कल्याणीमनोज्ञ । प्रधानग्रहण किम्? कल्याणपञ्चमीक पक्ष ॥ प्रिया। मनोज्ञा। कल्याणी। सुभगा। दुहिता। वामना।

[ स्त्रिया पुवद्भाषितपुस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु। पा० ६।३।३४। पूरण्या प्रधानपूरणीग्रहणम्। वा० ८। गुण स्त्र्यनूङ् पुवत् स्त्रियामेकाधिकरणे। न प्रधानपूरण्याम्। भक्तौ च कर्मसाधनायाम्। प्रिया-मनोज्ञा-कल्याणी-सुभगा-दुर्भगा-स्वा-क्षान्ता-कान्ता-वामा-वामना-समा-सचिवा-चपला-बाला-तनया-दुहितृषु। स० ६।२।४१,४५-४७। [1]पुटभार्य L ]

**प्रसूताप्रजातागर्भिण्यः** ॥३०॥

प्रसूतादय समानाधिकरणे स्त्रीलिङ्ग उत्तरपदे पुवद् भवन्ति। प्रसूतभार्य. प्रजातभार्य गर्भिभार्य । पूर्वेण सिद्धे प्रसूतादिग्रहणं नियमार्थम्।

असमानायामाकृतौ भाषितपुंस्का प्रभृतादय एव पुवद्भवन्ति, नान्ये। द्रोणी-भार्य कुटीभार्य ।

[ भाषितपुंस्कादिति कथमिद विज्ञायते—समानायामाकृतौ यद्भाषितपुस्कम् आहोस्वित् क्वचिद्भाषितपुस्कमिति ? कि चात ? यदि विज्ञायते समानायामाकृतौ यद्भाषितपुस्कमिति गर्भिभार्यं प्रजातभार्यं प्रसूतभार्यं इत्यत्र न प्राप्नोति। अथ विज्ञायते क्वचिद् भाषितपुंस्कमिति द्रोणीभार्यं कुटीभार्य पात्रीभार्यं अत्रापि प्राप्नोति ॥ अस्तु समानायामाकृतौ यद्भाषितपुंस्कमिति ॥ कथ गर्भिभार्यं प्रजातभार्यः प्रसूतभार्यं इति ? कर्तव्योऽत्र यत्न । भाष्यम् ६।३।३४ ]

**त्रतस्तरतमचरट्कल्पब्देश्यरूपप्पाशप्शस्थ्यनक्यङ्मानिषु ॥३१॥**

एतेषु त्रादिषु परतो मानिनि चोत्तरपदे स्त्रिया वर्तमान पुवद्भवति। बहुत्र बहुत पटुतरा पटुतमा पटुचरी पटुकल्पा पटुदेश्या पटुरूपा पटुपाशा। बह्वीभ्यो देहि, बहुशो देहि। त्रादिसाहचर्यादविभक्ते शसो ग्रहणम्। अजथ्या। एनी एतायते, श्येनी श्येतायते। दर्शनीयमान्ययमस्या, दर्शनीय-मानिनीयमस्या । मानिन्ग्रहणमस्त्यर्थमसमानाधिकरणार्थं च।

[ तसिलादिष्वा कृत्वसुच । पा० ६।३।३५। तसिलादी त्रतसौ। तरसमपौ। चरड्जातीयरौ। कल्पब्देशीयरौ। रूपप्पाशपौ। थम्थालौ। दार्हिलौ। तिल्थ्यनौ। वा० १-८। शसि बह्वल्पार्थस्य। वा० ९। त्रल् तश्चरड्घकल्पब्देश्यरूपप्पाशप्-छस्थ्यन्सङ्मानिषु। स० ६।२।४२ ]

**यच्यणादौ ॥३२॥**

यकारादावजादौ चाणादौ परत स्त्रिया वर्तमान पुवद्भवति। श्येन्या भाव श्येत्यम्। इयमासामतिशयेन पट्वी पटिष्ठा। णाविष्ठवद्भावात् श्येतयति, पटयति। हस्तिनीना समूहो हास्तिकम्। अणादाविति किम् ? हस्तिनीयति, हस्तिन्य ।

[ भस्याढे तद्धिते। पा० ६।३।३५।११। यचि तद्धिते। स० ६।२।४३ ]

**ढऽग्नायी** ॥३३॥ [स० ६।२।४४]

ढविषयेऽग्नाय्येव पुंवद्भवति। अग्नायी देवतास्य आग्नेय । अन्यो न पुंवत्। श्यैनेय , रौहिणेय. ।

[**भस्याढे तद्धिते। पा० ६।३।३५।११। कथम् अग्नायी देवतास्य स्थालीपाकस्य आग्नेय स्थालीपाक ? अस्तु तर्ह्यनपत्य इत्येव। भाष्यम्।**]

**न त्यादिवुकोपान्तम्** ॥३४॥

त्यादीना वोश्च य ककारस्तदुपान्त पुवन्न भवति। मद्रिकाभार्य. वृजिकाभार्य , मद्रिकाकल्पा वृजिकाकल्पा, मद्रिकायते वृजिकायते। विलेपिकाया धर्म्यम् वैलेपिकम्। याचिकाभार्य याचिकाकल्पा, कारिकाभार्य. कारिकाकल्पा। कोपान्तमिति सिद्धे त्यादिवुग्रहणमन्यककारनिवृत्त्यर्थम्। पाकभार्य ।

[**न कोपधाया। पा० ६।३।३७। कोपधप्रतिषेधे तद्धितवुग्रहणम्। वा० १। वुतद्धितकोपधासञ्ज्ञापूरण्य । स० ६।२।४८**]

**संज्ञापूरण्योः** ॥३५॥ [०ण्योश्च। पा० ६।३।३८]

सञ्ज्ञाया पूरण्याश्च स्त्रिया वर्तमान पुंवन्न भवति। दत्ताभार्य· दत्ताकल्पा। पञ्चमीभार्य पञ्चमीकल्पा।

[**वुतद्धितकोपधासञ्ज्ञापूरण्य । स० ६।१।४८**]

**अच आदैज्झेतुररक्तविकारे** ॥३६॥

अच स्थाने य आदैचस्तेषा निमित्तं रक्तविकाराभ्यामन्यत्र यद्विहितं तदन्तमुत्तरपदे पुंवन्न भवति। सौतङ्गमीभार्य 'वैदिशीभार्य नादेयीभार्यः। सौतङ्गमीकल्पा 'वैदिशीकल्पा नादेयीकल्पा। अच इति किम् ? तावद्भार्यः वैयाकरणभार्य । आदैज्झेतुरिति किम् ? अर्धप्रस्थे भवा अर्धप्रस्थी सा भार्या यस्य अर्धप्रस्थभार्य । नात [६।१।३७] इत्यादैचामभाव·। अरक्तविकार इति किम् ? काषायी बृहतिकास्य काषायबृहतिक । लौहीभास्य

लौहेष । रक्तविकारप्रतिषेधादकिशोरधेनुन्यायेन सुपो विहिताना ग्रहणादिह न भवति । कुम्भकारभार्य ।

[ **वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे । पा० ६।३।३९ । तद्धितोऽज्वृद्धिहेतुररक्तविकारे । स० ६।२।४९ । किशोर** means a foal, when we say **अकिशोरधेनु** i e a cow without a foal we mean a mare without a foal So when we prohibit pumvadbhāva in the case of suffixes in the sense of *rakta* and *vikāra* we mean the prohibition applies in the case of those suffixes which are added to subanta words 'वैदर्भी is the usual word ]

**स्वाङ्गादीदमानिनि** ॥३७॥ [स० ६।२।५०]

स्वाङ्गात्परो य ईकारस्तदन्तोऽमानिन्युत्तरपदे पुवन्न भवति । दीर्घकेशीभार्य दीर्घकेशीपाशा । स्वाङ्गादिति किम् ? पटुभार्य । ईदिति किम् ? अकेशभार्य । अमानिनीति किम् ? दीर्घकेशमानिनी ।

[ **स्वाङ्गाच्चेत । पा० ६।३।४०, स्वाङ्गाच्चेतोऽमानिनि । वा० १** ]

**जातिरष्फादौ च** ॥३८॥

जातिवाचि स्त्रिया वर्तमानमष्फादावमानिनि च पुंवन्न भवति । कठीभार्य बह्वृचीभार्य । अष्फादाविति किम् ? हास्तिकम् । चकारः किम् ? कठमानिनी ।

[ **जातेश्च । पा० ६।३।४१ । जातिरयच्तद्धिते च । स० ६।२।५१** ]

**पुंवत्स्वपदार्थजातीयदेशीयेषु** ॥३९॥

उक्तपुस्कमनूङन्त स्त्रिया वर्तमान समानाधिकरणे स्त्रीलिङ्ग उत्तरपदे स्वपदार्थेऽभिधेये जातीयदेशीययोश्च परत पुवद्भवति । मद्रकवृन्दारिका पाचकवृन्दारिका । दत्तवृन्दारिका पञ्चमवृन्दारिका सौघ्नवृन्दारिका श्लक्ष्णमुखवृन्दारिका वातण्ड्यवृन्दारिका कठवृन्दारिका । इडविड्वृन्दारिका ऐडविडवृन्दारिका, दरद्वृन्दारिका दारदवृन्दारिका, पृथुवृन्दारिका पार्थववृन्दारिका, उशिग्वृन्दारिका औशिजवृन्दारिका । मद्रकजातीया मद्रकदेशीया, पाचक-

जातीया पाचकदेशीया, दत्तजातीया दत्तदेशीया, पञ्चमजातीया पञ्चमदेशीया, स्रौघ्नजातीया स्रौघ्नदेशीया, श्लक्ष्णमुखजातीया श्लक्ष्णमुखदेशीया, कठजातीया कठदेशीया। उक्तपुंस्कमित्येव। खट्वावृन्दारिका। अनूङित्येव। ब्रह्मबन्धूवृन्दारिका।

[ पुंवत्कर्मधारयजातीयदेशीयेषु। पा० ६।३।४२, स० ६।२।५२ ]

**त्वतलोर्गुणः** ॥४०॥ [स० ६।२।५३]

त्वतलो परतो गुण स्त्रिया वर्तमान पुवद्भवति। पट्व्या भावः पटुत्वम् पटुता। गुण इति किम्? कठीत्वम्।

[ त्वतलोर्गुणवचनस्य। पा० ६।३।३५।१० ]

**सर्वादयो वृत्तिमात्रे** ॥४१॥

सर्वादय स्त्रीवृत्तयो वृत्तिमात्रे पुवद्भवन्ति। तस्या सुखम् तत्सुखम्। यस्या. सुखम् यत्सुखम्। तस्या इदम् तदीयम्। यदीयम्। भवत्या इदम् भावत्कम् भवदीयम्। तस्याम् तत्र यत्र। तस्या तत यत कुत। कया वृत्त्या कथम्। तया वृत्त्या तथा। तस्या वेलायाम् तदा तर्हि। कथ कुक्कुट्या अण्डम् कुक्कुटाण्डम्, मृग्या क्षीर मृगक्षीरम्, मृग्या पदम् मृगपदम्, काक्या शाव काकशाव इति। जातेर्विवक्षितत्वात्पुलिङ्गेन समासो भविष्यति। स्त्रीविवक्षाया तु कुक्कुट्यण्डादिभिर्भवितव्यमेव, अवीक्षीरम् अजाक्षीरम् इति यथा।

[ सर्वनाम्नो वृत्तिमात्रे पुवद्भाव। पा० २।२।२८ भाष्यम्। कुक्कुट्यादीनामण्डादिषु पुंवद्वचनम्। न वास्त्रीपूर्वपदविवक्षितत्वात्। पा० ६।३।४२।२-३। सर्वनामानि वृत्तिमात्रे। कुक्कुट्यादयोऽण्डादिषु वा। स० ६।३।५४-५५ ]

**तरतमरूपकल्पचेलड्ब्रुवगोत्रमतहते ङ्यो ह्रस्वः** ॥४२॥

तरादिषु चेलडादिषु च परेषु ङयन्तस्य भाषितपुंस्कस्य ह्रस्वो भवति। ब्राह्मणितरा ब्राह्मणितमा ब्राह्मणिरूपा ब्राह्मणिकल्पा ब्राह्मणिचेली ब्राह्मणिब्रुवा। अस्मादेव वचनाद् ब्रुवोऽचि न वचादेश उवादेशश्च। ब्राह्मणि-

गोत्रा ब्राह्मणिमता ब्राह्मणिहता। ङ्य इति किम्? दत्तानरा। उक्तपुस्कमित्येव। आमलकीतरा।

[घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्व। पा० ६।३।४३। ०ङ्यो ह्रस्व। ६।२।५६]

**नैकाचः** ॥४३॥ [स० ६।२।५७]

एकाच परस्य ङ्यस्तरादिषु ह्रस्वो वा भवति। स्त्रितरा स्त्रीतरा। ङ्य इत्येव। श्रीतरा।

[नद्या शेषस्यान्यतरस्याम्। पा० ६।३।४४]

**उगितः** ॥४४॥

उगित परस्य ङ्यस्तरादिषु ह्रस्वो वा भवति। श्रेयसितरा श्रेयसीतरा। विदुषितरा विदुषीतरा। कथ श्रेयस्तरा विद्वत्तरेति? प्रकर्षयोगात् प्राक् स्त्रीत्वस्याविवक्षितत्वात् सिद्धम्।

[उगितश्च। पा० ६।३।४५, उगित पुवच्च। स० ६।२।५८। पुवद्भावोऽप्यत्र पक्षे वक्तव्य। प्रकर्षयोगात्प्राक् स्त्रीत्वस्याविवक्षितत्वाद्वा सिद्धम्। काशिका।]

**ऊङः** ॥४५॥ [स० ६।२।५९]

ऊङस्तरादिषु ह्रस्वो वा भवति। ब्रह्मबन्धुतरा ब्रह्मबन्धूतरा।

[नद्या शेषस्यान्यतरस्याम्। पा० ६।३।४४]

**आन्महतो जातीयैकार्थयोरच्व्यर्थे** ॥४६॥

महच्छब्दस्य जातीयरि समानाधिकरणे चोत्तरपदे आत्त्वं भवति न चेच्च्व्यर्थे वर्तते। महाजातीय महापुरुष महाबाहु। 'जातीयैकार्थ इति किम्? महत पुत्रो महत्पुत्र। अच्व्यर्थ इति किम्? अमहान् महान् सम्पन्नो महद्भूतश्चन्द्रमा। न चाय गौणस्तथाभावात्, मृत्पिण्डो घटीभूत इति यथा।

[आन्महत समानाधिकरणजातीययो। पा० ६।३।४६। अमहान् महान् सम्पन्नो महद्भूतश्चन्द्रमा इत्यत्र गौणत्वान्महदर्थस्य न भवत्यात्त्वम्। काशिका।

आन्महत समानाधिकरणजातीययोरच्व्यर्थे। स० ६।२।६०। 'The singular here shows that we should read जातीयैकार्थेऽच्व्यर्थे in the rule ]

**घासकरविशिष्टेषु पुंवच्च** ॥४७॥ [स० ६।२।६१]

घासादिषु व्यधिकरणेषु परतो महत आत्वं भवति, पुंवद्भावश्च। महत्या घास महाघास। महत्या कर महाकर। महत्या विशिष्ट. महाविशिष्ट।

[ महदात्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्वचन च नानाधिकरणार्थम्। पा० ६।३।४६।१ ]

**इचि** ॥४८॥

इजन्ते [४।४।११६] परत आत्वं भवति। केशाकेशि मुष्टामुष्टि।

[ इच्यनचि दीर्घश्च। स० ६।२।६३ Pānini does not sanction मुष्टामुष्टि Acc to the school of Pānini the form is मुष्टीमुष्टि with lengthening acc to अन्येषामपि दृश्यते. सर्ववर्मचान्द्रमत आदत्र विधीयते, तन्मते मुष्टामुष्टीति। गोयीचन्द्र ]

**नाम्न्यष्टनः** ॥४९॥

अष्टन उत्तरपदे सञ्ज्ञाविषय आत्व भवति। अष्टावक्रो मुनि। नाम्नीति किम्? अष्टदंष्ट्र।

[ अष्टन सञ्ज्ञायाम्। पा० ६।३।१२५, स० ६।२।६५ ]

**कपाले हविषि** ॥५०॥ [स० ६।२।६६]

कपाल उत्तरपदे हविर्विषये अष्टन आत्व भवति। अष्टाकपाल हवि। हविषीति किम्? अष्टकपालमन्नम्।

[ अष्टन कपाले हविषि। पा० ६।३।४६।२। 'अष्टन कपाले हविष्युपसंख्यानम्' इत्यनर्थकम्, अष्टन सञ्ज्ञायाम् (पा० ६।३।१२५) इत्यनुवृत्तौ छन्दसि च (६।३।१२६) इत्यनेन दीर्घस्य सिद्धत्वात्। नानर्थकम्, भाषार्थत्वात्। तथाच चान्द्र सूत्रम्—कपाले हविषीति। तन्त्रप्रदीप। ६।३।४६ ]

**गवि युक्ते** ॥५१॥ [स० ६।२।६७]

गव्युत्तरपदे तद्युक्तेऽभिधेयेऽष्टन आत्त्व भवति। अष्टागवेन शकटेन। युक्त इति किम्? अष्टगवधन ब्राह्मणस्य।

[ गवि च युक्ते। पा० ६।३।४६।३ ]

**द्वेश्च संख्यायां प्राक् छतादनन्यार्थाशीत्योः** ॥५२॥

द्वेरष्टनश्च प्राक् छतात्सख्यायामुत्तरपदेऽशीतिवर्जित आत्त्व भवति, अन्यपदार्थश्चेन्नाभिधेय। द्वादश द्वाविशति द्वात्रिशत्। अष्टादश अष्टाविंशति अष्टात्रिशत्। द्वेश्चेति किम्? पञ्चदश। सख्यायामिति किम्? द्वैमातुर आष्टमातुर। प्राक् छतादिति किम्? द्विशतम् द्विसहस्रम्। अष्टशतम् अष्टसहस्रम्। अनन्यार्थाशीत्योरिति किम्? द्वित्रा द्व्यशीति।

[ द्व्यष्टन सख्यायामबहुव्रीह्यशीत्यो। पा० ६।३।४७, प्राक् छतादिति वक्तव्यम्। भाष्यम्। द्वेश्च सख्यायां प्राक् छतादबहुव्रीह्यशीत्यो। स० ६।२।६८ ]

**त्रेस्त्रयः** ॥५३॥ [पा० ६।३।४८]

त्रिशब्दस्य सख्याया त्रयसादेशो भवति। त्रयोदश त्रयोविशतिः त्रयस्त्रिंशत्। सख्यायामित्येव। त्रैमातुर। प्राक् छतादित्येव। त्रिशतम् त्रिसहस्रम्। अनन्यार्थाशीत्योरित्येव। त्रिदशा त्र्यशीतिः।

[ त्रेस्त्रयस्तद्वत्। स० ६।२।७० ]

**चत्वारिशदादौ वा** ॥५४॥

सख्याया यदुक्त तच्चत्वारिशदादौ वा भवति। द्वाचत्वारिंशत् द्विचत्वारिंशत्। अष्टाचत्वारिशत् अष्टचत्वारिशत्। त्रयश्चत्वारिंशत् त्रिचत्वारिंशत्। द्वापञ्चाशत् द्विपञ्चाशत्। अष्टापञ्चाशत् अष्टपञ्चाशत्। त्रय पञ्चाशत् त्रिपञ्चाशत्। कथम् एकादश? दशैकादशाकुसीदात्° [३।४।३८] इति निपातनादेकादशेति सिद्धम्।

[ विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्। पा० ६।३।४९। चत्वारिशदादौ वा। स० ६।२।६९ ]

**हृदयस्याणि हृत् ॥५५॥**

हृदयस्याणि परतो हृदादेशो भवति । हार्दम् ।

[ ५५-५७ । हृदयस्य हृल्लेखयदण्लासेषु । पा० ६।३।५०, हृदयस्य हृद् यदण्-लेखलासेषु । स० ६।२।७१ ]

**लेखे ॥५६॥**

लेखेऽणन्ते परतो हृदयस्य हृदादेशो भवति । हृदय लिखति हृल्लेख. । अणीत्येव । हृदयलेख । अणीत्येव सिद्धे लेखग्रहणं ज्ञापकमुत्तर-पदाधिकारे तदन्ताग्रहणस्येति ।

[ लेखग्रहणं ज्ञापकमुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्ताग्रहणस्य । काशिका । ]

**लासयतोः ॥५७॥**

लासे यति च परतो हृदयस्य हृदादेशो भवति । हृल्लास हृद्य. । हृच्छब्देन सिद्धे हृदयशब्दनिवृत्त्यर्थमादेशवचनम् । अन्यत्रोभयोरपि प्रयोग । हृच्छोकः हृदयशोक । सौहार्दम् सौहृदय्यम् । हृद्रोग हृदयरोग । हृच्छूल हृदयशूल । हृच्छल्य हृदयशल्य ।

[ वा शोकष्यञ्रोगेषु । पा० ६।३।५१ । हृदयशब्देन समानार्थो हृच्छब्दः प्रकृत्यन्तरमस्ति, तेनैव सिद्धे विकल्पविधान प्रपञ्चार्थम् । काशिका । ष्यञ्शोक-रोगशूलशल्यादिषु वा । स० ६।२।७२ ]

**पादस्याज्यातिगोपहते पदः ॥५८॥**

पादशब्दस्याजावातौ ग उपहते च परत पदभावो भवति । पादाभ्यामजतीति पदाजि । पदाति , पदगः, पदोपहत॰ ।

[पादस्य पदाज्यातिगोपहतेषु । पा० ६।३।५२. Lost in SK , probably the same as in Pāṇini ]

**हिमहतिकाषिष्ठन्यति पद् ॥५९॥**

हिमादिषु परत पादस्य पद्भावो भवति । पद्धिमम् पद्धति पत्काषी ।

पादाभ्या चरति पदिक । पर्पादित्वात् [३।४।८] ष्ठन्। पादौ विध्यन्ति पद्या शर्करा । प्राण्यङ्गप्रस्तावादिह न भवति। द्विपाद्यम् ।

[ पद्यतदर्थे। हिमकाषिहतिषु च। पा० ६।३।५३-५४, पद्भाव इके चरतावुपसंख्यानम्। ६।३।५३।१। हस्तिनोऽपत्याणि। पत्काषिहिमहतिष्ठन्सु। यत्यतदर्थार्हीये। सख्यादेवुंनि। स० ६।२।७३-७६ ]

**ऋचः शि ॥६०॥**

ऋक्सम्बन्धिन पादशब्दस्य शकारादौ परत पद्भावो भवति। पच्छो गायत्रीं शसति। ऋच इति किम्? पादश कार्षापणं ददाति। पच्छब्देन सिद्धे पादशब्दनिवृत्त्यर्थमादेशवचनम्। अन्यत्रोभयोरपि प्रयोग । पद्घोष पादघोष । पन्मिश्र पादमिश्र । पच्छब्द पादशब्दः। पन्निष्क पादनिष्क ।

[ ऋच. शे। पा० ६।३।५५, ऋच शसि। स० ६।२।७७ ]

**नस् नासिकायास्तःक्षुद्रे ॥६१॥**

नासिकायास्तसि क्षुद्रे च परतो नसादेशो भवति। नस्त न·क्षुद्रः।

[ नस् नासिकाया यत्तस्क्षुद्रेषु। पा० ६।१।६३।२। नस् नासिकायास्तस्क्षुद्रयो·। स० ६।२।७९ It is curious that in Mss *nahsksudrah* is given as an example The Hrdayahārinī has नस् क्षुद्र • It need hardly be said that both न स्क्षुद्र· and नस् क्षुद्र are incorrect ]

**यत्यवर्णे ॥६२॥** [स० ६।२।८०]

यति परतो वर्णादन्यत्र नासिकाया नसादेशो भवति। नस्य तैलम्। अवर्ण इति किम्? नासिक्यो वर्ण। कथ नासिक्यं नगरमिति? [३।१।६८] चातुरर्थिको ण्यो भवति।

[ नस् नासिकाया यत्तस्क्षुद्रेषु। पा० ६।१।६३।२। अवर्णनगरयोरिति वक्तव्यम्। इह मा भूत्। नासिक्यो वर्ण । नासिक्यं नगरम्। तत्तर्हि वक्तव्यम्।

न वक्तव्यम्। इह तावन्नासिक्यो वर्ण इति परिमुखादिषु (४।३।५८।१) पाठ· करिष्यते। नासिक्य नगरमिति संकाशादिषु (४।२।८०) पाठ करिष्यते। भाष्यम्।]

शिरसः शीर्षन् वा ॥६३॥ [स० ६।२।८१]

शिरसो यति परत शीर्षन्नादेशो वा भवति। शीर्षण्य शिरस्य। अवर्ण इति न वर्तते।

[(शीर्षंश्छन्दसि।) ये च तद्धिते। पा० ६।१।६१, वा केशेषु। वा० २। Printed SK wrongly omits the वा]

शीर्षोऽचि ॥६४॥

अजादिविषये शिरस शीर्षादेशो भवति। हास्तिशीर्षि· स्थौलशीर्षि· मार्गशीर्ष। अथ शिरसो ० [६।४।४१] इति ज्ञापकाद् विभक्तौ न भवति। कथम् इल्वला मृगशीर्षस्य[1] शिरस्यास्तारका स्मृता इति? शीर्षशब्द प्रकृत्यन्तरमस्ति।

[अचि शीर्ष। पा० ६।१।६१।३, शीर्षोऽचि तद्धिते। स० ६।२।८२। अचि शीर्ष· is found as a separate rule (vii 1 62) in the *Kāśikā* which, however, does not notice इल्वला मृगशीर्षस्य. [1]मार्गशीर्षस्य Ms HH reads मृगशीर्षस्य]

नाम्न्युदकस्योदः ॥६५॥

उदकस्य संज्ञायामुत्तरपद उदभावो भवति। उदमेघ उदपानः उदवाह उदधि।

[उदकस्योद सञ्ज्ञायाम्। पा० ६।३।५७, स० ६।२।८३]

उत्तरस्य ॥६६॥ [उत्तरपदस्य च। स० ६।२।८४]

उत्तरपदस्योदकस्य संज्ञायामुदभावो भवति। क्षीरोदो नाम समुद्र। अच्छोदो नाम सर।

[संज्ञायामुत्तरपदस्य च। पा० ६।३।५७।१]

**वासवाहने** ॥६७॥

वासे वाहने चोत्तरपदे उदकस्योदभावो भवति। उदवासः उदवाहनम्।

[ ६७-६८। पेषवासवाहनधिषु च। पा० ६।३।५८, पेषवासवाहनेषु। स० ६।२।८५। उदधि is regarded as a संज्ञा and comes under 66 ]

**पेषे पिषौ** ॥६८॥

पिषि परतो य पेषस्तस्मिन्नुत्तरपद उदकस्योदभावो भवति। उदपेष पिनष्टि। पिषाविति किम्? उदकपेष.।

**एकहलादौ भाण्डे वा** ॥६९॥ [स० ६।२।८६]

एको हल् आदिर्यस्य तस्मिन् भाण्डवाचिन्युत्तरपद उदकस्योदादेशो वा भवति। उदकुम्भ उदककुम्भ। उदपात्रम् उदकपात्रम्। एकहलादाविति किम्? उदकस्थालम्। भाण्ड इति किम्? [1]उदकपात।

[ एकहलादौ पूरयितव्येऽन्यतरस्याम्। पा० ६।३।५९। [1]उदकपर्वत। काशिका। उदकफेन। हृदयहारिणी। ]

**मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु** ॥ ७० ॥ [स० ६।२।८७। ०च। पा० ६।३।६०]

मन्थादिषु परत उदकस्योदादेशो वा भवति। उदमन्थ उदकमन्थः। उदौदन उदकौदन। उदसक्तु उदकसक्तु। उदबिन्दु उदकबिन्दु.। उदवज्र उदकवज्र। उदभार उदकभार। उदहार उदकहार। उदवीवध उदकवीवध। उदगाह उदकगाह।

**इको ह्रस्वः** ॥७१॥ [स० ६।२।८८]

इक उत्तरपदे ह्रस्वो वा भवति। ग्रामणिपुत्र. ग्रामणीपुत्रः। ब्रह्मबन्धुपुत्र ब्रह्मबन्धूपुत्र।

[ इको ह्रस्वोऽङ्यो गालवस्य। एक तद्धिते च। पा० ६।३।६१-२ ]

**न च्विङीयणियुवामभ्रूकुंसादीनाम्** ॥७२॥

च्विङयोर्यण इयुवश्च सम्बन्धिन इको ह्रस्वो न भवति, भ्रूकुंसादीना तु भवत्येव। पटीभूतास्तन्तव । पटूभूतोऽपटु । गार्गीपुत्र गौरीपुत्र कारीषगन्धीपुत्र । इन्द्रहूपुत्र श्रीकुलम् भ्रूकुलम्। अभ्रूकुंसादीनामिति किम्? भ्रुकुंस भ्रकुटि । अपर आह—भ्रूकुसादीनामकारो भवति। भ्रकुस भ्रकुटि। कथम् एकस्या आगतम् एकरूप्यम् एकमयम्, एकस्या क्षीरम् एकक्षीरमिति? सर्वादित्वादेव सिद्धम्।

**[ इयङुवङव्ययप्रतिषेध । पा० ६।३।६१।३ । अभ्रूकुसादीनामिति वक्तव्यम्। भ्रुकुटि भ्रुकुस। अपर आह—अकारो भ्रूकुंसादीनामिति वक्तव्यम्। भ्रकुटि भ्रकुंस । भाष्यम्। न सम्प्रसारणाव्ययङीयुवूस्थानिनामभ्रूकुंसादीनाम्। स० ६।१।८-९। अव्ययस्थाने च्विग्रहण कुर्वाणश्चन्द्रो भ्रान्त । गोयीचन्द्र । १।२३६। एक तद्धिते च। पा० ६।३।६२ ]**

**ङ्यापोस्त्वनाम्नोर्बहुलम्** ॥७३॥

ङ्यापोस्त्वे परत संज्ञाया चोत्तरपदे बहुल ह्रस्वो भवति। रोहिणित्वम् रोहिणीत्वम्। अजत्वम् अजात्वम्। रेवतिमित्रम् रेवतीमित्रम्। शिंशपस्थलम् शिंशपास्थलम्। क्वचिन्न भवति। नान्दीकर' लोमकाषण्ड:।

**[ ङ्यापो सज्ञाछन्दसोर्बहुलम्। त्वे च। पा० ६।३।६३-६४, ङ्यापो. संज्ञाया बहुलम्। त्वे च। स० ६।२।९०-९१ ]**

**इष्टकेषीकामालानां चिततूलभारिषु** ॥७४॥ [पा० ६।३।६४, स० ६।२।९२]

इष्टकादीना चितादिषु परतो ह्रस्वो भवति। इष्टकचितम् इषीकतूलम् मालभारी। तदन्तेष्वपीष्टकादय' सन्तीति भवत्येव ह्रस्वत्वम्। पक्वेष्टकचितम्। मुञ्जेषीकतूलम्। उत्पलमालभारिणी कन्या।

**[ इष्टकादिभ्यस्तदन्तस्यापि ग्रहणं भवति। काशिका। ]**

**खिति ससंख्यस्य मुम् च** ॥७५॥

खिदन्त उत्तरपदे ससख्यस्य ह्रस्वो भवति, मुम् च। हरिणिम्मन्या

कालिम्मन्या । ससंख्यस्येति किम् ? दोषामन्यमहः दिवामन्या रात्रिः [भाष्यम् १।१।४१] । अस्मादेव ससंख्यग्रहणात् खिदन्तग्रहणम् ।

**[ खित्यनव्ययस्य । अरुर्द्विषदजन्तस्य मुम् । पा० ६।३।६६-६७ । अनव्ययस्येत्येतदेव ज्ञापकमिह खिदन्तग्रहणस्य । काशिका । खित्यनव्ययस्य । ह्रस्वारुर्द्विषता मुम् । स० ६।२।९३-९४ ]**

**अरुषः** ॥७६॥

अरुष्शब्दस्य खिदन्त उत्तरपदे मुम् भवति । अरुन्तुदः ।

**कारेऽस्तुसत्यागदस्य** ॥७७॥

कारशब्दे परतोऽस्तुसत्यागदानां मुम् भवति । अस्तुंकारः सत्यंकारः अगदंकारः[1] ।

**[ कारे सत्यागदस्य । पा० ६।३।७०, अस्तुसत्यागदस्य कारे । वा० १ । सत्यागदास्तूनां कारे । स० ६।२।९५ । [1]अस्तुकारम् । सत्यकारम् । अगदंकारम् । Ms ]**

**लोकस्य पृणे** ॥७८॥ [पा० ६।३।७०।४, स० ६।२।९६]

पृणे परतो लोकस्य मुम् भवति । लोकम्पृणः ।

**इत्येऽनभ्याशस्य** ॥७९॥ [पा० ६।३।७०।५, स० ६।२।९७]

इत्ये परतोऽनभ्याशशब्दस्य मुम् भवति । अनभ्याशमित्यः ।

**भ्राष्ट्राग्न्योरिन्धे** ॥८०॥ [पा० ६।३।७०।६, स० ६।२।९८]

भ्राष्ट्रस्याग्नेश्चेन्धे परतो मुम् भवति । भ्राष्ट्रमिन्धः । अग्निमिन्धः ।

**अगिलस्य गिले** ॥८१॥ [स० ६।२।९९]

गिले परतो गिलादन्यस्य मुम् भवति । तिमिंगिलः । अगिलस्येति किम् ? गिलगिलः ? कथम् अयं तिमिंगिलगिलः ? गिलगिलशब्दे गिलशब्दोऽस्तीति गिल इत्येव सिद्धम् ।

**[ गिलेऽगिलस्य । पा० ६।३।७०।७ ]**

**भद्रोष्णयोः करणे** ॥८२॥ [स० ६।२।१००]

भद्रस्योष्णस्य च करणे परतो मुम् भवति। भद्रकरणम् उष्णं-करणम्।

[उष्णभद्रयो करणे। पा० ६।३।७०।८]

**मध्यस्य दिने** ॥८३॥ [स० ६।२।१०१]

मध्यस्य दिने परतो मुम् भवति। मध्यन्दिन ।

[मध्य मध्य दिनण् चास्मात्। ४।३।६० श्लो० वा० makes provision for माध्यन्दिन ]

**श्येनतिलयोः पाते ञे** ॥८४॥ [स० ६।२।१०२। ०तिलस्य०। पा० ६।३।७१]

श्येनस्य तिलस्य च पाते ञान्ते परतो मुम् भवति। श्यैनम्पाता क्रीडा। तैलम्पाता। ञ इति किम्? श्येनपात तिलपात ।

**रात्रेर्धातौ वा** ॥८५॥

रात्रेर्धातावुत्तरपदे मुम् वा भवति। रात्रिञ्चर रात्रिचर । रात्रिमटः रात्र्यट । खिति तु नित्यमेव। रात्रिम्मन्य ।

[रात्रे कृति विभाषा। पा०६।३।७२, रात्रे. कृत्यखिति वा। स०६।२।१०३]

**धेनोर्भव्यायाम्** ॥८६॥ [पा० ६।३।७०।३, स० ६।२।१०४]

धेनुशब्दस्य भव्यायामुत्तरपदे मुम् वा भवति। धेनुम्भव्या धेनुभव्या। सूतादिभ्यो दुहितु पुत्रड् न वाच्य, पुत्रशब्दस्य गौरादिपाठात् [२।३।३७]। तथा दुहितु पुत्री शैलपुत्रीत्यपि दृश्यते।

[सूतोग्रराजभोजकुलमेरुभ्यो दुहितु पुत्रड् वा। पा० ६।३।७०।९। केचित्तु शार्ङ्गरवादिषु पुत्त्रशब्द पठन्ति, तस्य पुत्त्रीति भवति। अन्यत्रापि हि दृश्यते। शैलपुत्त्रीति। काशिका। सूतोग्रराजभोजमेरुकुलशैलादिभ्यो दुहितु पुत्रट्। स० ६।२।१०५]

**मांसस्य पचि घञ्ल्युटोर्लोपः** ॥८७॥ [स० ६।२।१०६]

मासस्य पचतौ घञ्ल्युट्परे परतो लोपो वा भवति। माᳵपाकः मासपाक'। माᳵपचनी मासपचनी। पचीति किम्? मासदाह' मासदहनी। घञ्ल्युटोरिति किम्? मासपक्ति ।

[पदादिषु मांस्पृतन्स्नूनामुपसंख्यानम्। पा० ६।१।६३।१। यन्नीक्षणं मांस्पचन्या (ऋ० स० १।१६२।१३)। मांसपचन्या इति प्राप्ते। भाष्यम्। For मांस्पाक and मास्पचनी Ms shows माᳵपाक and माᳵपचनी with उपध्मानीय acc to vi 4 31 but cf Kātantraparıśısta i 67: कस्कादित्वात् सश्रुतिरनयोरिति वर्णविवेक। लोपस्यासिद्धत्वान्न विसर्जनीय इति विमलसमीक्षा।

Cf लुम्पेदवश्यमः कृत्ये तु काममनसोरपि।
समो वा हिततत्योर्मांसस्य पचियुड्घञो ॥ काशिका।]

**समस्तते** ॥८८॥

समस्तते परतो लोपो वा भवति। सततम् सन्ततम्। कथ सहितम् संहितम् इति। ऊरोरुपमासहितसहित° [२।३।७९] इति निपातनात्।

[समो हिततत्योर्वा लोप। पा० ६।१।१४४।१, समस्ततहितयो। स० ६।२।१०७]

**तुमश्च काममनसोः** ॥८९॥

तुम समश्च कामे मनसि चोत्तरपदे लोपो भवति। भोक्तुकाम' भोक्तुमना'। सकाम समना ।

[समृतुमुनो कामे। पा० ६।१।१४४।२। मनसि चेति वक्तव्यम्। भाष्यम्। तुमश्च काममनसोर्नित्यम्। स० ६।२।१०८]

**तव्यादिषट्केऽवश्यमः** ॥९०॥

अवश्यमस्तव्यादिषु षट्केषु परतो लोपो भवति। अवश्यकर्तव्यम् अवश्यकार्यम्। षट्क इति किम्? अवश्यकारक.।

[अवश्यम कृत्ये। पा० ६।१।१४४।३। कृत्येऽवश्यम। स० ६।२।१०९]

**नञो नः** ॥९१॥ [स० ६।२।११०]

नञो नकारस्योत्तरपदे लोपो भवति। अब्राह्मण अवृषल। ञकार किम्? केवलस्य मा भूत्। पामनपुत्र।

**[न लोपो नञ। पा० ६।३।७३। ञकार किम्? नैक। पामनपुत्रक। हृदयहारिणी।]**

**तिङ्यवक्षेपे** ॥९२॥ [स० ६।२।१११]

तिङन्ते परतोऽवक्षेपे गम्यमाने नञो नकारस्य लोपो भवति। अपचसि त्व जाल्म। अकरोषि त्वं जाल्म।

**[नञो नलोपेऽवक्षेपे तिङ्युपसंख्यानम्। पा० ६।३।७३।१]**

**ततोऽचि नुट्** ॥९३॥

तस्माल्लुप्तनकारान्नञोऽजादावुत्तरपदे नुडागमो भवति। अनश्व अनुष्ट्र। तत इति किम्? नञो मा भूत्। टकार किम्? ङमो द्वित्वं मा भूत्।

**[तस्मान्नुडचि। पा० ६।३।७४, स० ६।२।११२]**

**एकादन्नाद्वौ संख्यायाम्** ॥९४॥ [स० ६।२।११४]

एकात्परस्य नञ संख्यायामुत्तरपदे अन्न अद्व इत्येतावादेशौ भवत। एकेन न विंशति एकान्नविंशति एकाद्वविंशति। एकान्नत्रिंशत् एकाद्व-त्रिंशत्।

**[एकादिश्चैकस्य चादुक्। पा० ६।३।७६। विभाषयानुनासिक्यम्। भाष्यम्।]**

**नखादयः** ॥९५॥

नखादय शब्दा अलुप्तनकारा निपात्यन्ते। नास्य खमस्तीति नखम्। अखमन्यत्। संज्ञाशब्देषु च व्युत्पत्तिमात्रं यथाकथञ्चित्कर्तव्यम्। नास्य कुलमस्तीति नकुल। अकुलोऽन्य.॥ नख। नकुल। नपुंसक। नक्षत्र। नक्र। नाक। नमेरु। नासत्य। नमुचि। नभ्राट्। नपात्। नवेदा। असुन्नौणादिक।

[नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या। पा० ६।३।७५। नभ्राण्-नपान्-नवेदो-नासत्य-नमुचि-नकुल-नख-नपुंसक-नक्षत्र-नक्र-नाक-नग्न-नाग-नभाग-नाराच-नाचिकेत-नापित-नमेरु-ननान्द-नान्तरीयकादिषु प्रकृत्या। स० ६।२।११३]

**नगोऽप्राणिनि वा ॥९६॥** [स० ६।२।११५]

नग इत्यप्राणिनि वा निपात्यते। नगा वृक्षा, नगा पर्वता। अगा वृक्षा, अगा पर्वता। अप्राणिनीति किम्? अगो वृषल शीतेन।

[नगोऽप्राणिष्वन्यतरस्याम्। पा० ६।३।७७]

**सहस्य सोऽन्यार्थे ॥९७॥**

अन्यपदार्थवृत्तौ समासे सति सहशब्दस्योत्तरपदे सो वा भवति। सपुत्र सहपुत्र। सच्छात्र सहच्छात्र। अन्यार्थ इति किम्? सहयुध्वा सहकृत्वा। कथ सहकृत्वप्रिय प्रियसहकृत्वेति? अन्यपदार्थे समासे यदुत्तरपदं तत्पर सहशब्दो न भवतीति न सादेश।

[वोपसर्जनस्य। पा० ६।३।८२, सहस्य सो बहुव्रीहौ वा। स० ६।२।११६]

**नाम्नि ॥९८॥**

सञ्ज्ञायामुत्तरपदे सहशब्दस्य सादेशो भवति। साश्वत्थ· सपलाश।

[सहस्य स सञ्ज्ञायाम्। पा० ६।३।७८। सञ्ज्ञायाम्। स० ६।२।११७]

**अनुपाख्ये ॥९९॥**

अप्रत्यक्षे गम्यमाने सहशब्दस्योत्तरपदे सादेशो भवति। साग्नि· कपोत., सपिशाचा वात्या।

[द्वितीये चानुपाख्ये। पा० ६।३।८०। अनुपाख्याधिकयो.। स० ६।२।११८]

**अकाले स्वार्थे ॥१००॥**

स्वार्थप्रधानस्य सहशब्दस्याकाल उत्तरपदे सादेशो भवति। सम्पन्नं ब्रह्म सब्रह्म बाभ्रवाणाम्। सचक्र निधेहि। सधुरम्। अकाल इति किम्? सहपूर्वाह्णम् सहापराह्णम्।

[अव्ययीभावे चाकाले। पा० ६।३।८१, स० ६।२।११९]

**ग्रन्थान्ताधिक्ये** ॥१०१॥ [०धिके च । पा० ६।३।७९]

ग्रन्थान्त आधिक्ये च वर्तमानस्य सहशब्दस्य सादेशो भवति। सकल ज्योतिषमधीते सज्योति । समुहूर्तम् । कालार्थ आरम्भ । आधिक्ये सद्रोणा खारी । समाष कार्षापण । नित्यार्थ आरम्भ ।

**[ ग्रन्थान्ते च । अनुपाख्याधिकयो । स० ६।२।१२०,११८ ]**

**नाशिष्यगोवत्सहले** ॥१०२॥ [स० ६।२।१२१]

आशिषि विषये गवादिवर्जित उत्तरपदे सहशब्दस्य सादेशो न भवति। स्वस्ति देवदत्ताय सहपुत्राय सहच्छात्राय। अगोवत्सहल इति किम् ? स्वस्ति भवते सगवे सवत्साय सहलाय ।

**[ प्रकृत्याशिषि । पा० ६।३।८३ । प्रकृत्याशिष्यगवादिषु । वा० १ । सगवे सवत्साय सहलाय । भाष्यम् । प्रकृत्याशिष्यगोवत्सहलेषु । काशिका । ]**

**समानस्य पक्षादिषु** ॥१०३॥

समानस्य पक्षादिषूत्तरपदेषु सभावो भवति। सपक्ष सज्योति । पक्षादिष्विति किम् ? समानशील ॥ पक्ष । ज्योतिस् । जनपद । रात्रि । नाभि । बन्धु । पत्नी । ब्रह्मचारिन् । ब्रह्म वेद , तदध्ययनार्थं व्रतमपि ब्रह्म । तच्चरतीति ब्रह्मचारी । समानो ब्रह्मचारी सब्रह्मचारी ।

**[ ( समानस्यच्छन्दस्यमूर्धप्रभृत्युदर्केषु । ) ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु। चरणे ब्रह्मचारिणि। पा० ६।३।८५-८६ । समानस्येति योगविभाग इष्टसिद्ध्यर्थं क्रियते। तेन सपक्ष साधर्म्यं सजातीय इत्येवमादयः सिद्धा भवन्ति। काशिका । समानस्य पक्ष-ज्योति-र्जनपद-रात्रि-नाभि-बन्धु-गन्ध-पिण्ड-पत्न्यादिषु । चरणे ब्रह्मचारिणि । स० ६।२।१२२-१२३ ]**

**नामगोत्ररूपस्थानवर्णवयोवचनधर्मजातीये वा** ॥ १०४ ॥ [०जातीयेषु च । स० ६।२।१२६]

नामादिषु परत समानस्य सभावो वा भवति। सनामा समाननामा। सगोत्र समानगोत्र । सरूप समानरूप । सस्थान समानस्थान । सवर्ण

समानवर्ण । सवया समानवया । सवचन समानवचन । सधर्मा समान-धर्मा । सजातीय समानजातीय ।

[ Acc to Pāṇini the rule is compulsory चान्द्रास्तु नामादिषु सभाव विकल्पेन ब्रुवन्ति । भाषावृत्ति । ७।३।९४ । नामगोत्ररूपस्थानवर्णवयो-वचनजातीये वेति चान्द्राः । संक्षिप्तसार ७।४६ ]

**उदरे ये ॥१०५॥**

उदरे यकारपरे परत समानस्य सभावो वा भवति । सोदर्य समानोदर्य । य इति किम् ? समानोदरता ।

[ विभाषोदरे । पा० ६।३।८८ । उदरे वा । स० ६।२।१२५ । For सतीर्थ्य see iii 4 75 ]

**दृग्दृशदृक्षे ॥१०६॥** [०क्षेषु । स० ६।२।१२७]

दृगादिषु परत समानस्य सभावो भवति । सदृक् सदृश सदृक्ष ।

[ दृग्दृशवतुषु । पा० ६।३।८९, दृग्दृशवतुषु दृक्ष उपसंख्यानम् । वा० १ ]

**वतौ चेदंकिमोरीश्की ॥१०७॥** [स० ६।२।१२८]

वतौ दृगादिषु च परत इदंकिमोरीश्की इत्येतावादेशौ भवत । इयान् कियान् । ईदृक् कीदृक् । ईदृश कीदृश । ईदृक्ष कीदृक्ष ।

[ दृग्दृशवतुषु । इदकिमोरीश्की । पा० ६।३।८९-९० ]

**आः सर्वादीनाम् ॥१०८॥**

वतौ दृगादिषु च परत सर्वादीनामाकारो भवति । यावत् तावत् । यादृक् तादृक् । यादृश यादृश । यादृक्ष तादृक्ष ।

[ आ सर्वनाम्न । पा० ६।३।९१, स० ६।२।१२९ ]

**विष्वग्देवयोश्च ङद्गाश्चि वौ ॥१०९॥**

विष्वग्देवयो सर्वादीना चाञ्चतौ विपरे परतो ङद्गागमो भवति । विष्वगञ्चति विष्वद्र्यङ् । देवद्र्यङ् । यद्र्यङ् तद्र्यङ् । वाविति किम् ? विष्वगञ्ची ।

[ विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये । पा० ६।३।९२, विष्वग्देवयोश्च टेरद्रिरञ्चतौ वौ। स० ६।२।१३० ]

**समः समिः** ॥११०॥ [मि । स०६।२।१३१, पा०६।३।९३]

समोऽञ्चतौ विपरे सम्यादेशो भवति। सम्यङ् सम्यञ्चौ सम्यञ्च.। समीच समीचा।

**सहस्य सध्रिः** ॥९५॥ [पा० ६।३।९५, स० ६।२।१३२]

सहस्याञ्चतौ विपरे परत. सध्र्यादेशो भवति। सध्र्यञ् सध्र्यञ्चौ सध्र्यञ्च । सध्रीच सध्रीचा।

**तिरसस्तिर्यति** ॥११२॥ [स० ६।२।१३३]

तिरसोऽञ्चतावकारादौ परतस्तिर्यादेशो भवति। तिर्यङ् तिर्यञ्चौ तिर्यञ्च । अतीति किम्। तिरश्च तिरश्चा।

[ तिरसस्तिर्यलोपे। पा० ६।३।९४ ]

**द्व्यन्तः प्रादेरनादप ईत्** ॥११३॥

द्वेरन्त शब्दात्प्रादिभ्यश्चानवर्णान्तेभ्य परस्याप ईदादेशो भवति। द्वीप अन्तरीप । समीप नीप । अनादिति किम्? प्रापम् परापम्।

[ द्व्यन्तरुपसर्गेभ्योऽप ईत्। पा० ६।३।९७। अपर आह—ईत्वमनवर्णादिति वक्तव्यम्। समीपम् अन्तरीपम्। इह मा भूत्। प्रापम् परापम्। भाष्यम्। द्व्यन्तर-नवर्णान्तोपसर्गेभ्योऽप ईत्। स० ६।२।१३४ ]

**देशेऽनूपः** ॥११४॥ [स० ६।२।१३५]

देशेऽभिधेयेऽनूप इति निपात्यते। अन्यत्रान्वीप ।

[ ऊदनोर्देशे। पा० ६।३।९८ ]

**समापो नाम्नि** ॥११५॥

समाप इति संज्ञाया निपात्यते। समाप नाम देवयजनम्। समीपमन्यत्।

[ समाप ईत्त्वप्रतिषेध । पा० ६।३।९७।१ । आत् समो देवयजने । स० ६।२।१३६ ]

**छकारकेऽन्यस्य दुक्** ॥११६॥ [०कयोरन्य० । स० ६।२।१३७]

छे कारके च परतोऽन्यस्य दुगागमो भवति । अन्यदीय अन्यत्कारक' ।

[ ११६-११७ । अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु । पा० ६।३।९९ ]

**अषष्ठीतृतीयस्याशीराशास्थास्थितोत्सुकोतिरागेषु** ॥ ११७ ॥ [०तृतीयास्थस्या० । स० ६।२।१३८]

अषष्ठ्यन्तस्यातृतीयान्तस्य चान्यस्याशीरादिषु परतो दुगागमो भवति । अन्या आशी अन्यदाशी । अन्यदाशा । अन्यदास्था । अन्यदास्थित' । अन्यदुत्सुक । अन्यदूति । अन्यद्राग । अषष्ठीतृतीयस्येति किम् ? अन्यस्याशी अन्याशी । अन्येनास्थित अन्यास्थित ।

**अर्थे वा** ॥११८॥ [स० ६।२।१३९]

अर्थे परतोऽन्यस्य दुगागमो वा भवति । अन्यदर्थ अन्यार्थ. ।

[ अर्थे विभाषा । पा० ६।३।१०० ]

**कोः कदच्युत्तरार्थे** ॥११९॥

कुशब्दस्योत्तरपदार्थे वर्तमानस्याजादावुत्तरपदे कदादेशो भवति । कदुष्ट्र' कदश्व । अचीति किम् ? कुब्राह्मण । उत्तरार्थ इति किम् ? कूष्ट्रो राजा ।

[ को कत्तत्पुरुषेऽचि । पा० ६।३।१०१, स० ६।२।१४० ]

**त्रिरथवदेषु** ॥१२०॥ [स० ६।२।१४१]

त्र्यादिषु परत को कदादेशो भवति । कुत्सितास्त्रय कत्त्रय' । कद्रथ । कद्वद ।

[ रथवदयोश्च । पा० ६।३।१०२, कद्भावे त्रावुपसख्यानम् । ६।३।१०१।१ ]

**तृणे जातौ** ॥१२१॥ [स० ६।२।१४२, च जातौ। पा० ६।३।१०३]

तृणे परतो जातावभिधेयाया को कदादेशो भवति। कत्तृणम्। जाताविति किम्? कुत्सितानि तृणानि कुतृणानि।

**काक्षपथोः** ॥१२२॥

अक्षे पथि च परत को कादेशो भवति। काक्ष कापथ।

[का पथ्यक्षयो। पा० ६।३।१०४, स० ६।२।१४३]

**ईषदर्थे** ॥१२३॥ [पा० ६।३।१०५, स० ६।२।१४४]

ईषदर्थे वर्तमानस्य को कादेशो भवति। कामधुरम्। कालवणम्। काम्लम्।

**पुरुषे वा** ॥१२४॥ [स० ६।२।१४५]

पुरुष उत्तरपदे को काभावो वा भवति। कापुरुष कुपुरुष। अप्राप्तविभाषेयम्। ईषदर्थे तु पूर्वेण नित्य भवति। ईषत्पुरुष कापुरुष।

[विभाष पुरुषे। पा० ६।३।१०६]

**कवं चोष्णे** ॥१२५॥ [पा० ६।३।१०७, स० ६।२।१४६]

उष्णे परत को कवमादेशो भवति, कादेशश्च वा। कवोष्णम् कोष्णम् कदुष्णम्।

**दिक्छब्दात्तीरस्य तारः** ॥१२६॥ [स० ६।२।१४७]

दिक्छब्दात्परस्य तीरस्य तारादेशो वा भवति। दक्षिणतारम् दक्षिण-तीरम्। उत्तरतारम् उत्तरतीरम्।

[दिक्शब्देभ्यस्तीरस्य तारभावो वा। पा० ६।३।१०९।१]

**पृषोदरादीनि** ॥१२७॥

पृषोदरादीनि शब्दरूपाणि साधूनि भवन्ति। पृषदुदरमस्य पृषोदर। पृषदुद्वानमस्य पृषोद्वान। वारिवाहको वलाहक। जीवनस्य मूतो जीमूत.। शवस्य शयनम् श्मशानम्। ऊर्ध्वं खमस्य उदूखलम् उलूखल वा। पिशित-

मश्नातीति पिशाच । ब्रुवन्तोऽस्या सीदन्तीति बृसी। मह्या रौतीति मयूर । मह्या शेते महिष । षट् च दश च षोडश। कृच्छ्रेण दाश्यते दूडाश । कृच्छ्रेण नाश्यते दूणाश । कृच्छ्रेण दभ्यते दूडभ । दुष्टं ध्यायतीति दूढ्य । वाग्वादस्यापत्य वाड्वलि । दिव्योक एषा ते दिवौकस । एवमन्येऽपि कपित्थदधित्थाश्वत्थमहित्थादय शिष्टप्रयोगा अनुगन्तव्या ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योग 'एतच्च तत्पञ्चविध निरुक्तम् ॥

[ पृषोदरादीनि यथोपदिष्टम् । पा० ६।३।१०९ । वाचो वादे डत्वं वलभाव-श्चोत्तरपदस्येञि । षष उत्व दतृदशसूत्तरपदादे ष्टुत्व च । धासु वा । दुरो दाश-नाशदभध्येषु । वा० २-५ । पृषत उदरोद्वानयोर्लोप । अवाप्योस्तसनद्धादिष्वा-देर्वा । जीवनस्य मूते वादे । वारेर्वो वाहके लश्चोत्तरपदादे । आडो ध्य ष्टु । दुरो दाशनाशदभध्येषूच्च । षषो दशसु । मह्या रौति मयूर । शेते महिष । पिशाच श्मशाने पिशिताशशवशयनयो । वाग्वादस्येञि वाड्वल । ब्रुवन्तोऽस्या सीदन्ति बृसी । ऊर्ध्वं खमस्योदूखलमुलूखलं वा । दिव्योक एषा दिवौकस । कपित्थ-दधित्थ-महित्थाऽऽश्वत्थादयश्च । ६।२।१४८-१६२ । 'तदुच्यते पञ्चविध निरुक्त-मिति काशिकादिषु पाठ । ]

**संख्याविसायादेरह्नस्याहन् ङौ वा ॥१२८॥** [स० ६।२।१६३]

सख्याविसायादेरह्नशब्दस्य ङौ परतोऽहनादेशो भवति वा । द्वयो-रह्नोर्भवे द्व्यह्नि द्व्यहनि द्व्यह्ने । विगतेऽहनि व्यह्नि व्यहनि व्यह्ने । सायाह्नि सायाहनि सायाह्ने । सख्याविसायादेरिति किम् ? पूर्वाह्णे अपराह्णे । ङाविति किम् ? द्व्यह्न व्यह्न सायाह्न ।

[ सख्याविसायपूर्वस्याह्नस्याहनन्यतरस्या ङौ । पा० ६।३।११० । सायं लोऽह्नतरयो । सप्तम्या वा सा च । स० ६।२।१६४-१६५ ]

**विश्वस्य वसुराटोर्दीर्घः ॥१२९॥** [स० ६।२।१६६]

वसुराटोरुत्तरपदयोर्विश्वस्य दीर्घो भवति । विश्वावसु विश्वाराट् । राडिति निर्देशादिह न भवति । विश्वराजौ विश्वराज ।

[ विश्वस्य वसुराटो । पा० ६।३।१२८ ]

**नरे नाम्नि** ॥१३०॥

नरे परत सञ्ज्ञाया विश्वस्य दीर्घो भवति। विश्वानर । नाम्नीति किम्? विश्वनर ।

[ **नरे संज्ञायाम्। पा० ६।३।१२९, स० ६।२।१६७** ]

**ऋषौ मित्रे** ॥१३१॥ [स० ६।२।१६८]

ऋषावभिधेये मित्रे परतो विश्वस्य दीर्घो भवति। विश्वामित्र । ऋषाविति किम्? विश्वमित्रो माणवक । नाम्नीत्येव। विश्वमित्रो मुनि ।

[ **मित्रे चर्षौ। पा० ६।३।१३०**]

**वनगिर्योः कोटराञ्जनादीनाम्** ॥१३२॥

वने गिरौ च परत कोटरादीनामञ्जनादीना च दीर्घो भवति। कोटरावणम् मिश्रकावणम् सिध्रकावणम्। अञ्जनागिरि भञ्जनागिरि किंशुकागिरि । कोटराञ्जनादीनामिति किम्? कुबेरवनम्। असिपत्त्रवनम्। कृष्णगिरि । नाम्नीत्येव। अञ्जनगिरि ।

[ **वनगिर्यो सञ्ज्ञाया कोटरकिंशुलकादीनाम्। पा० ६।३।११७। कोटर-मिश्रक-सिध्रक-पुरग-सारिकाणा वने। अञ्जन-भञ्जन-किंशुक-किलुक-साल्व-लोहित-कुक्कुट-खड्डन-नल-पिङ्गलाना गिरौ। स० ६।१।१६९-१७०** ]

**मतौ बह्वचोऽनजिरादीनाम्** ॥१३३॥ [पा० ६।३।११९]

मतौ परतो बह्वचोऽजिरादिवर्जितस्य दीर्घो भवति। उदुम्बरावती वीरणावती। बह्वच इति किम्? व्रीहिमती। अनजिरादीनामिति किम्? अजिरवती खदिरवती। नाम्नीत्येव। वलयवती॥ अजिर। खदिर। पुलिन। मलय। कारण्डव। चक्रवाक।

[ **मतौ बह्वचोऽनजिर-खदिर-खपुर-स्थविर-पुलिन-मलय-कारण्डव-चक्रवाका-दीनाम्। स० ६।२।१७१** ]

**शरादीनाम्** ॥१३४॥ [०नाच। पा० ६।३।१२०]

शर इत्येवमादीना मतौ परतो दीर्घो भवति। शरावती वशावती।

नाम्नीत्येव । शरवती ॥ शर । वंश । धूम । अहि । कपि । मणि । मुनि । शुचि । आकृतिगणोऽयम् ।

[ शर-वंश-शुचि-कुश-धूमा-ऽहि-कवि-हनु-मुन्यादीनां च । स० ६।२।१७२ ]

**वले** ॥१३५॥ [पा० ६।३।११८]

वले परतो दीर्घो भवति । कृषीवल । आसुतीवल । दन्तावल ।

[ वलच्यनुत्साहभ्रातृपितॄणाम् । स० ६।२।१७३ ]

**चितेः कपि** ॥१३६॥ [पा० ६।३।१२७, स० ६।२।१७४]

चितिशब्दस्य कपि परतो दीर्घो भवति । एकचितीक । द्विचितीक ।

**ढ्रलोपेऽणः** ॥१३७॥

ढकाररेफयोर्लोपो यस्मिंस्तत्र पूर्वस्याणो दीर्घो भवति । लीढम् गूढम् नीरक्तम् दूरक्तम् । अण इति किम् ? आवृढम् ।

[ ढ्रलोपे पूर्वस्य दीर्घोऽण । पा० ६।३।१११, ढ्रलोपे पूर्वस्याण । स० ६।२।१७५ ]

**सहिवहोरोत्** ॥१३८॥

सहिवहोर्ढ्रलोपेऽण ओत्त्व भवति । सोढा वोढा । सोढुम् वोढुम् । उदवोढाम् उदवोढम् । कथम् ऊढम् ? प्रादूढ° [५।१।८९] इत्यादिलिङ्गात् ।

[ सहिवहोरोदवर्णस्य । पा० ६।३।११२, स० ६।२।१७६ ]

**कर्णे चिह्नस्याविष्टाष्टपञ्चभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य** ॥१३९॥ [स० ६।२।१७७]

कर्णे परतश्चिह्नस्य विष्टादिवर्जितस्य दीर्घो भवति । दात्राकर्णः द्विगुणाकर्ण द्व्यङ्गुलाकर्ण । चिह्नस्येति किम् ? शोभनकर्ण । अविष्टादेरिति किम् ? विष्टकर्ण । अष्टकर्ण । पञ्चकर्ण. । भिन्नकर्ण । छिन्नकर्ण । छिद्रकर्ण । स्रुवकर्ण । स्वस्तिककर्ण ।

[ कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य । पा० ६।३।११५ ]

**नहिवृतिवृषिव्यधिरुचिसहितनिषु कौ** ॥१४०॥ [पा० ६।३।११६, स० ६।२।१७८]

नह्यादिषु क्विबन्तेषु परतो दीर्घो भवति। उपानत्। नीवृत्। प्रावृट्। मर्मावित्। नीरुक्। ऋतीषट्। परीतत्। गमादीना कौ [५।३।४९] इत्यनुनासिकलोप । काविति किम्? उपनद्धम्।

**प्रादीनां घञि बहुलम्** ॥१४१॥

प्रादीना घञन्ते परतो बहुल दीर्घो भवति। प्रतिविशन्त्यस्मिन्निति प्रतीवेश प्रतिवेश । प्रतिबोधन प्रतीबोध प्रतिबोध । प्रतिहरन्ति ज्ञापयन्त्यनेनेति प्रतीहार प्रतिहार । प्रतिकुर्वन्ति तेनेति प्रतीकार प्रतिकार । क्वचिद् भिन्नविषये। प्रकार प्राकार । प्रसाद प्रासाद । क्वचिन्न भवति। निपाद विपाद । क्वचिद्भवत्येव। नीवार नीहार नीशार ।

[ उपसर्गस्य घञ्यमनुष्ये बहुलम्। पा० ६।३।१२२, सादकारयो कृत्रिमे। प्रतिवेशादीना विभाषा। वा० १-२। उपसर्गस्य घञि बहुलम्। स० ६।२।१७९ ]

**इकः काशे** ॥१४२॥ [पा० ६।३।१२३, स० ६।२।१८०]

इगन्तस्य काशे परतो दीर्घो भवति। नीकाश वीकाश अनूकाश प्रतीकाश । इक इति किम्? प्रकाश । बहुलमित्येव। निकाश विकाश । अजर्थ आरम्भ ।

**दस्ति** ॥१४३॥ [पा० ६।३।१२४, स० ६।२।१८१]

दा इत्यस्य यस्तकारादेशस्तस्मिन् परत प्रादीनामिगन्ताना दीर्घो भवति। नीत्तम् परीत्तम् वीत्तम्। तीति किम्? सुदत्तम्। इक इत्येव। प्रत्तम् अवत्तम्।

**वहे** ॥१४४॥

वहे परत इगन्तस्य दीर्घो भवति। ऋषीवह कपीवह कृषीवह । इक इत्येव। पिण्डवह. । बहुलमित्येव। पीलुवह चारुवह ।

[ इको वहेऽपीलो.। पा० ६।३।१२१। अपीलुदार्वादेर्वहे। स० ६।१।१८२ ]

**अन्येषामपि** ॥१४५॥

अन्येषामपि शब्दानामुत्तरपदे बहुल दीर्घो भवति। श्वादन्त श्वादंष्ट्रः श्वाकर्ण। क्वचिन्न भवति। श्वफल्क श्वमुख। क्वचिद्विकल्प। श्वापुच्छः श्वपुच्छः। क्वचिद्विपयान्तरेऽपि। श्वपदम् श्वापदम्। क्वचिदनुत्तरपदेऽपि। पुरुष पूरुष।

[**अन्येषामपि दृश्यते। पा० ६।३।१३७, स० ६।२।१८३। शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु। काशिका।**]

**चौ** ॥१४६॥ [पा० ६।३।१३८, स० ६।२।१८४]

अञ्चतौ लुप्ताकारे परतो दीर्घो भवति। दधीच दधीचा। मधूचः मधूचा।

**यण इकः** ॥१४७॥

यण स्थाने य इक् तस्योत्तरपदे दीर्घो भवति। कारीषगन्धीपुत्रः कौमुदगन्धीपति। यण इति किम्? भूमिपति।

[**सम्प्रसारणस्य। पा० ६।३।१३९, स० ६।२।१८५**]

इति चान्द्रे व्याकरणे पञ्चमस्याध्यायस्य द्वितीय पादः समाप्त।

**प्रकृतेः** ॥ १ ॥ [स० ६।३।१]

अत परं प्रकृतेरित्येतदधिकृत वेदितव्यम्।

[**अङ्गस्य। पा० ६।४।१**]

**हलः** ॥ २ ॥ [पा० ६।४।२]

हल प्रकृत्यवयवादुत्तरो यो यण इक् तदन्ताया प्रकृतेर्दीर्घो भवति। हूतः जीन सवीत। प्रकृतेरित्येव। निरुतम् दुरुतम्। तदन्तविधि किम्?

विद्ध॰ विचित । कथं तृतीय ? द्वितीयतृतीयौ [४।२।५९] इति निपातनात् ।

[ हलादेरन्त्यस्य । स० ६।३।२ ]

**अलुकि** ॥ ३ ॥

यत्र यदुच्यते तस्यालुकि सति तद्भवतीत्येतदधिकृत वेदितव्यम् ।

**नाम्यतिसृचतसॄः** ॥ ४ ॥ [स० ६।३।३]

नामि परतस्तिसृचतसृवर्जिताया प्रकृतेर्दीर्घो भवति । वृक्षाणाम् अग्नीनाम् वायूनाम् कर्तॄणाम् । नुटा निर्देश किम् ? कृते नुटि दीर्घत्व-प्रसिद्ध्यर्थम्, अन्यथा हि नुडभाव स्यात् । अतिसृचतसॄरिति किम् ? तिसृणाम् चतसृणाम् । अलुकीत्येव । तालुवनम् । पीलुवनम् । प्रकृतेरित्येव । कृमिणा पश्य । पामना पश्य । नैरा नामि प्रकृति ।

[ नामि । न तिसृचतसृ । पा० ६।४।३-४ ]

**नुर्वा** ॥ ५ ॥ [स० ६।३।४]

नृशब्दस्य नामि परतो दीर्घो वा भवति । नृणाम् नृणाम् ।

[ ( छन्दस्युभयथा । ) नृ च । पा० ६।४।६ ]

**नः** ॥ ६ ॥

नकारान्ताया॰ प्रकृतेर्नामि परतो दीर्घो भवति । पञ्चानाम् सप्तानाम् । नामीत्येव । चर्मणाम् ।

[ नोपधाया । पा० ६।४।७, न उपधाया. । स० ६।३।५ ]

**शिसुटि** ॥ ७ ॥

शो सुटि च परतो नकारान्ताया प्रकृतेर्दीर्घो भवति । सामानि वेमानि । कुण्डानि वनानि । नुमापीह नान्तत्व सुखादीनि० [१।१।३५] इति लिङ्गात् । राजानौ राजान॰ राजानम् राजानौ । दीर्घप्रतियोगिनो ह्रस्वस्य भवति, वचनसामर्थ्याच्च व्यवधानमाश्रीयते । अलुकीत्येव । राजप्राप्तः ।

[ सर्वनामस्थाने चासम्बुद्धौ। पा० ६।४।८, शिसुट्यशीसम्बुद्धयो स० ६।३।६ ]

**स्महतोर्नुमि** ॥ ८ ॥ [स० ६।३।७]

सकारान्तस्य महतश्च शौ सुटि च परतो नुमि सति पूर्वस्य दीर्घो भवति। श्रेयांसि महान्ति। श्रेयांसौ महान्तौ। नुमीति किम्? अप्सरस।

[ सान्तमहत सयोगस्य। पा० ६।४।१० ]

**अपतृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम्** ॥ ९ ॥

अप्शब्दस्य तृजन्तस्य तृनन्तस्य च स्वस्रादीना च शौ सुटि च परतो दीर्घो भवति। आप, कर्तॄणि। कर्तारं कटान्, वक्तार जनापवादान्। स्वसारम् नप्तारम् नेष्टारम् त्वष्टारम् क्षत्तारम् होतारम् पोतारम् प्रशास्तारम्। नप्त्रादिग्रहणादन्येपा त्रान्ताना संज्ञाशब्दाना न भवति। मातरम् पितरम् जामातरम् दुहितरम् भ्रातरम्।

[ अप्तृन्तृच्स्वसृनप्तृनेष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्। पा० ६।४।११। अप्-तृ-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ-होतृ-पोतृ-प्रशास्तृ-प्रस्तोत्रुन्नेत्रुद्गातृप्रतिहर्तृप्रतिप्रस्थातॄणाम्। स० ६।३।८ ]

**सावसम्बुद्धौ** ॥१०॥

सौ यद्दीर्घत्वं तदसम्बोधन एव भवति। राजा श्रेयान् महान्। कर्ता स्वसा नप्ता नेष्टा त्वष्टा क्षत्ता होता पोता प्रशास्ता। सम्बुद्धौ न भवति। हे राजन्, हे श्रेयन्, हे महन्, हे कर्त।

[ सर्वनामस्थाने चासम्बुद्धौ। पा० ६।४।८, अत्वसन्तस्याधातो सौ। स० ६।३।९ with असम्बुद्धि from vi 36 ]

**अत्वसोः** ॥११॥

अत्वन्तस्यासन्तस्य च सावसम्बुद्धौ दीर्घो भवति। भवान् कृतवान् गोमान्। मतुप पकारानुबन्धो न पुनरतुशब्दस्येत्यस्यापि भवति। असन्तस्य च। अप्सरा सुमना। कथं चर्म वस्ते चर्मव इति? अतुसाहचर्यादधातोरेव ग्रहणम्। असम्बुद्धावित्येव। हे भवन्, हे सुमनः।

[अत्वसन्तस्य चाधातो । पा० ६।४।१४। अत्वसन्तस्याधातो. सौ। स० ६।३।९]

**इन्हन्पूषार्यम्णां शौ च** ॥१२॥ [स० ६।३।१०]

इनन्तस्य हनादीना च शावेव दीर्घो भवति, सौ चासम्बुद्धौ। दण्डीनि दण्डी। भ्रूणहानि भ्रूणहा। बहुपूषाणि पूषा। बह्वर्यमाणि अर्यमा। सौ चेति किम? दण्डिनौ दण्डिन। वृत्रहणम् पूषणम् अर्यमणम्। असम्बुद्धावित्येव। हे दण्डिन्, हे वृत्रहन्, हे पूषन्, हे अर्यमन्। अस्मादेव नियमादुत्तरमपि न दीर्घत्वम्। भ्रूणहनि। उपान्तदीर्घनियमात् वृत्रहायते।

[इन्हन्पूषार्यम्णा शौ। सौ च। पा० ६।४।१२-१३]

**अज्झनोः सनि झलि** ॥१३॥ [स० ६।३।११]

अजन्तस्य हन्तेश्च सनि झलादौ परतो दीर्घो भवति। चिकीर्षति तुष्टूषति चिचीषति जिघांसति। झलीति किम्? यियविषति। प्रकृतेरित्येव। दधि सनोति।

[(अनुनासिकस्य क्वि-झलो क्ङिति।) अज्झनगमा सनि। पा० ६।४।१६]

**इङो गमः** ॥१४॥ [स० ६।३।१२]

इङादेशस्य गम सनि झलादौ परतो दीर्घो भवति। अधिजिगांसते वेदम्। इङ इति किम्? सजिगंसते।

[गमेर्दीर्घत्व इङ्ग्रहणम्। पा० ६।४।१६।१]

**तनो वा** ॥१५॥ [तनोर्वा। स० ६।३।१३]

तनोते· सनि झलादौ परतो दीर्घो वा भवति। तितांसति तितंसति। झलीत्येव। तितनिषति।

[तनोतेर्विभाषा। पा० ६।४।१७]

**क्रमस्त्वि** ॥१६॥ [क्रम क्त्वि। स० ६।३।१४]

क्रमस्त्वि परतो दीर्घो वा भवति। क्रान्त्वा क्रन्त्वा ' झलीत्येव। क्रमित्वा प्रक्रम्य।

[क्रमश्च क्त्वि। पा० ६।४।१८]

**ञमः किति वौ च ॥१७॥**

ञमन्तस्य वौ किति झलादौ च परतो दीर्घो वा भवति। प्रशान् प्रतान्। शान्त शान्तवान्। ञम इति किम्? ओदनपक्। कितीति किम्? गन्ता। वौ चेति किम्? गम्यते।

[अनुनासिकस्य क्विझलोः क्ङिति। पा० ६।४।१५। अहन्ञमस्तिङ्व्यपिति किति वौ च। स० ६।३।१५]

**ञमि च च्छ्वोः शूठ् ॥१८॥** [०शूठौ। स० ६।३।१६]

ञमि परतो वौ झलादौ च सतुकश्छकारस्य शकारादेशो भवति वकारस्य च ऊठ्। विश्न प्रश्न प्राट्। पृष्ट प्रष्टा प्रष्टुम्। स्योनम् अक्षद्यू दुद्यूषति द्यूत्वा द्यूतम्। कथ द्युभ्या द्युभिरिति। ऊठि कृते दिव उत्[1] [पा० ६।१।१३१] इति तपरत्वान् मात्राकालो भविष्यति। ञमि चेति किम्? देवित्वा। कथ प्रतिदीव्ना? बहिरङ्गस्याल्लोपस्यासिद्धत्वान्न भविष्यति।

[च्छ्वोः शूडनुनासिके च। पा० ६।४।१९। [1]Candra's rule is: दिवोऽन्ते चोत्। ५ 1 135 ]

**ज्वरत्वरावश्रिवुमवां सोपान्तस्य ॥१९॥**

ज्वरादीना वकारस्योपान्तसहितस्य वौ झलादौ च परत ऊठ् भवति। जू जुरौ जूर्ति। तू तुरौ तूर्ति तूर्णवान्। ऊ उवौ ऊति। श्रू श्रुवौ श्रूति। मू मुवौ मूति।

[ज्वरत्वरश्रिव्यविमवामुपधायाश्च। पा० ६।४।२०। श्रिव्यविमविज्वरित्वरामुपधायाश्च। स० ६।३।१७]

**राल्लोपः ॥२२॥** [पा० ६।४।२१, स० ६।३।१८]

रेफात्परयो श्छ्वोर्वौ झलादौ च परतो लोपो भवति। मुर्छा मूः मुरौ मूर्तिः। धुर्वी धूः धुरौ धूर्तिः। वौ चेत्येव। मूर्च्छा।

**प्राग्युवोरवुग्युगसिद्धं समानाश्रये** ॥२१॥ [स० ६।३।१९]

प्राग् युवुसशब्दनाद् [५।४।१] वुका युका च वर्जितं कार्यं समानाश्रये कार्यान्तरे कर्तव्येऽसिद्धं वेदितव्यम्। एधि शाधि। एत्त्वशात्वयोरसिद्धत्वाज्झल्लक्षण धित्वं भवति। जहि। जत्वस्यासिद्धत्वाद्धेर्लुग् न भवति। तत्र तस्य च भावात् समानाश्रयत्वमेतेषाम्। समानाश्रयलक्षणश्चात्र विधि, न व्याश्रयलक्षणप्रतिषेध। प्राग्युवोरिति किम्? अभाजि, रागः। आकारे कर्तव्ये नलोप सिद्ध एव। अवुग्युगिति किम्? बभूवतु। उपदिदीये। वुग्युवो: सिद्धत्वाद् उवयणादेशौ न भवत। समानाश्रय इति किम्? पपुष चिच्युष लुलुवुष। वसोरुद् विभक्त्याश्रयेष्वालोप-यण्-उवादेशेषु कर्तव्येषु नासिद्ध। अस्मादेव वचनाद्बहिरङ्गपरिभाषा नेहाश्रीयते, बहिरङ्गस्य चान्तरङ्गनिमित्तत्वात्।

**[असिद्धवदत्रा भात्। पा० ६।४।२२। समानाश्रयवचनात्सिद्धम्। वुग्-युटावुवङ्यणो। वा० १२,१४]**

**श्नान्नः** ॥२२॥ [स० ६।३।२०]

श्नम. परस्य नकारस्य लोपो भवति। भनक्ति व्यनक्ति। शकार किम्? प्रयत्नानाम्। प्रश्नानामिति लाक्षणिकत्वादनर्थकत्वाच्च न भवति।

**[श्नान्नलोप.। पा० ६।४।२३]**

**हलोऽनिदितः क्ङित्युपान्तस्य** ॥२३॥

हलन्ताया प्रकृतेरनिदित क्ङिति परत उपान्तनकारस्य लोपो भवति। स्रस्त स्रस्यते ध्वस्त ध्वस्यते। सनीस्रस्यते दनीध्वस्यते। हल इति किम्? नीयते। अनिदित इति किम्? नन्द्यते। क्ङितीति किम्? स्रंसिता। उपान्तस्येति किम्? नह्यते।

**[अनिदिता हल उपधाया क्ङिति। पा० ६।४।२४। हलोऽनिदितः क्ङित्युपधाया.। स० ६।३।२१]**

**शित्यपिति** ॥२४॥ [स० ६।३।२२]

शित्यपिति परतोऽनिदित उपान्तनकारस्य लोपो भवति। **दम्नोति** **मथ्नाति** श्रथ्नाति ग्रथ्नाति। अपितीति किम्? स्रसते ध्वंसते। **अनिदित** इत्येव। शिञ्जान।

**[सार्वधातुकमपित्। पा० १।२।४]**

**लिटीन्धिश्रन्थग्रन्थाम्** ॥२५॥

लिटि परत इन्धादीना नलोपो भवति। समीधे श्रेथतु **श्रेथु**। ग्रेथतु ग्रेथु। एषामिति किम्? सस्रसे। अपितीत्येव। शश्रन्थ।

**[इन्धिभवतिभ्या च। पा० १।२।६। श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्। काशिका। श्रन्थिग्रन्थिष्वञ्जीन्धीना लिटि। स० ६।३।२३]**

**दम्भः स्सनि च** ॥२६॥

दम्भे सकारादौ सनि लिटि चापिति परतो नलोपो **भवति।** धिप्सनि देभतु देभु। द्विसकारनिर्देश किम्? दिदम्भिषति।

**[दम्भे सि सनि च। स० ६।३।२४]**

**स्वञ्जः** ॥२७॥

स्वञ्जेर्लिटि परतो नलोपो भवति। परिषस्वजे। **सदिस्वञ्जेर्लिटि** [६।४।९८] इति षत्वप्रतिषेध।

**[श्रन्थिग्रन्थिषञ्जीन्धीना लिटि। स० ६।३।२३]**

**शपि दंशस्वञ्जेश्च** ॥२८॥

शपि परतो दशे सञ्जे स्वञ्जश्च नलोपो भवति। दशति **सजति** **परिष्वजते।**

**[दंशसञ्जस्वञ्जा शपि। पा०६।४।२५, दशिषञ्जिष्वञ्जा शपि। स०६।३।२५]**

**रञ्जः** ॥२९॥ [रञ्जेश्च। पा० ६।४।२६]

रञ्ज शपि परतो नलोपो भवति। रजति। कथ रजनम् **रजतम्**

रज इति? औणादिका एते। तथाहि रञ्जेः क्युन् [उ० द० ५।२४] भूषिरञ्जिभ्यां कित् [उ० द० ६।१५] इत्यनच्, उषिरञ्जिभ्यां कित्[1] [उ० द० ९।७६] इत्यसुन्।

[ [1]There is a difference of reading regarding the first syllable. Printed Daśapādī reads *bhū*, Haradatta reads *śr*, Kaiyata *pū* ]

**णौ मृगरमणे** ॥३०॥ [स० ६।३।२७]

णौ परतो मृगरमणे गम्यमाने रञ्जेर्नलोपो भवति। रजयति मृगान्। अत्र मित्त्वाद्ध्रस्वत्वम्। मृगरमण इति किम्? रञ्जयति वस्त्राणि। कथं रागी? इनिना सिद्धम्।

[ रञ्जेर्णौ मृगरमणे। पा० ६।४।२४।३। घिनुणि चोपसंख्यानं कर्तव्यम्। रागी। भाष्यम्। घिनुणि निपातनात्सिद्धम्। रजकरजनरज:सु कित्वात् सिद्धम्। पा० ६।४।२४।४-५। कित एवैत औणादिका। भाष्यम्। २९-३० रञ्जे ष्वुन्-घिनुणल्युडसुन्नणिषु च। स० ६।३।२६ ]

**घञि भावकरणयोः** ॥३१॥ [स० ६।३।२८। घञि च०। पा० ६।४।२७]

भावकरणयोर्यो घञ् तस्मिन् परतो रञ्जेर्नलोपो भवति। रञ्जनम्। रजत्यनेनेति रागः। भावकरणयोरिति किम्? [1]रजन्त्यस्मिन्निति रङ्गः।

[ [1]रजन्ति तस्मिन्निति Mss ]

**स्यदो जवे** ॥३२॥ [पा० ६।४।२८, स० ६।३।२९]

स्यद इति स्यन्देर्घञि निपात्यते जवेऽभिधेये। अन्यत्र तैलस्यन्द।

**अवोदैधौद्मप्रश्रथहिमश्रथाः** ॥ ३३ ॥ [पा० ६।४।२९, स० ६।३।३०]

अवोद इत्युन्देर्घञि निपात्यते, एध इतीन्धे, ओद्मेत्युन्देर्मनिनि, प्रश्रथ श्रन्थेः प्रपूर्वस्य घञि, हिमश्रथ इति हिमपूर्वस्य।

**लङ्गिकम्प्योरुपतापशरीरविकारयोः** ॥३४॥ [स० ६।३।३१]

लङ्गे कम्पेश्चोपतापे शरीरविकारे चार्थे नलोपो भवति। विलगितः विकपित। अन्यत्र विलङ्गित विकम्पित। वृहेरच्यनिटि [पा० ६।४।२४।२] इति न वाच्यम्। निवर्हति निबर्हक इति वृहिणा सिद्धम्। हलादाविटि च दृश्यते निवृह्यते निवर्हिता। वृंहेस्तु निवृहति निवृंहक निवृंह्यते निवृंहिता।

[ अनिदिता नलोपे लङ्गिकम्प्योरुपतापशरीरविकारयोरुपसंख्यानम्। वृहेरच्यनिटि। पा० ६।४।२४।१-२ ]

**तनाद्यनिट्वनां ल्यपि ञमः** ॥३५॥

तनादीनामनिटा वनश्च ल्यपि परतो ञमो लोपो भवति। प्रतत्य प्रकृत्य। प्रहत्य प्रमत्य। प्रवत्य। एषामिति किम्? प्रशस्य। ल्यपीति किम्? यम्यते रम्यते।

[ (अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति।) वा ल्यपि। पा० ६।४।३८। अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि च। पा० ६।४।३७।१। व्यवस्थितविभाषा चेयम्। तेन मकारान्ताना विकल्पो भवति, अन्यत्र नित्यमेव लोप.। काशिका। वनतितनाद्यनिटा ल्यपि ञम। स० ६।३।३२ ]

**मो वा** ॥३६॥ [स० ६।३।३३]

तनाद्यनिट्वना ल्यपि परतो मकारस्य लोपो वा भवति। प्रयत्य प्रयम्य। विरत्य विरम्य। प्रणत्य प्रणम्य। आगत्य आगम्य।

[ वाम। पा० ६।४।३७।२ ]

**झलि तिङयपिति** ॥३७॥ [स० ६।३।३४]

तिङयपिति झलादौ परतस्तनाद्यनिट्वना ञमो लोपो भवति। हत हथः। झलीति किम्? घ्नन्ति। तिङीति किम्? हन्ता। अपितीति किम्? हन्ति।

[ अनुदात्तोपदेश०। पा० ६।४।३७। सार्वधातुकमपित्। पा० १।२।४ ]

**क्ङिति** ॥३८॥ [स० ६।३।३५]

किति ङिति झलादौ परतस्तनाद्यनिट्त्वनां ञमो लोपो भवति। ततः ततवान्। क्षतः क्षतवान्। यतः यतवान्। रतः रतवान्। वक्ति क्तिनि, क्तिचि प्रतिषेधं वक्ष्यति [५१][1]। अन्यत्र चेटा भवितव्यम्। झलीत्येव। हन्यते, गम्यते। तनाद्यनिट्त्वनामित्येव। शान्तः शान्तवान्। दान्तः दान्तवान्। ञम इत्येव। पक्वः।

[ अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति। पा० ६।४।३७। [1](43) L.]

**जनसनखनामात्** ॥३९॥ [स० ६।३।३६]

जनादीनां झलि क्ङिति परतो ञम आद्भवति। जातः जातवान्। सातः सातवान्। खातः खातवान्। क्ङितीत्येव। जन्तुः। झलीत्येव। जनित्वा।

**सनि** ॥४०॥ [स० ६।३।३७]

जनादीनां सनि झलादौ परतो ञम आद्भवति। सिषासति। जनखनोरिटा भवितव्यम्। झलीत्येव। सिसनिषति।

[ ३९-४०। जनसनखनां सञ्झलोः। पा० ६।४।४२ ]

**ये वा** ॥४१॥ [स० ६।३।३८]

ये क्ङिति परतो जनादीनामात्त्वं वा भवति। जायते जन्यते, जाजायते जञ्जन्यते। सायते सन्यते, सासायते संसन्यते। खायते खन्यते, चाखायते चङ्खन्यते।

[ ये विभाषा। पा० ६।४।४३ ]

**तनो यकि** ॥४२॥ [तनोतेर्यकि। पा० ६।४।४४, स० ६।३।३९]

तनोतेर्यकि परत आत्त्वं वा भवति। तायते तन्यते।

**सनः क्तिचि लोपश्च** ॥४३॥ [स० ६।३।४०]

सन क्तिचि परतो लोप आत्त्व च वा भवति। सति सातिः सन्ति।

[सन क्तिचि लोपश्चास्यान्यतरस्याम्। पा० ६।४।४५]

**लिङि तङि गमः** ॥४४॥

लिङि तङ्भूते परतो गमेर्लोपो वा भवति। सगसीष्ट सगसीष्ट। लिङीति किम्? सजग्मे। तङीति किम्? गम्यात्।

[(लिङ्सिचावात्मनेपदेषु।) वा गम। पा०१।२।१३। गमेर्लिङ्यात्मनेपदे। स० ६।३।४१]

**सिचि** ॥४५॥ [सिचि च। स० ६।३।४२]

सिचि तङ्परे परतो गमेर्लोपो वा भवति। समगत। समगंस्त।

**हनः** ॥४६॥

हन्ते सिचि परतो लोपो भवति नित्य योगविभागात्। आहत आहसाताम्।

[हन सिच्। पा० १।२।१४। हनो नित्यम्। स० ६।३।४३]

**यमः सूचने** ॥४७॥ [स० ६।३।४४]

यमे सूचने वर्तमानस्य सिचि तङ्परे परतो लोपो भवति। उदायत उदायसाताम्। सूचन इति किम्? आयस्त पादम्। झलि तिङयपित्यपि न भवति, सिचा व्यवधानात्। तङीत्येव। अयसीत्।

[यमो गन्धने। पा० १।२।१५]

**वोद्वाहे** ॥४८॥ [स० ६।३।४५]

उद्वाहे वर्तमानस्य यमे सिचि तङ्परे परतो लोपो वा भवति। उपायत कन्याम्, उपायम्न कन्याम्।

[विभाषोपयमने। पा० १।२।१६]

**गमादीनां क्वौ** ॥४९॥

गमादीना क्वौ परतो लोपो भवति। जनगत् संयत् परीतत्। कथम् अग्रेगू। औणादिको हूर्भविष्यति।

[गम. क्वौ। पा० ६।४।४०। गमादीनामिति वक्तव्यम्। इहापि यथा स्यात्। परीतत्सहकण्ठिका। संयत्। सुनदिति। ऊङ् च गमादीनामिति वक्तव्यम्। अग्रेगू.। भ्रू। भाष्यम्। गमयमतनमनादीना क्वौ। गमेरू च। स० ६।३।४६-७। Candra's rule is अग्रेई Un 1 42 The *Pañcapādī* rule is अग्रेश्च डू on which Ujjvaladatta says चकाराद् गमेरपि डू। अग्रे गच्छतीत्यग्रेगू सेवक। The *Daśapādī* 1. 177 and its commentator hold the same view ]

**नाञ्चः पूजायाम्** ॥५०॥ [नाञ्चे। पा० ६।४।३०, स० ६।३।४८]

अञ्चते पूजाया गम्यमानाया नलोपो न भवति। अञ्चितमिव शिरो वहति। पूजायामिति किम्? उदक्तमुदक कूपात्।

**क्तिचि दीर्घश्च** ॥५१॥ [स० ६।३।४९]

क्तिचि परतो नलोपो दीर्घश्च न भवति। तन्ति रन्ति वन्ति। क्तिच. सञ्ज्ञाया[1] वचनात् [पा० ३।३।१७४] [2]संक्त्यादीनामप्रयोग। कथं सक्तिर्भक्तिरिति? क्तिना सिद्धम्। दीर्घसम्भवे वा लोपप्रतिषेध।

[न क्तिचि दीर्घश्च। पा० ६।४।३९। [1]Candra's rule is नाम्नि क्तिच् 1 3 77 [2]सञ्ज्ञादीनाम् Ms सञ्ज्ञादीनाम् L ]

**क्त्वि स्कन्दस्यन्दोः** ॥५२॥ [स० ६।३।५०। ०स्कन्दि० पा० ६।४।३१]

क्त्वि परत स्कन्द स्यन्देश्च नलोपो न भवति। स्कन्त्वा स्यन्त्वा।

**सेटि** ॥५३॥ [स० ६।३।५१]

सेटि क्त्वि परतो नलोपो न भवति। स्रसित्वा ध्वंसित्वा स्यन्दित्वा।

[न क्त्वा सेट्। पा० १।२।१८]

**वञ्चिलुञ्चिथफो वा** ॥५४॥

'वञ्चेर्लुञ्चेस्थान्ताना फान्ताना च सेटि परतो नलोपो वा न भवति। वञ्चित्वा वचित्वा। लुञ्चित्वा लुचित्वा। श्रन्थित्वा श्रथित्वा। ग्रन्थित्वा ग्रथित्वा। गुम्फित्वा गुफित्वा।

[ नोपधात्थफान्ताद्वा। वञ्चिलुञ्च्यृतश्च। पा० १।२।२३-२४। थफान्तवञ्चिलुञ्चीना वा। स० ६।३।५२। 'वञ्चिलुञ्चे L ]

**जनशः** ॥५५॥

जान्ताना नशेश्च क्त्वि परतो नलोपो वा भवति। भङ्क्त्वा भक्त्वा। नष्ट्वा नष्ट्वा। योगविभागोऽनिडर्थ ।

[ जान्तनशा विभाषा। पा० ६।४।३२, जान्तनशामनिटि। स० ६।३।५३ ]

**भञ्जेश्चिणि** ॥५६॥ [स०६।३।५४, भञ्जेश्च०। पा०६।४।३३]

भञ्जेश्चिणि परतो नलोपो वा भवति। अभाजि अभञ्जि।

**शासः क्ङिति शिस्** ॥५७॥

शास क्ङिति परत· शिसादेशो भवति। शिष्ट अन्वशिषत्। शेशिष्यते। मित्रशी·। आशी। क्ङितीति किम्? शास्ता।

[ शास इदङ्हलो। पा०६।४।३४। क्वावाशास इदुपधाया। शास· क्ङिति। स० ६।३।५५-५६ ]

**तिङि हल्यपिति** ॥५८॥ [स० ६।३।५७]

तिङि हलादावपिति परत शास शिसादेशो भवति। तौ शिष्टः, वय शिष्म·। तिङीति किम्? शास्त्रम्। हलीति किम्? शशासतुः। अपितीति किम्? शास्ति।

[ सार्वधातुकमपित्। पा० १।२।४ ]

**शा हौ** ॥५९॥ [पा० ६।४।३५, स० ६।३।५८]

शासो हौ परत· शादेशो भवति। शाधि।

**हनो जः** ॥६०॥ [स० ६।३।५९। हन्तेर्ज । पा० ६।४।३६]

हन्तेर्हौं परतो जादेशो भवति। जहि।

**लिडाशीर्लिङतिङ्शिति** ॥६१॥

लिड्याशीर्लिङयतिङ्शिति चैतदधिकृतं वेदितव्यम्।

[आर्धधातुके। पा० ६।४।४६, स० ६।३।६०। Candra is debarred by his vow from using technical terms, but is not लिट् a technical term ?]

**भ्रस्जो भर्ज् वा** ॥६२॥

भ्रस्जेर्लिडादिषु भर्जादेशो वा भवति। बभर्ज बभ्रज्ज। भर्क्षीष्ट भ्रक्षीष्ट। भर्ष्टा भ्रष्टा। कथ भृज्ज्यात् भृष्ट बरीभृज्ज्यत इति ? व्यवस्थित-विभाषया, भ्रस्ज इति रूपाश्रयणाद् वा। पूर्वं च यण इक् पूर्वविप्रतिषेधात्।

[भ्रस्जो रोपधयो रमन्यतरस्याम्। पा० ६।४।४७। अकृङिति (?) भ्रस्जो भर्ज वा। स० ६।३।६१]

**लोपोऽतः** ॥६३॥ [स० ६।३।६२, अतो लोप । पा० ६।४।४८]

अदन्ताया प्रकृतेर्लिडादिषु परतो लोपो भवति। चिकीर्षाञ्चकार लोलूयाञ्चक्रे। चिकीर्ष्यात् चिकीर्षिता। लोपविधेर्बलवत्त्वादाकारो न भवति। चिकीर्षक चिकीर्ष्यते। लिडादिष्वित्येव। चिकीर्षति।

[ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घत्वेभ्य पूर्वविप्रतिषिद्धम्। पा० ६।४।४८।१]

**यकि** ॥६४॥ [स० ६।३।६३]

यकि परत प्रकृतेरतो लोपो भवति। कुसुम्यति। मगध्यति। ककार किम् ? श्येनायते।

[प्रातिपदिकप्रत्ययत्वादार्धधातुकत्वं नास्तीति वचनम्। हृदयहारिणी।]

**यस्य हलः** ॥६५॥ [पा० ६।४।४९, स० ६।३।६४]

हल परस्य यस्य लिडादिषु लोपो भवति। बेभिदाञ्चक्रे बेभि-

दिषीष्ट बेभिदिता। अकार किम्? ईर्ष्यिता मध्यिता। हल इति किम्? लोलूयिता। अथवा हलन्ताया प्रकृतेर्विहितस्य लोपो भवति। हलन्ताया इति किम्? ईर्ष्यिना मध्यिता। क पुनरनयो सूत्रार्थयोर्विशेष? यदा पूर्वस्तदा सोसूत्रिता शाशयितेति भवितव्यम्। यदापरस्तदा सोसूत्र्यिता शाशय्यितेति भवितव्यम्। लिडादिष्वित्येव। बेभिद्यते।

**क्यस्य वा** ॥६६॥ [स० ६।३।६५]

हल परस्य क्यस्य लिडादिषु लोपो वा भवति। समिधाञ्चकार समिध्याञ्चकार। दृषदाञ्चक्रे दृषद्याञ्चक्रे। समिधिषिष्ट समिध्यिषिष्ट। समिधिता समिध्यिता। हल इत्येव। पटीयिता पटायिता। केचिद्यकोऽपि वा लोपमिच्छन्ति। भिषज्यिता भिषजिता। तदनर्थक क्यचा क्यङा वा सिद्धत्वात्।

**[क्यस्य विभाषा। पा० ६।४।५०। समिधमात्मन इच्छति समिधमिवाचरतीति वा क्यच्क्यङौ यथायोग कर्तव्यौ। काशिका।]**

**णेरनिटि** ॥६७॥ [पा० ६।४।५१, स० ६।३।६६]

अनिटि लिडादौ परतो णेर्लोपो भवति। इय्-यण्-अदेङ्-आदैज्-दीर्घाणामपवाद। अततक्षत् आटिटत् कारणा कारक कार्यते। अनिटीति किम्? कारयिता। लिडादिष्वित्येव। कारयति।

**ततवतीटि** ॥६८॥

क्तक्तवतोरिडाद्यो परतो णेर्लोपो भवति। कारितम् कारितवान्। हारितम् हारितवान्। इटीति किम्? इटि कृते णिलोपो यथा स्यात्। अन्यथा हि लोपे कृते एकाच [५।४।१३०] इतीड् न भवति। संज्ञपित पशु। इड्ग्रहणसामर्थ्यात् पूर्वेणापि न भवति। सनीवन्तर्ध० [५।४।११९] इत्यादिना विकल्पित इट्, यतोऽपते र्वा [५।४।१४०] इति प्रतिषेध।

**[निष्ठाया सेटि। पा० ६।४।५२, स० ६।३।६७]**

**अयामन्ताल्वाय्येत्नुषु** ॥६९॥ [स० ६।३।६८]

आमादिषु परतो णेरयादेशो भवति। कारयाञ्चकार गडयन्त स्पृहयालु स्पृहयाय्य स्तनयित्नु ।

[ अयामन्ताल्वाय्येत्न्विष्णुषु । पा० ६।४।५५ ]

**ल्यपि लघोः** ॥७०॥

ल्यपि परतो लघो परस्य णेरयादेशो भवति। प्रगमय्य गत । प्रबेभिदय्य गत । प्रगणय्य गत । वचनसामर्थ्याद्व्यवधानमाश्रीयते। यलोपाल्लोपयोर्व्याश्रयत्वादसिद्धत्व नास्ति। णौ यलोपाल्लोपौ, ल्यपि णेरयादेश । लघोरिति किम्? प्रतिपाद्य गत ।

[ ल्यपि लघुपूर्वात् । पा० ६।४।५६, स० ६।३।६९ ]

**आपो वा** ॥७१॥ [स० ६।३।७०]

आप परस्य णेर्ल्यपि परतोऽयादेशो वा भवति। प्रापय्य गत, प्राप्य गत । अध्याप्येति लाक्षणिकत्वान्न भवति।

[ विभाषाप । पा० ६।४।५७ ]

**क्षेः क्षीः** [०क्षी। स० ६।३।७१]

क्षेर्ल्यपि परत क्षीभावो भवति। प्रक्षीय। उपक्षीय।

[ ( युप्लुवोर्दीर्घश्छन्दसि । ) क्षिय । पा० ६।४।५९ ]

**उपदेशेऽज्झनग्रहदृग्भ्यः स्यसिच्सीयुट्तासां भावाप्ययोश्चिण्वदिड् वा** ॥७३॥

उपदेशेऽजन्तेभ्यो हनादिभ्यश्च परेषा स्यादीना भावाप्यविषये चिण्वदिडागमो वा भवति। चायिष्यते चेष्यते। दायिष्यते दास्यते। शमिष्यते शामिष्यते शमयिष्यते। घानिष्यते हनिष्यते। ग्राहिष्यते ग्रहीष्यते। दर्शिष्यते द्रक्ष्यते। अचायिषाताम् अचेषाताम्। अदायिषाताम् अदिषाताम्। अशमिषाताम् अशामिषाताम् अशमयिषाताम्। अघानिषाताम् अवधि-

षाताम्। अग्राहिषाताम् अग्रहीषाताम्। अदर्शिषाताम् अदृक्षाताम्। चायिषीष्ट चेषीष्ट। दायिषीष्ट दासीष्ट। शमिषीष्ट शामिषीट शमयिषीष्ट। घानिषीष्ट वधिषीष्ट। ग्राहिषीष्ट ग्रहीषीष्ट। दर्शिषीष्ट दृक्षीष्ट। चायिता चेता। दायिता दाता। शमिता शामिता शमयिता। घानिता हन्ता। ग्राहिता ग्रहीता। दर्शिता द्रष्टा। उपदेश इति किम्? कारिष्यते। अज्झनग्रहदृग्म्य इति किम्? पठिष्यते। स्यसिच्सीयुटतासामिति किम्? चेतव्यम्। भावाप्ययोरिति किम्? चेष्यति। चिण्वद्भावाच्चिणाश्रयं कार्यं भवति, लुङाश्रयं न भवति। अतो हनिणिङामादेशा न भवन्ति। अघानिषाताम् आयिषाताम् अध्यायिषाताम्।

**[स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च। पा० ६।४।६२। उपदेशेऽज्झनग्रहदृश स्यसिच्सीयुट्तासीना भावकर्मकर्तृषु चिण्वदिड् वा। स० ६।३।७२]**

**दीङो लिटि युक्** ॥७४॥ [स० ६।३।७३]

दीङो लिटि परतो युगागमो भवति। उपदिदीये उपदिदीयते। लिटीति किम्? उपदेदीयते।

**[दीङो युडचि क्ङिति। पा० ६।४।६३]**

**लोपोऽचि क्ङिति चातः** ॥७५॥ [स० ६।३।७४]

अजादौ लिटि क्ङिति परत आदन्तायाः प्रकृतेर्लोपो भवति। गोद कम्बलद। सस्था अवस्था। ययौ ययतु ययु ययिथ। अचीति किम्? दीयते। क्ङितीति किम्? दानम्।

**[आतो लोप इटि च। पा० ६।४।६४]**

**ईद्यति** ॥७६॥ [पा० ६।४।६५, स० ६।३।७५]

यति परत आत ईदादेशो भवति। ग्लेयम् म्लेयम् देयम् धेयम् हेयम्।

**मास्थासागापिबहाग्दाधां हलि** ॥७७॥ [स० ६।३।७६]

मादीना हलि क्ङिति परत ईद् भवति। मीयते मेमीयते। स्थीयते तेष्ठीयते। अवसीयने अवसेसीयते। गीयते जेगीयते। पीयते पेपीयते। हीयते जेहीयने। दीयने देदीयते। धीयते देधीयते। पिबेति किम्? पायते। ककार किम्? हायने। हलीति किम्? गोद। क्ङितीत्येव। दाता।

[घुमास्थागापाजहातिसा हलि। पा० ६।४।६६]

**लिङ्येत्** ॥७८॥ [स० ६।३।७७]

लिङि परतो मादीनामेद् भवति। मेयात। स्थेयात्। अवसेयात। गेयात्। पेयात्। हेयात्। देयात्। वेयात। क्ङितीत्येव। दासीष्ट।

[एर्लिङि। पा० ६।४।६७]

**वा संयोगादेरस्थः** ॥७९॥ [स० ६।३।७८]

संयोगादेराकारान्ताया प्रकृते स्थावर्जिताया लिङ्येद् वा भवति। ग्लेयात् ग्लायात्। म्लेयात् म्लायात्। सयोगादेरिति किम्? यायात्। अस्थ इति किम्? स्थेयात्। क्ङितीत्येव। ग्लासिष्ट। आशीर्लिङीत्येव। म्लायेत। प्रकृतेरित्येव। निर्यायात्।

[वान्यस्य संयोगादे। पा० ६।४।६८]

**न ल्यपि** ॥८०॥ [पा० ६।४।६९, स० ६।३।७९]

ल्यपि परतो मादीना यदुक्त तन्न भवति। प्रमाय प्रस्थाय। अवसाय। प्रगाय। प्रपाय। प्रहाय। प्रदाय। प्रधाय।

**मेङ इद्वा** ॥८१॥ [स० ६।३।८०]

मेङो ल्यपि परत इदादेशो वा भवति। अपमित्य अपमाय।

[मयतेरिदन्यतरस्याम्। पा० ६।४।७०]

**लुङ्लङ्लृङ्क्ष्वडमाङ्योगे** ॥८२॥ [स० ६।३।८१]

लुङादिषु परत प्रकृतेरडागमो भवति, न चेन्माङ्योगो भवति।

अकार्षीत् अकरोत् अकरिष्यत्। अमाङ्योग इति किम्? मा भवान् कार्षीत्। मास्म करोत्। प्रकृतेरित्येव। प्राकरोत्।

[लुङ्लङ्लृङ्क्ष्वडुदात्त। न माङ्योगे। पा० ६।४।७१,७४]

**अचि श्नुधातुभ्रुवां य्वोरियुवौ** ॥८३॥ [स० ६।३।८२, ०य्वोरियङुवङौ। पा० ६।४।७७]

अचि परत इवर्णोवर्णयोरियुवौ भवत, तौ चेच् श्नुधातुभ्रू-सम्बन्धिनौ भवत। आप्नुवन्ति। चिक्षियतु चिक्षियु। लुलुवतु· लुलुवु। श्रियौ श्रिय। भ्रुवौ भ्रुव। अचीति किम्? प्राप्नुयात्। श्नुधातु-भ्रुवामिति किम्? लक्ष्म्यौ लक्ष्म्य। य्वोरिति किम्? चक्रतु चक्रु। प्रकृतेरित्येव। श्र्यर्थ।

**द्वित्वे पूर्वस्यासमे** ॥८४॥

द्विर्वचने सति पूर्वस्यातुल्येऽचीवर्णोवर्णयोरियुवौ भवत। **इयेष** उवोष इयर्ति। असम इति किम्? ईजतु ईजु। ऊषतु· ऊषु। **अचीत्येव।** इयाज उवाच[1]।

[अभ्यासस्यासवर्णे। पा० ६।४।७८, स० ६।३।८३। [1]The correct reading would appear to be उवास.]

**स्त्रियाः** ॥८५॥ [पा० ६।४।७९, स० ६।३।८४]

स्त्रिया इवर्णस्याचि परत इयादेशो भवति। स्त्रियौ स्त्रिय·। अचीत्येव। स्त्रीभि।

**वामूशसोः** ॥८६॥ [पा० ६।४।८०, स० ६।३।८५]

स्त्रिया इवर्णस्यामि शसि च परत इयादेशो वा भवति। **स्त्रियम्** स्त्रीम्, स्त्रिय स्त्री।

**इणो यण्** ॥८७॥ [पा० ६।४।८१, स० ६।३।८६]

इण. प्रकृतेरचि परतो यणादेशो भवति। यन्ति यन्तु। इयोऽपवादः।

**एरसंयोगादनेकाचः** ॥८८॥ [०योगादेर० । स० ६।३।८७]

असयोगात्परो य इवर्णस्तदन्ताया प्रकृतेरनेकाचोऽचि परतो यणादेशो भवति। निन्यतु निन्यु । एरिति किम्? लुलुवतु लुलुवु । असयोगादिति किम्? चिक्रियतु चिक्रियु । अनेकाच इति किम्? अधीयाते ।

[एरनेकाचोऽसंयोगपूर्वस्य । पा० ६।४।८२ ]

**कारकासंख्यादोश्च सुप्यसुधियः** ॥८९॥

कारकादसख्याच्च परस्या प्रकृतेरिवर्णान्ताया उवर्णान्तायाश्च सुधी-वर्जिताया सुप्यजादौ परतो यण् भवति, न चेत्संयोगात्पराविवर्णोवर्णौ भवत । ग्रामण्यो ग्रामण्य । उन्न्यौ उन्न्य । खलप्वौ खलप्व । सकृल्ल्वौ सकृल्ल्व । कारकासख्यादिति किम्? परमनियौ परमनिय । परमलुवौ परमलुव । नियौ निय । लुवौ लुव । सुपीति किम्? उपलुलुवु । असुधिय इति किम्? सुधियौ सुधिय । असंयोगादित्येव। यवक्रियौ यवक्रिय । कटप्रुवौ कटप्रुव ।

[ओ सुपि। न भूसुधियो । पा० ६।४।८३,८५। ओश्च गतिकारकादेः सुप्यसुधिय । स० ६।३।८८। गतिकारकपूर्वस्येष्यते। भाष्यम् ६।४।८२। चान्द्रे तु कारकासख्याभ्यामविशेषेणेष्यते। कातन्त्रपरिशिष्टम् २।४२ ]

**वर्षादृन्पुनःकाराद् भुवः** ॥९०॥ [०कारेभ्यो० । स०६।३।८९]

वर्षादिभ्य एव परस्य भुव सुप्यजादौ परतो यण् भवति। वर्षाभ्वौ वर्षाभ्व । दृन्भ्वौ दृन्भ्व । पुनर्भ्वौ पुनर्भ्व । कारभ्वौ कारभ्व । वर्षादिभ्य इति किम्। आत्मभुवौ आत्मभुव । प्रतिभुवौ प्रतिभुव ।

[ वर्षाभ्वश्च । पा० ६।४।८४ । वर्षापुनर्भ्वश्च । वा० १ । अत्यल्पमिदमुच्यते । वर्षादृन्कारपुन पूर्वस्येति वक्तव्यम् । भाष्यम् । ]

**हुश्नुवोरलिटि** ॥९१॥ [स० ६।३।९०]

हुश्नु इत्येतयोर्लिड्वर्जितेऽजादौ परतो यण् भवति। जुह्वति जुह्वतु जुह्वत्। सुन्वन्ति चिन्वन्ति। हुश्नुवोरिति किम्? युवन्ति रुवन्ति ।

अलिटीति किम् ? जुहुवतु जुहुवु । असयोगादित्येव । आप्नुवन्ति राध्नुवन्ति ।

[ हुश्नुवो सार्वधातुके । पा० ६।४।८७ ]

**भुवो वुग्लुङ्लिटोः** ॥९२॥ [पा० ६।४।८८, स० ६।३।९१]

भवतेर्लुङि लिटि चाजादौ परतो वुगागमो भवति । अभूवन् बभूव बभूवतु बभूवु ।

**ऊद् गोहोऽचः** ॥९३॥ [स० ६।३।९२]

गोहेरजादौ परतोऽच ऊदादेशो भवति । निगूहयति निगूहक । ओकारनिर्देश किम् ? निजुगुहतु निजुगुहु । अच इति किम् ? अन्त्यस्य मा भूत् । अचीत्येव । निगोढा ।

[ ऊदुपधाया गोह । पा० ६।४।८९ ]

**दुषो णौ** ॥९४॥ [स० ६।३।९३ । दोषो० । पा० ६।४।९०]

दुषो णौ परतोऽच ऊदादेशो भवति । दूषयति । णाविति किम् ? दोष ।

**वा चित्ते** ॥९५॥ [स० ६।३।९४]

चित्तविषयस्य दुषो णावच ऊदादेशो वा भवति । दूषयति चित्तम्, दोषयति चित्तम् । चित्तग्रहणेनैव [1]चैतसिकस्यापि ग्रहणात्, प्रज्ञा दोषयति, प्रज्ञा दूषयति ।

[ वा चित्तविरागे । पा० ६।४।९१ । [1]चैतसिक is an analogical formation like मानसिक ]

**गमजनखनघसां ले लोपोऽपिति** ॥९६॥ [स० ६।३।९५]

गमादीना लादेशेऽजादावपिति परतोऽचो लोपो भवति । जग्मतुः जग्मु जग्मिवान् । जज्ञतु जज्ञु. जज्ञे जज्ञाते जज्ञिरे । चख्नतु चख्नु. ।

जक्षतु जक्षु· जक्षिवान्। ल इति किम्? अगमत्। अपिनीति किम्? जगाम।

[ ९८-९९। गमहनजनखनघसा लोप क्ङित्यनङि। पा० ६।४।९८ ]

**किति च हनः** ॥९७॥ [ स० ६।३।९६ ]

किति लादेशे पिति चाजादौ परतो हन्तेरचो लोपो भवति। जायाघ्नः निघ्न. विघ्न। जघ्नतु जघ्नु जघ्निवान्। अचीत्येव। हत हथ।

**हुझलोऽनिटो हेर्धिः** ॥९८॥ [हुझल्भ्यो० । स० ६।३।९७]

जुहोतेर्झलन्तायाश्च प्रकृते परस्यानिटो हेर्धिभावो भवति। जुहुधि भिन्धि छिन्धि। हुझल इति किम्? क्रीणीहि। अनिट इति किम्? रुदिहि स्वपिहि। हेरिति किम्? जुहोतु। जुहुतात् भिन्तादित्यन्तरङ्ग-त्वात्तातङ्। तस्य पुनर्न धिभावो हेरिति रूपस्याश्रयणात्।

[ हुझल्भ्यो हेर्धि। पा० ६।४।१०१। हेर्धित्वे हलधिकारादिटोऽप्रतिषेध.। वा० १ ]

**अतो लुक्** ॥९९॥ [स० ६।३।९८]

अत परस्य हेर्लुग् भवति। पच पठ। अत इति किम्? एहि। तपर· किम्? याहि।

[ ( चिणो लुक्। ) अतो हे। पा० ६।४।१०५ ]

**उतोऽसंयोगादधातोः** ॥१००॥

असंयोगात्परो य उकारस्तस्मादधातो परस्य हेर्लुग् भवति। कुरु चिनु। उत इति किम्? लुनीहि पुनीहि। असयोगादिति किम्। आप्नुहि शक्नुहि। अधातोरिति किम्? युहि रुहि।

[ उतश्च प्रत्ययादसंयोगपूर्वात्। पा० ६।४।१०६। उतोऽसंयोगपूर्वादधातो·। स० ६।३।९९ ]

**वास्य म्वोः** ॥१०१॥

वकारमकारयो परतोऽस्येत्युतोऽसंयोगादधातो परस्य लुग् वा

भवति। तन्व तनुव, तन्म तनुम। सुन्व सुनुव, सुन्म· सुनुम.। असयोगादित्येव। शक्नुव शक्नुम। अधातोरित्येव। युव युम.।

[लोपश्चास्यान्यतरस्या म्वो। पा० ६।४।१०६। वा चास्य म्वोर्लोप·। स० ६।३।१००]

**कृञो ये च ॥१०२॥**

करोते परस्योतो ये म्योश्च परतो लुग् भवति। कुर्यात् कुर्याताम्। कुर्व· कुर्म·।

[नित्य करोते। ये च। पा० ६।४।१०८-१०९। नित्यं करोतेर्ये च। स० ६।३।१०१]

**अत उत् तत्रापिति ॥१०३॥** [स० ६।३।१०२]

करोतेरुति परतोऽत उद्भवति, पित्परे तु न भवति। कुरुतः कुर्वन्ति कुर्वन्। उदिति तपरत्वमदेङ्निवृत्त्यर्थम्। तत्रेति किम्? कर्ता। अपितीति किम्? करोति करोषि। ये चेत्येव। कुर्यात्। कुर्व कुर्म इत्युकारलोपस्यासिद्धत्वादुत्त्वं भवति।

[अत उत्सार्वधातुके। पा० ६।४।११०]

**श्नसोर्लोपः ॥१०४॥**

श्नमोऽस्तेश्चापिति परतोऽतो लोपो भवति। रुन्द्ध रुन्धन्ति। स्तः सन्ति। अपितीत्येव। रुणद्धि अस्ति।

[श्नसोरल्लोप·। पा० ६।४।१११। श्नमसोर्लोप। स० ६।३।१०३]

**श्नाद्विरुक्तयोरातः ॥१०५॥**

श्नो द्विरुक्तायाश्च प्रकृतेराकारस्यापिति परतो लोपो भवति। लुनते लुनताम्। पुनते पुनताम्। मिमते मिमताम्। सञ्जिहते सञ्जिहताम्। श्नाद्विरुक्तयोरिति किम्? यान्ति वान्ति। आत इति किम्? बिभ्रति। अपितीत्येव। अलुनाम् अजहाम्।

[श्नाभ्यस्तयोरात.। पा० ६।४।११२, स० ६।३।१०४]

**ई हलि तिङ्यदाघः** ॥१०६॥ [स० ६।३।१०५]

श्नो द्विरुक्तायाश्च प्रकृतेर्दाधावर्जिताया आकारस्य हलादावपिति परत ईकारो भवति[1]। लुनीत पुनीत मिमीते सञ्जिहीते। हलीति किम्? लुनन्ति पुनन्ति। मिमते। तिङीति किम्? सञ्जिहासते। अदाघ इति किम्? दत्त· धत्त। अपितीत्येव। लुनाति जहाति।

**[ ई हल्यघो·। पा० ६।४।११३।** [1]इद् भवति Ms **ईद्** भवति L **]**

**इद्दरिद्रः** ॥१०७॥ [स० ६।३।१०६। ०द्रस्य। पा० ६।४।११४]

दरिद्रातेर्हलादौ तिङ्यपिति परत इकारो भवति। दरिद्रितः दरिद्रिथ। हलीत्येव। दरिद्रति। तिङीत्येव। दिदरिद्रासति। अपितीत्येव। दरिद्राति।

**भियो वा** ॥१०८॥ [स० ६।३।१०७]

बिभेतेर्हलि तिङ्यपिति परत इकारो वा भवति। **बिभित बिभीत। बिभिथ बिभीथ**। हलीत्येव। **बिभ्यति**। तिङीत्येव। **बिभीषति** भीत। **अपितीत्येव**। बिभेति।

**[ भियोऽन्यतरस्याम्। पा० ६।४।११५ ]**

**हाकः** ॥१०९॥ [स० ६।३।१०८]

जहातेर्हलि तिङ्यपिति परत इकारो वा भवति। जहित· जहीत। हलीत्येव। जहति। तिङीत्येव। जिहासति। अपितीत्येव। जहाति।

**[ जहातेश्च। पा० ६।४।११६ ]**

**हौ वा** ॥११०॥ [स० ६।३।१०९]

जहातेर्हौ परत इत्त्वमीत्त्व च वा भवति। जहिहि जहीहि जहाहि।

**[ आ च हौ। पा० ६।४।११७ ]**

**यि लोपः** ॥१११॥ [लोपो यि। पा० ६।४।११८, स० ६।३।११०]

यकारादौ तिङि परतो जहातेर्लोपो भवति। जह्यात् जह्याताम्। तिङीत्येव। हीयते। कथ हेयात? लिङ्येद् [७८] इति, अनवकाशत्वात्।

**दरिद्रः किति** ॥११२॥ [स० ६।३।१११]

दरिद्रातेर्यकारादौ किति परतो लोपो भवति। दरिद्यते दरिद्यात्। कितीति किम्? दरिद्रायात्।

[ ११२-११३। दरिद्रातेरार्धधातुके लोप। पा० ६।४।११४।१ ]

**अच्ययुवौ** ॥११३॥ [स० ६।३।११२]

अजादौ युवुवर्जिते परतो दरिद्रातेर्लोपो भवति। दरिद्रति अदरिद्रन्[1]। दरिद्रिता। दरिद्रितुम्। दिदरिद्रिषति। दरिद्र। आतो णेऽपि युग् न भवति लोपविधेर्बलवत्त्वात्। अचीति किम्? दिदरिद्रासति। अयुवाविति किम्? दरिद्राणम् दरिद्रायक। अपितीत्येव। अदरिद्राम्।

[ न दरिद्रायके लोपो दरिद्राणे च नेष्यते।
दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा॥ श्लो०वा० [1]अदरिद्रत Ms ]

**लुङि वा** ॥११४॥ [स० ६।३।११३]

लुङि परतो दरिद्रातेर्लोपो वा भवति। अदरिद्रीत् अदरिद्रासीत्।

[ वाद्यतन्याम्। पा० ६।४।११४।३ ]

**असुदाधां हावेदद्विश्च** ॥११५॥ [असिदा०। स० ६।३।११४]

अस्तेर्दाधश्च हौ परत एद् भवति, द्वि प्रयोगश्च न भवति। एधि देहि धेहि।

[ घ्वसोरेद्धावभ्यासलोपश्च। पा० ६।४।११९ ]

**लिट्यनादेशादेरेकहल्मध्येऽतः** ॥११६॥ [स० ६।३।११५]

लिटि परभूते आदेश आदिर्यस्या प्रकृतेर्नास्ति तस्या अकारस्यासहाययोर्हलोर्मध्ये वर्तमानस्यैत्त्व भवति, द्वि प्रयोगश्च न भवति। रेणतु रेणु, येमतु येमु। लिटीति किम्? ययम्यते। अनादेशादेरिति किम्? बभणतु बभणु। लिडादेशविशेषाणा किम्? नेमतु नेमु। सेहे सेहाते। अनैमित्तिके नत्वसत्वे इति नाय लिट्यादेशादि। एकहल्मध्य इति किम्? ततक्षतु ततक्षु। अत इति किम्? दिदिवतु दिदिवु। तपर किम्?

ररासे ररासाते। इह प्रकृतेर्द्विरुक्तौ पूर्वस्यादेश प्रकृत्यादेश इत्युच्यते, अभेदात्। शसिदद्दिप्रतिषेधाच्च भिन्नरूपादेशो गृह्यते। अपितीत्येव। अहं पपच, अह पपठ।

[अत एकहल्मध्येऽनादेशादेर्लिटि। पा० ६।४।१२० ]

**थलीटि** ॥११७॥

इडादौ थलि परतोऽनादेशादेरेकहल्मध्येऽत एत्त्व भवति, अद्विश्च। पेचिथ शेकिथ। इटीति किम्? पपक्थ। अनादेशादेरित्येव। बभणिथ। एकहल्मध्य इत्येव। ततक्षिथ। अत इत्येव। दिदेविथ।

[थलि च सेटि। पा० ६।४।१२१, स० ६।३।११६ ]

**तॄफलभजत्रपः** ॥११८॥ [स० ६।३।११७। ०पश्च। पा० ६।४।१२२]

तरत्यादीना लिड्यपिति थलि चेडादौ परतोऽत एत्त्वं भवति, अद्विश्च। तेरतु तेरु तेरिथ। फेलतु फेलु फेलिथ। भेजतु भेजु भेजिथ। त्रेपे त्रेपाते त्रेपिरे। अपितीत्येव। अह ततर।

**राधो हिंसायाम्** ॥११९॥ [पा०६।४।१२३, स०६।३।११८]

राधो हिसार्थस्य य आकारस्तस्य लिड्यपिति थलि चेटि परत एत्त्वं भवति, अद्विश्च। अपरेधतु अपरेधु अपरेधिथ। हिंसायामिति किम्? आरराधतु आरराधु। अपितीत्येव। अपरराध।

**वाजॄभ्रमत्रसाम्** ॥१२०॥ [०भ्रमु०। पा० ६।४।१२४, स० ६।३।११९]

जॄप्रभृतीना लिड्यपिति थलि चेटि परतोऽत एद्वा भवति, अद्विश्च। जेरतु जेरु जेरिथ, जजरतु जजरु जजरिथ। भ्रेमतु भ्रेमु भ्रेमिथ, बभ्रमतु बभ्रमु बभ्रमिथ। त्रेसतु त्रेसु त्रेसिथ, तत्रसतु तत्रसुः तत्रसिथ। अपितीत्येव। अहं जजर।

**फणादीनां सप्तानाम्** ॥१२१॥

फणादीना सप्ताना लिट्यपिति थलि चेडादौ परतोऽवर्णस्य एत्वं भवति वा, अद्विश्च। फेणतु. फेणु फेणिथ। पफणतु पफणु पफणिथ। अपितीत्येव। अह पफण। सप्तानामिति किम्? दध्वनतु दध्वनु।

[फणा च सप्तानाम्। पा० ६।४।१२५। फणस्यमस्वनराजभ्राजभ्राशभ्लाशाम्। स० ६।३।१२०]

**दम्भश्रन्थग्रन्थाम्** ॥१२२॥

दभादीना[1] लिट्यपिति परतोऽत एत्व भवति, अद्विश्च। देभतुः देभुः। श्रेथतु श्रेथु। ग्रेथतु ग्रेथु। अपितीत्येव। ददम्भ। दम्भेर्नलोपस्यासिद्धत्वाच्चारम्भ। थलीटि [११७] इति निवृत्तम्, तत्र नलोपाभावात्।

[दम्भ एत्त्व नलोपस्यासिद्धत्वात्। पा० ६।४।१२०।५। अन्त्रेष्टि। श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्। काशिका १।२।६। तृफलभजत्रपश्रन्थिग्रन्थिदम्भीनाञ्च। कातन्त्र ३।४।५३। दभश्लथग्रथाम्। स० ६।३।१२१। [1]दम्भादीनां L]

**मनिपचिमचां नाम्नि** ॥१२३॥ [स० ६।३।१२२]

मन्यादीना सञ्ज्ञायामत एत्वं भवति। मेना मेनका, पेचा पेचका, मेचा मेचका।

[अनेशा मेनकेत्येतद्येमान लिङि पेचिरन्। श्लो० वा० ६।४।१२०]

**नशोऽङि** ॥१२४॥ [स० ६।३।१२३]

नशेरङि परतोऽत एत्व भवति। अनेशम्।

[नशिमन्योरलिट्येत्त्वम्। श्लो० वा० ६।४।१२०]

**न शसदद्वाद्यदेङाम्** ॥१२५॥

शसेर्ददेर्वादीनामदेङ्विधानविहितस्य चात एत्व न भवति। विशशसतु विशशसु विशशसिथ। दददे दददाते दददिरे। ववमतुः ववमुः ववमिथ। विशशरतु विशशरु विशशरिथ। चिचयिथ लुलविथ। अर्वन्तम्

अर्वन्ताविति शत्रा सिद्धम्। अर्वाणम् अर्वाणाविति वनिपा सिद्धम्। मघवन्तम् मघवन्ताविति मतुपा सिद्धम्। मघवन्निति प्रकृत्यन्तरमस्ति।

[ न शसददवादिगुणानाम्। अर्वणस्त्रसावनञ । पा० ६।४।१२६-१२७ स० ६।३।१२४-५ ]

**यच्यशिसुटि** ॥१२६॥

यकारादावजादौ च शिसुड्वर्जित इत्येतदधिकृत वेदितव्यम्।

[ भस्य। पा० ६।४।१२९, यचि स्वादावशिसुटि। स० ६।३।१२७ ]

**पादः पत्** ॥१२७॥ [पा० ६।४।१३०, स० ६।३।१२८]

पादान्ताया प्रकृतेर्यच्यशिसुटि परत पाच्छब्दस्य पदादेशो भवति। वैयाघ्रपद्य । द्विपद पश्य। द्विपदा कृतम्। द्विपदिका ददाति। यचीत्येव। द्विपाद्भ्याम्। अशिसुटीत्येव। द्विपान्दि कुलानि। द्विपादौ द्विपाद। स्वादिग्रहणादकिशोरधेनुन्यायेन द्विपाद्यति।

**वसोर्व उत्** ॥१२८॥

वसोर्वकारस्य यच्यशिसुटि परत उदादेशो भवति। विदुष पश्य, विदुषा कृतम्। पेचुष पश्य, पेचुषा कृतम्। यचीत्येव। विद्वद्भ्याम्। अशिसुटीत्येव। विद्वांसौ विद्वांस।

[ वसो सम्प्रसारणम्। पा० ६।४।१३१, मतौ च वसो सम्प्रसारणम्। स० ६।३।१२९ ]

**श्वयुवमघोनामनणादौ** ॥१२९॥

श्वादीनामनणादौ यच्यशिसुटि परतो वकारस्योदादेशो भवति। शुनः शुना शुनी। यून यूना यूनी। मघोन मघोना मघोनी। अनणादाविति किम्? शौव मासम्। यौवन वर्तते। माघवन स्थालीपाक। नकारनिर्देश. किम्? युवत्या मघवत्येति शब्दान्तरत्वात्।

[ श्वयुवमघोनामतद्धिते। पा० ६।४।१३३, स० ६।३।१३०। श्वादीनामेतत् सम्प्रसारणं नकारान्तानामिष्यते। काशिका। ]

**अल्लोपोऽनः** ॥१३०॥ [पा० ६।४।१३४, स० ६।३।१३१]

अनन्ताया प्रकृतेर्यच्यशिसुटि परतोऽनो लोपो भवति। राज्ञः राज्ञा। तक्ष्ण तक्ष्णा।

**षपूर्वहन्धृतराज्ञामणि** ॥१३१॥ [पा० ६।४।१३५, स० ६।३।१३२]

षपूर्वस्य हन्तेर्धृतराज्ञश्चानोऽणि परतोऽल्लोपो भवति। औक्ष्ण. ताक्ष्ण भ्रौणघ्न वार्तराज्ञ। एषामिति किम्? सामन वैमन। अणीति किम्? ताक्षण्य। कारुत्वाण्ण्य [२।४।८५]।

**ङिश्योर्वा** ॥१३२॥ [स० ६।३।१३३]

ङिशीत्येतयो परतोऽनन्ताया प्रकृतेरतो लोपो भवति। साम्नि सामनि। साम्नी सामनी।

[विभाषा ङिश्यो। पा० ६।४।१३६]

**न संयोगाद् वमः** ॥१३३॥ [स० ६।३।१३४]

न सयोगाद् वकारान्मकाराच्च परस्यानन्ताया अतो लोपो भवति। चर्मणा चर्मणे। पर्वणा पर्वणे। संयोगादिति किम्? प्रतिदीव्ना। साम्ना। वम इति किम्? तक्ष्णा।

[न सयोगाद्वमन्तात्। पा० ६।४।१३७]

**अचः** ॥१३४॥ [पा० ६।४।१३८]

अञ्चतेर्यच्यशिसुटि परतोऽतो लोपो भवति। दधीच· दधीचा। मधूच मधूचा। प्राप्त्यभावात्प्रतिषेधो नानुवर्तते।

[अञ्चेरेन। स० ६।३।१३५]

**उद ईत्** ॥१३५॥ [पा० ६।४।१३९, स० ६।३।१३६]

उद परस्याञ्चतेर्यच्यशिसुटि परतोऽत ईदादेशो भवति। उदीचः उदीचा।

**आतः ॥१३६॥**

आकारान्ताया प्रकृतेर्यच्यशिसुटि परतो लोपो भवति। कीलालपः कीलालपा। शुभय शुभया। यचीत्येव। कीलालपाभ्याम्। अशिसुट्येव। कीलालपा पश्य। कथ खट्वा पश्य, खट्वया कृतम्? टि चाप [६।२।४३] कुल्टाया वा [२।४।५७] इत्यादिज्ञापकात्।

[आतो धातो। पा० ६।४।१४०। आतोऽनाप। स० ६।३।१३७]

**विंशतेर्डिति तेः ॥१३७॥** [स० ६।३।१३८]

विंशतेर्डिति परतस्तिशब्दस्य[1] लोपो भवति। विंशत्या क्रीत[2] विंशक। विंशं शतम्।

[ति विंशतेर्डिति। पा० ६।४।१४२। [1]परतो तिशब्दस्य L [2]क्रीत Ms]

**अन्त्याजादेः ॥१३८॥**

अन्त्योऽजादिर्यस्य तस्य प्रकृत्यवयवस्य डिति परतो लोपो भवति। त्रिशक। कुमुद्वान नड्वान्। उपसरज। डित्करणसामर्थ्यादस्वादावयच्यपि भवति।

[टे.। पा० ६।४।१४३। डित्यभस्याप्यनुबन्धकरणसामर्थ्याट् टिलोपो भवति। काशिका। टेरन्यत्रापि। स० ६।३।१३९]

**नोऽणादौ ॥१३९॥**

अणादौ यचि परतो नकारान्ताया प्रकृतेरन्त्याजादिलोपो भवति। आग्निशर्मि औडुलोमि। न इति किम्? सात्वत। अणादाविति किम्? शर्मणा शर्मणे।

[नस्तद्धिते। पा० ६।४।१४४, स० ६।३।१४०]

**कलाप्यादीनाम् ॥१४०**

कलापिन्नित्येवमादीनामणादौ यचि परतोऽन्त्याजादिलोपो भवति। कलापिना प्रोक्त वेद विदन्त्यधीयते वा कालापा। कौथुमाः। तैतली

जाजली चाचार्यौ, तत्कृतो ग्रन्थस्तच्छब्देनोच्यते। तमधीयते तैतलाः जाजलाः। एवं लाङ्गलाः॥ कलापिन्। कुथुमिन्। तैतलिन्। जाजलिन्। लाङ्गलिन्। ब्रह्मचारिन्। पीठमर्दिन्। सूकरमर्दिन्। सुपर्वन्। अश्मनो विकारे। आश्म। आश्मनोऽन्य। चर्मण कोशे। चार्म। कोश इति किम्? चार्मण। शुनोऽवयवसङ्कोचयोः। शौव मासम्। शौव सङ्कोच। शौवनोऽन्य। असख्यस्यानाराच्छश्वतोऽसिति। सायप्रातिक पौन पुनिक.। अनाराच्छश्वत इति किम्? आरातीय शाश्वतिक। असितीति किम्? शंयु कयु।

[ नकारान्तस्य टिलोपे स्वब्रह्मचारि-पीठसर्पि-कलापि-कुथुमि-तैतिलि-जाजलि-लाङ्गलि-शिलालि-शिखण्डि-सूकरसद्म-सुपर्वणामुपसख्यातम्। चर्मण कोशे। अश्मनो विकारे। शुन सङ्कोचे। अव्ययाना च सायंप्रातिकाद्यर्थम्। पा० ६।४।१४४।१-५। सायप्रातिक पौन पुनिक। शाश्वतिके प्रतिषेधो वक्तव्य.। भाष्यम्। कलापि-कुथुमि-तैतिलि-जाजलि-लाङ्गलि-शिखण्डि-सब्रह्मचारि-पीठसर्पि-सूकरसद्म-सुपर्वणा च। अश्मनो विकारे। चर्मण कोशे। शुनोऽवयवसंकोचयोः। अव्ययस्य चानाराच्छश्वतोऽसिति। स० ६।३।१४१-१४५ ]

**अह्नः खे** ॥१४१॥ [स० ६।३।१४६]

अह्न खे परतोऽन्त्याजादिलोपो भवति। द्वे अहनी भूतो द्व्यहीन। त्र्यहीन। ख इति किम्? आह्निक।

[ अह्नष्टखोरेव। पा० ६।४।१४५ ]

**असर्वासंख्यैकदेशाट्टे** ॥१४२॥

टे परतोह्नोऽन्त्याजादिलोपो भवति नचेत्सर्वशब्दादसंख्यादेकदेशवाचिनश्च परो भवति। परमाह उत्तमाह पुण्याह संख्याताह। सर्वादिपर्युदास किम्? सर्वाह्न प्रत्यह्न निरह्न पूर्वाह्ण अपराह्णः।

[ (अह सर्वैकदेशसंख्यातपुण्याच्च रात्रे)। अह्नोऽह्न एतेभ्य.। न संख्यादेः समाहारे। उत्तमैकाभ्या च। पा० ५।४।८८-९०। केचित्तु उपोत्तमस्यापि प्रतिपत्त्यर्थं वर्णयन्ति। तेन संख्यातशब्दादपि परस्य न भवति। संख्याताहः। काशिका। अनव्ययसंख्यैकदेशसर्वेभ्यष्टे। स० ६।३।१४७ ]

**समाहारे** ॥१४३॥ [स० ६।३।१४८]

अह्नः समाहारे टे परतोऽन्त्याजादिलोपो भवति। द्वे अहनी समाहृते द्व्यहः। त्र्यहः।

[ न संख्यादेः समाहारे। पा० ५।४।८९ ]

**एकात्** ॥१४४॥ [स० ६।३।१४९]

एकात्परस्याह्नष्टे परतोऽन्त्याजादिलोपो भवति। एकाहः।

[ उत्तमैकाभ्यां च। पा० ५।४।९० ]

**अन्तिकस्य तमे तादेः** ॥१४५॥ [स० ६।३।१५०]

अन्तिकशब्दस्य तमे परतस्तादेरवयवस्य लोपो भवति। अन्तमः।

[ तमे तादेश्च। पा० ६।४।१४९।९ ]

**कादेर्बहुलम्** ॥१४६॥ [स० ६।३।१५१]

अन्तिकस्य तमेऽन्यत्र च परतः ककारादेरवयवस्य लोपो बहुलं भवति। अन्तिकतमः अन्तितमः। अन्तितः अन्तिकतः। अन्तिके सीदतीत्यन्तिकसत् अन्तिषत्।

[ अन्तिकस्य तसि कादिलोप आद्युदात्तत्वं च। पा० ६।४।१४९।८ ]

**ओरोत्** ॥१४७॥

उवर्णान्ताया प्रकृतेर्यच्यणादौ परतो बहुलमोत्त्वं भवति। बाभ्रव्यः माण्डव्यः। औपगवः कापटवः। बहुलमित्येव। स्वायम्भुवः।

[ ओर्गुणः। पा० ६।४।१४६। ओरोदस्वयम्भुवः। स० ६।३।१५२। ओरोदिति वक्तव्ये गुणग्रहणं संज्ञापूर्वको विधिरनित्यो यथा स्यात् तेन स्वायम्भुव इति सिद्धं भवति। काशिका। ]

**ढे** ॥१४८॥

ढे परत उवर्णान्ताया प्रकृतेर्बहुलं लोपो भवति। कामण्डलेयः शैतिबाहेयः। माद्रबाहेयः। बहुलमित्येव। काद्रवेयः।

[ढे लोपोऽकद्र्वाः। पा०६।४।१४७। अकद्रुपाण्ड्वोर्ढे लोपः। स०६।३।१५३]

**यस्य** ॥१४९॥

इवर्णान्ताया अवर्णान्तायाश्च प्रकृतेर्यच्यणादौ परतो बहुल लोपो भवति। साकृत्य गार्ग्य ऐतिकायन काल्येय दौलेय दाक्षि प्लाक्षि। बहुलमित्येव। ऊर्णायु।

[यस्येति च। पा० ६।४।१४८। यस्यायुसि। स० ६।३।१५४]

**ङ्याम्** ॥१५०॥

ङ्यां परतो यस्य लोपो भवति। दाक्षी प्लाक्षी कुमारी किशोरी गौरी।

[यस्येति च। पा० ६।४।१४८। ङ्यां मत्स्यस्य य। स० ६।३।१५५]

**मत्स्यस्य यः** ॥१५१॥

मत्स्यस्य ङ्या परतो यकारस्य लोपो भवति। मत्सी।

[सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः। पा० ६।४।१४९। सूर्यमत्स्ययोर्ङ्याम्। वा० ५। ङ्या मत्स्यस्य य। स० ६।३।१५५]

**हलो यञादेः** ॥१५२॥

हल परस्य यञादियकारस्य ङ्या परतो लोपो भवति। गार्गी सौमी। हल इति किम्? कारिकेयी। यञादेरिति किम्? वैद्यस्य भार्या वैद्यी।

[हलस्तद्धितस्य। पा० ६।४।१५०, स० ६।३।१५६]

**[1]सौर्यागस्त्ययोश्छे च** ॥१५३॥

सौर्यस्यागस्त्यस्य च छे ङ्या च परतो यकारस्य लोपो भवति। सौरीय सौरी। आगस्तीय आगस्ती। छङीभ्या यकारविशेषणादिह न भवति। आगस्त्यचरी।

[सूर्यागस्त्ययोश्छे च। पा० ६।४।१४९।६, स० ६।३।१५७। [1]Bhāsya and Kāśikā have सूर्यागस्त्ययो..]

**तिष्यपुष्ययोर्नक्षत्रेऽणि** ॥१५४॥ [स० ६।३।१५८]

तिष्यपुष्ययोर्नक्षत्रे वर्तमानयोरणि परतो यस्य लोपो भवति। तैषी

रात्रि, तैपमह । पौषी रात्रि, पौपमह· । नक्षत्र इति किम्? पुष्यस्य माणवकस्येदम् पौष्यम् ।

[ तिष्यपुष्ययोर्नक्षत्राणि । पा० ६।४।१४९।७ ]

**आपत्यस्यानात्यणादौ** ॥१५५॥

हल· परस्थापत्ये विहितस्य यकारस्य यच्यणादावनाति परतो लोपो भवति। गार्ग्याणा समूहो गार्गकम्। वात्सकम्। आपत्यस्येति किम्? साङ्काश्यक. काम्पिल्यक । अनार्तीति किम्? गार्ग्यायण· । अणादाविति किम्? गार्ग्ये। हल इत्येव। कारिकेयि ।

[ आपत्यस्य च तद्धितेऽनाति। पा० ६।४।१५१. SK vı 3 159 omıts the च ]

**क्यच्व्योः** ॥१५६॥ [म० ६।३।१६०। क्यच्व्योश्च। पा० ६।४।१५२]

क्यच्व्यो परतो हल उत्तरस्यापत्यस्य यकारस्य लोपो भवति। गार्गीयति गार्गीयते। गार्गीभूत । आपत्यस्येत्येव। साङ्काश्यीयति साङ्काश्यीभूत· । हल इत्येव। कारिकेयीयति ।

**बिल्वकीयादीनामीयः** ॥१५७॥ [०मीयस्य। स० ६।३।१६१]

बिल्वकीयादीना यच्यणादौ परत ईयशब्दस्य लोपो भवति। बिल्वा अस्या सन्ति बिल्वकीया, तस्या भवा बैल्वका । एव वैणुका ॥ बिल्वकीय। वेणुकीय। वेतसकीय। वेत्रकीय। इक्षुकीय। काष्ठकीय। कपोतकीय। क्रुञ्चकीय[1] ।

[ बिल्वकादिभ्यच्छस्य लुक्। पा० ६।४।१५३। [1]क्रौञ्चकीय Ms ]

**इष्ठेमेयःस्वन्त्याजादेः** ॥१५८॥

इष्ठादिषु परत प्रकृतेरन्त्याजादिलोपो भवति। पटिष्ठ पटीयान्

पटिमा। लघिष्ठ लघीयान् लघिमा। इष्ठवद्भावाण्णावपि भवति। पटयति लघयति।

[(तुरिष्ठेमेय सु।) टे। पा० ६।४।१५५। टेरिष्ठेमेय सु। स० ६।३।१६३]

**स्थूलदूरयुवक्षिप्रक्षुद्राणां यणादेर्य्वोरेङ् च ॥१५९॥** [०र्य्वो र्गुणश्च। स० ६।३।१६३]

स्थूलादीनामिष्ठादिषु यथासम्भवं यणादेरवयवस्य लोपो भवति, इवर्णोवर्णयोश्चैङौ भवत। स्थविष्ठ स्थवीयान् स्थविमा। दविष्ठ दवीयान् दविमा। यविष्ठ यवीयान् यविमा। क्षेपिष्ठ क्षेपीयान् क्षेपिमा। क्षोदिष्ठ क्षोदीयान् क्षोदिमा। णाविष्ठवद्भावात् स्थवयति दवयति यवयति क्षेपयति क्षोदयति।

[स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणा यणादिपर पूर्वस्य च गुण। पा० ६।३।१५६]

**बहोरेर्भू च ॥१६०॥** [०र्भू चास्य। स० ६।३।१६४]

बहो परेषामिष्ठादीनामिवर्णस्य लोपो भवति, भू च बहोरादेश। भूयान् भूमा।

[बहोर्लोपो भू च बहो। पा० ६।४।१५८]

**इष्ठे यिक् च ॥१६१॥**

इष्ठे परतो बहोर्भूरादेशो भवति यिक् चागम। भूयिष्ठ। णाविष्ठवद्भावात्। भूययति।

[इष्ठस्य यिट् च। पा० ६।४।१५९। इष्ठे युक् च। स० ६।३।१६५]

**ज्यायान् ॥१६२॥**

ज्याशब्दात्परस्येयस आत्त्व निपात्यते।

[ज्यादादीयस। पा० ६।४।१६०, स० ६।३।१६६]

**प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घह्रस्ववृद्धवृन्दारकाणां प्रस्थस्फवरगरबंहत्रपद्राघह्रस्वर्षवृन्दाः ॥१६३॥**

प्रियादीनामिष्ठादिषु यथासम्भव प्रादय आदेशा भवन्ति। प्रेष्ठः

प्रेयान् प्रेमा। स्थेष्ठ स्थेयान् स्थेमा। स्फेष्ठ स्फेयान् स्फेमा। वरिष्ठः वरीयान् वरिमा। गरिष्ठ गरीयान् गरिमा। बहिष्ठ बंहीयान् बहिमा। त्रपिष्ठ त्रपीयान त्रपिमा। द्राघिष्ठ द्राघीयान् द्राघिमा। ह्रसिष्ठ ह्रसीयान् ह्रसिमा। वर्षिष्ठ वर्षीयान् वर्षिमा। वृन्दिष्ठ वृन्दीयान् वृन्दिमा। णाविष्ठवद्भावात् प्रापयति स्थापयति स्फापयति वरयति गरयति बंहयति त्रपयति द्राघयति ह्रसयति वर्षयति वृन्दयति।

[स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणा यणादिपर पूर्वस्य च गुण। प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणा प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दा। पा० ६।४।१५६-१५७। Bhoja's rule is practically the same as ours, only for वर गर, त्रप and ह्रस Bhoja has वर्, गर्, त्रप् and ह्रस्.]

र ऋतः पृथुमृदुकृशभृशदृढपरिवृढानाम् ॥१६४॥ [स० ६।३।१६८]

पृथ्वादीनामृकारस्येष्ठादिषु परेषु रेफो भवति। प्रथिष्ठ प्रथीयान् प्रथिमा। म्रदिष्ठ म्रदीयान् म्रदिमा। क्रशिष्ठ क्रशीयान् क्रशिमा। भ्रशिष्ठः भ्रशीयान् भ्रशिमा। द्रढिष्ठ द्रढीयान् द्रढिमा। परिव्रढिष्ठ. परिव्रढीयान् परिव्रढिमा। णाविष्ठवद्भावात् प्रथयति म्रदयति क्रशयति भ्रशयति द्रढयति परिव्रढयति। पृथ्वादीनामिति किम्? ऋजिष्ठ ऋजीयान्। कृच्छ्रयति कृतयति।

[र ऋतो हलादेर्लघो.। पा० ६।४।१६१। पृथुमृदुकृशभृशदृढपरिवृढानामिति वक्तव्यम्। भाष्यम्।

पृथु मृदु भृश चैव कृशं च दृढमेव च।
परिपूर्वं वृढञ्चैव षडेतान् रविधौ स्मरेत्॥ काशिका]

नैकाचः ॥१६५॥ [स० ६।३।१६९]

इष्ठादिषु परतो यदुक्तं तदेकाचो न भवति। स्रजिष्ठ स्रजीयान् स्रजयति। स्रुचिष्ठ स्रुचीयान् स्रुचयति। एकाच इति किम्? वसुमत्तमः वसिष्ठ।

[प्रकृत्यैकाच्। पा० ६।४।१६३]

**अके राजन्यमनुष्ययूनाम्** ॥१६६॥ [स० ६।३।१७०]

अके परतो राजन्यादीना यदुक्तं तन्न भवति। राजन्यकम् मानुष्यकम्। मनोज्ञादित्वाद् [४।१।१४९] वुञ्। यौवनिका।

[प्रकृत्याके राजन्यमनुष्ययुवान। पा० ६।४।१६३।३]

**आत्माध्वनोः खे** ॥१६७॥ [स० ६।३।१७१। ०ध्वानौ०। पा० ६।४।१६९]

आत्मनोऽध्वनश्च खे परतो यदुक्त तन्न भवति। आत्मनीन अध्वनीन। ख इति किम्? प्रत्यात्मम् प्राध्वम्।

**अभावकर्मणोरनो ये** ॥१६८॥ [स० ६।३।१७२]

अनन्तस्य ये परतो यदुक्त तन्न भवति, स चेद्भावकर्मणोरविहितो भवति। सामसु साधु सामन्य। ब्रह्मण्य। अभावकर्मणोरिति किम्? राज्ञो भाव कर्म वा राज्यम्। य इति किम्? महाराज॰।

[ये चाभावकर्मणो। पा० ६।४।१६८]

**अणि** ॥१६९॥ [स० ६।३।१७३]

अणि परतोऽनन्तस्य यदुक्तं तन्न भवति। सामन॰ वैमन॰।

[अन्। पा० ६।४।१६७]

**कर्मणोऽशीले** ॥१७०॥

कर्मणोऽणि परतो यदुक्तं तन्न भवति, शीलं चेन्न गम्यते। कार्मणः। अशील इति किम्? कार्म। अणित्येव। कार्मुकम्।

[कार्मस्ताच्छील्ये। पा० ६।४।१७२. Under the previous rule अणि Bhoja's commentator says अणीति किम्? कर्म शीलमस्य कार्मं। छत्रादित्वाण्ण॰।]

**माद् वर्मणोऽपत्ये** ॥१७१॥

मादेव परस्य वर्मण एवापत्येऽनन्तस्याणि परतो यदुक्तं तन्न भवति। चाक्रवर्मणः। मादिति किम्? सौत्वन॰। वर्मण इति किम्? सौषामः।

[न मपूर्वोऽपत्येऽवर्मण । पा० ६।४।१७० । माद्वर्मण एवापत्ये । स० ६।३।१७४]

**हितनाम्नो वा** ॥१७२॥ [स० ६।३।१७५]

हितनाम्नोऽपत्येऽणि यदुक्तं तन्नेति वा भवति । हैतनामनः । हैतनाम· ।

[मपूर्वात्प्रतिषेधे वा हितनाम्न । पा० ६।४।१७०।१]

**ब्रह्मणो जातौ** ॥१७३॥ [स० ६।३।१७६]

ब्रह्मणोऽपत्येऽणि जातावभिधेयाया यदुक्त तन्न भवति । ब्राह्मणः । जाताविति किम्? ब्राह्मो मनु· । अपत्य इत्येव । ब्राह्मी ओषधि. ।

[ब्राह्मोऽजातौ । पा० ६।४।१७१]

**उक्ष्णः** ॥१७४॥ [स० ६।३।१७७]

उक्षन्शब्दस्यापत्येऽणि यदुक्त तन्न भवति । औक्ष्ण । पुनर्विधानादल्लोप । अपत्य इत्येव । औक्ष पदम् ।

[औक्षमनपत्ये । पा० ६।४।१७३]

**संयोगादिनोऽसमूहे** ॥१७५॥

सयोगात्परो य इन् तदन्तस्यासमूहेऽणि यदुक्तं तन्न भवति । शाङ्खिनः वाज्रिण । असमूह इति किम्? दण्डिना समूहो दाण्डम् ।

[सयोगादिश्च । पा० ६।४।१६६ । संयोगादिन । स० ६।३।१७८]

**गाथिविदथिकेशिगणिपणिनाम्** ॥१७६॥ [स० ६।३।१७९, ०पणिनश्च । पा० ६।४।१६५]

गाथ्यादीनामसमूहेऽणि यदुक्त तन्न भवति । गाथिनः । वैदथिनः । कैशिनः । गाणिन । पाणिन. । असमूह इत्येव । गणिना समूहः गाणम् ।

**अनपत्ये च** ॥१७७॥ [अनपत्ये । स० ६।३।१८०]

टनन्तस्य शेषस्यानपत्ये समूहे चार्थे यदुक्त तन्न भवति। साङ्कूटिनम्। सागविणम्। स्रग्विण इद स्राग्विणम्। अपत्ये तु भवत्येव। मेधाविनोऽपत्यं मैधाव। असमूह इत्येव। रथिना समूहो राथम्।

[इनण्यनपत्ये। पा० ६।४।१६४]

**दाण्डिनायनहास्तिनायनजैह्माशिनेयवासिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकहिरण्मयानि** ॥१७८॥ [स० ६।३।१८१]

दाण्डिनायनादीनि शब्दरूपाणि यथायोग निपात्यन्ते। दण्डिहस्तिभ्यामपत्ये नडादित्वात् [२।४।३५] फकि लोपाभाव। दाण्डिनायनः हास्तिनायन। जिह्माशिन शुभ्रादित्वाड् [२।४।५३] ढकि जैह्माशिनेय। बासिनो गोत्रादादैजाद्यच· [२।४।९०] इति फिञ्। बासिनायनि। भ्रूणघ्नो धीवनश्च भावे ष्यञि तत्वम्। भ्रौणहत्यम् धैवत्यम्। सरय्वा भवेऽणि यलोप· सारव। इक्ष्वाकोरणि जनपदादञि वोकारलोप। इक्ष्वाकोरिदमपत्य वा ऐक्ष्वाक। हिरण्यस्य विकारे मयटि यलोप। हिरण्मयम्।

[दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि। पा० ६।४।१७४]

इति चान्द्रे व्याकरणे पञ्चमस्याध्यायस्य तृतीय· पाद समाप्त।

**युवोरनाकावसः** ॥ १ ॥ [स० ६।४।१]

योरसकारकस्य वोश्चानाकावादेशौ भवत। नन्दन गमनम्। कारकः काच्छक [३।२।४८]। अस इति किम्? कयु शयु। युवोरिति समाहारस्यैकत्वादेकवचनम्। विकल्पानुवृत्तेरनपुसकत्वम्। युधबुधादीना न भवत्यनर्थकत्वात्, यौते यॆवयवक० [४।२।३] इत्यादेर्ज्ञापकात्, भुज्युरित्यौणादिकत्वात् [उ० १।२४]।

[युवोरनाकौ। पा० ७।१।१। यस्त्विदमुक्तं न्यासकृता अहंशुभमोर्युस् [५।२।१४०] अहंयुरित्यत्र सित्करणसामर्थ्यादादेशो न भविष्यतीति, तत्र सामर्थ्यं विवव्य (?) द्वौ हेतू उक्तौ। तृतीयश्च हेतुरुपवर्णयितु शक्यते। अस्त्यत्र पदसंज्ञाया प्रयोजन भसज्ञानिवृत्तिर्नाम। यदि भसज्ञा स्यात्, अव्ययाना भमात्रे टिलोप इति टिलोप स्यादिति। चन्द्रगोमी त्वेत सर्वं क्लेशमसहिष्णु युवोरनाकावस इति सूत्रयति। तन्त्रप्रदीप। 'This is very strange! There is no vā in the Vrtti on ii 2 49 It is a pity Candra did not write युव्वो°]

**आयनेयीनीयियः फढखछघां ष्फाद्यादीनाम्** ॥ २ ॥

ष्फादीनाम् [२।३।१९] आदिभूता ये फकारादयस्तेषामायनादय आदेशा भवन्ति। ष्फ। गार्ग्यायणी। ढक्। सौपर्णेयी। ख। कुलीन। छ। स्वस्रीय। घ। क्षत्रिय। ष्फादिग्रहण किम्? फक्कति ढौकते। आदिग्रहण किम्? जानुदघ्नम्।

[आयनेयीनीयिय फढखछघा प्रत्ययादीनाम्। पा० ७।१।२, ०तद्धितादीनाम्। स० ६।४।२]

**ठस्येकः** ॥ ३ ॥ [पा० ७।३।५०, स० ६।४।३]

ष्फादीना ठकारस्येकादेशो भवति। आक्षिक। ष्फादीनामित्येव। कण्ठ। आदीनामित्येव। कर्मठ।

[आयन्नादिसूत्रानन्तर कृत एतस्मिन् कर्मठ इत्यत्र न स्यादेवेति चन्द्रगोमी। तन्त्रप्रदीप ७।३।५०]

**इसुसुग्दोर्भ्यः कः** ॥ ४ ॥ [स० ६।४।४]

इस् उस् उक् इत्येवमन्ताया प्रकृतेर्दो शब्दाच्च परस्य ठकारस्य कादेशो भवति। सार्पिष्क धानुष्क। शाबरजम्बुक मातृक पैतृक। दोर्भ्यां चरति दौष्क। आशिषिक औषिक इत्यनर्थकत्वाल्लाक्षणिकत्वाच्च न भवति। आयनादयश्चैत उपदेशावस्थायामेव भवन्ति निर्निमित्तत्वात्, युच् ठच् इति चकारस्यान्तोदात्तार्थत्वाच्च।

[इसुसुक्तान्तात्क। पा० ७।३।५१। इह कस्मान्न भवति—आशिषा

**तरत्याशिषिक । उपा तरत्यौपिक । लक्षणप्रतिपदोक्तयो प्रतिपदोक्तस्यैवेति । अथेह कथ भवितव्यम्—दोर्भ्यां तरति ? दौष्क इति भवितव्यम् । कथम् ? यदि वर्णैक-देशा वर्णग्रहणेन गृह्यन्ते । भाष्यम् । ]**

**तोऽशश्वतः** ॥ ५ ॥

नकारान्ताया प्रकृतेरशश्वतो विहितस्य ठस्य कादेशो भवति । औदश्वित्क भावत्क । अशश्वत इति किम् ? शाश्वतिक । विहितविशेषणं किम् ? मायितिक ।

**[ तोऽनकस्माच्छश्वतो । स० ६।४।५। अस्मादेव निपातनात्तान्तादपि को न भवति। न्यास २।४।९ ]**

**अनञ्समासे क्त्वो ल्यप्** ॥ ६ ॥

नञोऽन्यस्य क्तान्तेन समासे क्त्वो ल्यब् भवति । प्रकृत्य प्रस्तुत्य प्रहृत्य । अनञ् इति किम् ? अकृत्वा । समास इति किम् ? पृथक् कृत्वा हिरुक् कृत्वा । [1]अनञ् इति नञ्सदृशस्यासङ्ख्यस्य ग्रहणादिह न भवति परमकृत्वा । पीत्वाभुक्तक-स्नात्वाकालकादिष्वसमस्तत्वाच्च । उपदेशाव-स्थायामेव ल्यब् भवति, ति किति [८५] इति सिद्धे जग्धविधौ ल्यब्ग्रहणात् [८६] ।

**[ समासेऽनञ्पूर्वे क्त्वो ल्यप् । पा० ७।१।३७, भाविनि गत्युपपदसमासे क्त्वो ल्यप् । स० ६।४।६** [1]See *Kāśikā* ]

**ॠत इद्धातोः** ॥ ७ ॥ [पा० ७।१।१००, स० ६।४।७]

ॠकारान्तस्य धातोरिदादेशो भवति । किरति गिरति । चिकीर्षति जिहीर्षति । धातोरिति किम् ? मातॄणाम् । इदं च ज्ञापकं लाक्षणिकस्यापि ग्रहणाय ।

**उपान्त्यस्य** ॥ ८ ॥

अन्त्यसमीपस्य ॠकारस्येदादेशो भवति । कीर्तयति कीर्तक । उपान्त्यस्येति किम् ? ॠकारीयति ।

**[ उपधायाश्च । पा० ७।१।१०१, स० ६।४।८ ]**

**उदोष्ठ्यात्** ॥ ९ ॥

ओष्ठ्यात्परस्य ॠकारस्योदादेशो भवति। प्रपूर्ता पिण्डा। पूः पुरौ पुरः। तपर किम्? दीर्घस्य स्थाने दीर्घो मा भूत्, अमू अमी इति यथा।

[ उदोष्ठ्यपूर्वस्य। पा० ७।१।१०२, स० ६।४।९ ]

**इदितो नुम्** ॥१०॥ [स० ६।४।१०]

इदितो धातोर्नुमागमो भवति। कुण्डा हुण्डा कुण्डिना। उपदेशावस्थायामेव नुम भवति निर्निमित्तत्वात्, धात्वविकाराच्च। धातोरित्येव। अचैषीत्।

[ इदितो नुम् धातो । पा० ७।१।५८ ]

**शे मुचादीनाम्** ॥११॥ [पा० ७।१।५९]

शे परतो मुचादीना नुम् भवति। मुञ्चति लुम्पति। कथ तृपति तृम्पति दृपति दृम्पतीति? धातुष्वेव हि द्विधा पाठात्।

[ मुच-लुप-लिप-विद-सिच-कृत-खिद-पिष-तृप-दृफ-गुफोभ-शुभा शे। स० ६।४।११ ]

**नशो झलि** ॥१२॥ [स० ६।४।१२]

नशेर्झलादौ परतो नुम् भवति। नष्टा। झलीति किम्? नशनम्।

[ मस्जिनशोर्झलि। पा० ७।१।६० ]

**मस्जोऽन्त्यात्पूर्वः** ॥१३॥ [स० ६।४।१३]

मस्जेरन्त्यात्पूर्वो झलादौ नुम् भवति। मङ्क्ता। अन्त्यात्पूर्व इति किम्? सयोगादिलोपो यथा स्यात्। झलीत्येव। मज्जनम्।

[ अन्त्यात्पूर्वो मस्जेरनुषङ्गसंयोगादिलोपार्थम्। पा० १।१।४७।२ ]

**जभोऽचि** ॥१४॥

जभेरजादौ परतो नुम् भवति। जम्भयति जम्भक।

[ १४-१५। रधिजभोरचि। पा० ७।१।६१, स० ६।४।१४ ]

**रधः ॥१५॥**

रधेरजादौ नुम् भवति। रन्धयति रन्धक ।

**इटि लिटि ॥१६॥**

इडादौ लिटयेव परतो रधेर्नुम् भवति। ररन्धिव। ररन्धिम। लिटीति किम्? रधिना।

[ नेट्यलिटि रधे । पा० ७।१।६२ । रधेरिटि लिट्येव । स० ६।४।१५ ]

**रभोऽशब्लिटोः ॥१७॥**

रभेरशप्यलिटि चाजादौ परतो नुम् भवति। आरम्भ आरम्भक । अशब्लिटोरिति किम्? आरभते आरेभे।

[ रभेरशब्लिटो । पा० ७।१।६३, स० ६।४।१६ ]

**लभः ॥१८॥** [लभेश्च। पा० ७।१।६४, स० ६।४।१७]

लभेरजादावशब्लिटोर्नुम् भवति। आलम्भ आलम्भक । अशब्लिटोरित्येव। आलभते आलेभे।

**आङो यि ॥१९॥** [पा० ७।१।६५, स० ६।४।१८]

आङ परस्य लभेर्यकारादौ परतो नुम् भवति। आलम्भ्या गौ ।

**उपात् स्तुतौ ॥२०॥**

उपात्परस्य लभेर्यकारादौ परत स्तुतौ गम्यमानाया नुम् भवति। उपलम्भ्या भवता विद्या। स्तुताविति किम्? उपलभ्यमस्पाद् वृषलात् किञ्चित्।

[ उपात्प्रशसायाम्। पा० ७।१।६६, स० ६।४।१९ ]

**प्रादिभ्यः खल्घञोः ॥२१॥**

प्रादिभ्य एव परस्य लभे खलि घञि च परतो नुम् भवति। ईषत्प्रलम्भः कटो भवता। उपलम्भ। प्रादिभ्य इति किम्? ईषल्लभ। लाभः।

[ उपसर्गात्खल्घञो । पा० ७।१।६७, स० ६।४।२० ]

**न सुदुरः केवलात्** ॥२२॥

सुदुर्भ्यां केवलाभ्यां परस्य लभेर्नुम् न भवति। सुलभः दुर्लभः। केवलादिति किम्? अतिसुलम्भः अतिदुर्लम्भः।

[न सुदुर्भ्यां केवलाभ्याम्। पा० ७।१।६८, स० ६।४।२१। अतिसुलभमित्यत्र कर्मप्रवचनीयत्वादतेः केवल एव सुशब्द उपसर्ग इति भवति प्रतिषेधः। यदा त्वतिशब्दो न कर्मप्रवचनीयस्तदा नुम् भवत्येवातिसुलम्भ इति। काशिका।]

**चिण्णमोरप्रादेर्वा** ॥२३॥

प्रादिरहितस्य लभेश्चिणि णमुलि च परतो नुम् वा भवति। अलम्भि अलाभि। लम्भं लम्भम् लाभं लाभम्। अप्रादेरिति किम्? प्रालम्भि। प्रलम्भं प्रलम्भम्।

[विभाषा चिण्णमुलोः। पा० ७।१।६९। चिण्णमुलोरनुपसर्गस्य। वा० १। चिण्णमुलोरनुपसर्गस्य वा। स० ६।४।२२]

**पुंसुट्युगितः** ॥२४॥

उगितः प्रकृतेः पुंसुटि परतो नुम् भवति। श्रेयान् श्रेयांसौ श्रेयांसः श्रेयांसम् श्रेयांसौ। पुंसीति किम्? श्रेयसी कुले। सुटीति किम्? श्रेयसः पश्य।

[उगिदचां सर्वनामस्थानेऽधातोः। पा० ७।१।७०। सुट्यधातुरुगितः पुंसि। स० ६।४।२३]

**अञ्चः** ॥२५॥ [अञ्चेः। स० ६।४।२४]

अञ्चतेरेवोगितो धातोः सुटि परतो नुम् भवति। प्राङ् प्राञ्चौ प्राञ्चः प्राञ्चम् प्राञ्चौ। अञ्च इति किम्? उखास्रत् पर्णध्वत्। कथं गोमत्यतेः क्विप् गोमानिति? भूवादिधातोर्नियमान्नुम् भविष्यति।

**युजेरसमासे** ॥२६॥ [पा० ७।१।७१, स० ६।४।२५]

युजेरसमासे सुटि परतो नुम् भवति। युङ् युञ्जौ युञ्जः युञ्जम् युञ्जौ। असमास इति किम्? अश्वयुक्।

[चान्द्रास्तु युजोऽसमासे इति पठन्ति। तन्त्रप्रदीप ७।१।७१]

**शावयमः** ॥२७॥ [स० ६।४।२६]

यमन्तादन्यस्य शौ परतो नुम् भवति। श्रेयांसि महान्ति उदश्विन्ति कुण्डानि वनानि। शाविति किम्? श्रेयसी कुले। अयम इति किम्? चत्वारि अहानि।

[ नपुंसकस्य झलच । पा० ७।१।७२ ]

**बहूर्जि बहूर्ञ्जि** ॥२८॥ [स० ६।४।२७]

बहूर्ज शौ परतोऽन्यात्पूर्वो नुमागमो वा भवति। बहूर्जि बहूर्ञ्जि।

[ तत्र बहूर्जि प्रतिषेध । अन्त्यात्पूर्वं नुममेके। पा० ७।१।७२।४-५ ]

**इकोऽचि सुपि** ॥२९॥

इगन्तस्याजादौ सुपि परतो नुम् भवति। दधिनी दधीनि। मधुनी मधूनी। नपुंसक एवाय विधिर्भवति, तत्प्रस्तावात्, भाषितपुंस्कस्य च वावचनात्। तस्माद् दीर्घीभूताच्ङसो न पुसि [५।१।११०] इति लिङ्गात्, पुसीति च नत्वे विशेषणात् स्त्रियामपि दीर्घत्वेन भवितव्यम्। अत पारिशेष्यान्नपुसक एवाय विधिर्भवति। इक इति किम्? कुण्डे। अचीति किम्? हे त्रपो। अस्मादेव वचनाद् अलुकि [५।३।३] इति प्रतिषेधो नास्तीत्येद् भवति। सुपीति किम्? तौम्बुरवं चूर्णम्।

[ इकोऽचि विभक्तौ। पा०७।१।७३, नपुसकस्येकोऽचि सुपि। स०६।४।२८ ]

**उक्तपुंस्कस्य टादौ वा** ॥३०॥

भाषितपुस्कस्येगन्तस्य नपुंसकलिङ्गस्य तृतीयादावजादौ परतो नुम् वा भवति। कर्तृणा कुलेन, कर्त्रा। शुचिने कुलाय, शुचये। उक्तपुंस्कस्येति किम्? वारिणा वारिणे। टादाविति किम्? ग्रामणिनी कुले।

[ तृतीयादिषु भाषितपुस्क पुवद्गालवस्य। पा० ७।१।७४, गुणष्टादौ पुवद्वा। स० ६।४।२९ ]

✓ **अस्थिदधिसक्थ्यक्ष्णामनङ्** ॥३१॥ [०उदात्त०। पा०७।१।७५]

अस्थ्यादीना टादावजादौ सुपि परतोऽनडादेशो भवति। अस्थ्ना दध्ना सक्थ्ना अक्ष्णा।

[ अस्थिदधिसक्थ्यक्ष्णा तदन्तानाञ्चानङ्। स० ६।४।३० ]

**नाज्झेः शतुः ॥३२॥**

अद्भूतो झिर्यस्या प्रकृतेस्तत परस्य शतुर्नुम् *न भवति। ददत् दधत् जक्षत् जाग्रत। अज्झेरिति किम्? लिहन्।

[ नाभ्यस्ताच्छतु । पा० ७।१।७८, स० ६।४।३१। *भवति न—L ]

**शौ वा ॥३३॥** [म० ६।४।३२]

अज्झे परस्य शतु शौ परतो नुमागमो वा भवति। ददन्ति कुलानि, ददति कुलानि। जाग्रन्ति कुलानि, जाग्रति कुलानि।

[ वा नपुसकस्य। पा० ७।१।७९ ]

**आच्छीङ्योः ॥३४॥** [म० ६।४।३३]

अवर्णान्तात्परस्य शतु शीङीत्येतयो· परतो नुम् वा भवति। तुदन्ती कुले, तुदती कुले। तुदन्ती ब्राह्मणी, तुदती ब्राह्मणी।

[ आच्छीनद्योर्नुम्। पा० ७।१।८० ]

**शप्श्यनः ॥३५॥**

शप. श्यनश्च परस्य शतु शीङीत्येतयोः परतो नुम् भवति, नित्यं पुनर्विधानात्। पचन्ती कुले, दीव्यन्ती कुले। पचन्ती ब्राह्मणी, दीव्यन्ती ब्राह्मणी।

[ शप्श्यनोर्नित्यम्। पा० ७।१।८१, स० ६।४।३४ ]

**सावनडुहः ॥३६॥** [पा० ७।१।८२, स० ६।४।३५]

सौ परतोऽनडुहो नुम् भवति। अनड्वान्। साविति किम्? अनड्वाहौ अनड्वाह।

**दिव औत्** ॥३७॥ [पा० ७।१।८४, स० ६।४।३६]

दिव सौ परत औद् भवति। द्यौ ।

**पथिमथ्यृभुक्षामात्** ॥३८॥ [पा० ७।१।८५, स० ६।४।३७]

पथ्यादीना सौ परत आद् भवति। पन्था मन्था ऋभुक्षा ।

**शिसुटयोः** ॥३९॥

पथ्यादीनामिकारस्य शौ सुटि च परत आद् भवति। [1]सुपन्थानि पन्थानौ पन्थान । बहुमन्थानि मन्थानौ मन्थान । बह्वृभुक्षाणि ऋभुक्षाणौ ऋभुक्षाण ।

[ इतोऽत्सर्वनामस्थाने। पा० ७।१।८६। शिसुब्येत्। स० ६।४।३८। [1]बहुपन्थानि Mss ]

**थो न्थः** ॥४०॥ [पा० ७।१।८७, स० ६।४।३९]

पथ्यादीना थकारस्य शिसुटि परतो न्थादेशो भवति। [1]सुपन्थानि पन्था, बहुमन्थानि मन्था ।

[ [1]L has बहुपन्थानि after Mss here and under the previous rule, but in this case there will come in the samāsānta *a* and the form will be बहुपथानि ]

**इनोऽचि लोपः** ॥४१॥ [स० ६।४।४०]

पथ्यादीनामिन्शब्दस्याजादौ सुपि परतो लोपो भवति शिसुटोऽन्यत्र सामर्थ्यात्। पथ पथा। मथ मथा। ऋभुक्षः ऋभुक्षा।

[ भस्य टेर्लोप । पा० ७।१।८८ ]

**पुंसोऽसुङ्** ॥४२॥ [पा० ७।१।८९, स० ६।४।४१]

पुंसः शौ सुटि च परतोऽसुङादेशो भवति। बहुपुमांसि पुमान् पुमांसौ पुमांस पुमांसम् पुमांसौ। शिसुटीत्येव। पुंसः पुंसा।

**गोरौः स्वार्थे** ॥४३॥

गोशब्दस्य स्वार्थे वर्तमानस्य सुटि परत औकारो भवति। गौ गावौ गाव । स्वार्थ इति किम्। हे चित्रगो हे चित्रगव । सुटीत्येव। गवा।

[ गोतो णित्। पा० ७।१।९०, ओत औत्। म० ६।४।४२ ]

**सख्युरशावैत्** ॥४४॥

सखिशब्दस्य शिवर्जिते सुटि परत ऐद् भवति। सखायौ सखाय । अशाविति किम्? अतिसखीनि। सुटीत्येव। सखीन्।

[ सख्युरसम्बुद्धौ। पा० ७।१।९२, सख्युरितोऽशावैत्। स० ६।४।४३ ]

**ऋदुशनस्पुरुदंसोऽनेहसां चानङ् सौ** ॥४५॥ [म० ६।४ ४४]

ऋकारान्तस्योशन प्रभृतीना च सखिशब्दस्य च सौ परतोऽनङा-देशो भवति। कर्ता उशना पुरुदसा अनेहा सखा।

[ अनङ् सौ। ऋदुशनस्पुरुदसोऽनेहसा च। पा० ७।१।९३-९४ ]

**न सम्बुद्धौ** ॥४६॥ [म० ६।४।४५]

ऋदादीना सावनङ् न भवति सम्बोधने। हे [1]पित, हे पुरुदश, हे अनेह, हे सखे।

[ सख्युरसम्बुद्धौ। ऋदुशनस्पुरुदशोऽनेहसा च। पा० ७।१।९२,९४। [1]कर्त v 1 ]

**वोशनसः** ॥४७॥ [अच्च वोशनस.। स० ६।४।४६]

उशनस सम्बोधने सावनङ् वा भवति। हे उशन हे उशनन्।

[ सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्।
माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुसके व्याघ्रपदां वरिष्ठ ॥ काशिका ]

**क्रुशस्तुनस्तृच्** ॥४८॥ [स० ६।४।४७]

क्रुश परस्य तुन. शिसुटि परतस्तृजादेशो भवति। बहुक्रोष्टृणि क्रोष्टा क्रोष्टारौ क्रोष्टार । शिसुटीत्येव। क्रोष्टून्।

[ तृज्वत् क्रोष्टु । पा० ७।१।९५। बहुक्रोष्टृणीत्युदाहरणन्तु ददानश्चन्द्रवृत्ति-

कारो आन्त। यतस्तृड्वद्भावात् पूर्वविप्रतिषेधेन नुम्नुटौ भवत इति भाष्यम्। गोयीचन्द्र ६।१।१७।]

**स्त्रियाम्** ॥४९॥ [स० ६।४।४९। ०च। पा० ७।१।९६]

स्त्रिया वर्तमानस्य क्रुश परस्य तुनस्तृजादेशो भवति। क्रोष्ट्री। पञ्चभिः क्रोष्ट्रीभि क्रीतै रथै पञ्चक्रोष्ट्रीभी रथै। तृतीयादिपु तुनन्तस्य तृजन्तस्य च प्रयोगो भविष्यति। क्रोष्टुना क्रोष्ट्रा।

[विभाषा तृतीयादिष्वचि। पा०७।१।९७, टादावजादौ वा। स०६।४।४८। यदाह चन्द्र.—व्यञ्जने (?) रूपद्वयमिष्ट तुनन्तस्य तृजन्तस्य च। कातन्त्र-परिशिष्ट-टीका २।१४]

**चतुरनडुहोराम्** ॥५०॥ [०उदात्त। पा० ७।१।९८]

चतुरोऽनडुहश्च शिसुटि परत आमागमो भवति। चत्वारि चत्वार। प्रियचत्वा प्रियचत्वारौ। अनड्वान् अनड्वाहौ। वह्वनड्वाहि कुलानि। शिसुटीत्येव। चतुर अनडुह.।

[आमनडुहो वा। चतुरश्च शिसुटि। स० ६।४।५०-५१]

**अम् सौ सम्बुद्धौ** ॥५१॥ [अम् सम्बुद्धौ। पा० ७।१।९९, स० ६।४।५२]

चतुरोऽनडुहश्च सौ परत सम्बोधनेऽमागमो भवति। हे प्रियचत्वः हे अनड्वन्। साविति किम्? हे अनड्वाहौ हे अनड्वाह। सम्बुद्धाविति किम्? अनड्वान्।

**अष्टनो वा सुप्यात्** ॥५२॥ [स० ६।४।५३]

अष्टन सुपि परत आद् वा भवति। अष्टाभि अष्टभिः। सुपीति किम्? अष्टक सङ्घ'। अलुकीत्येव। अष्ट।

[अष्टन आ विभक्तौ। पा० ७।२।८४। विकल्पेनायमाकारो भवतीत्येतज्-ज्ञापितम् अष्टनो दीर्घात् [६।१।१७२] इति दीर्घग्रहणात्, अष्टाभ्य औश् [७।१।२१] इति च कृतात्वस्य निर्देशात्। तेन अष्टभि. अष्टभ्य इत्यपि भवति। काशिका।]

**रायो हलि** ॥५३॥ [पा० ७।२।८५, स० ६।४।५४]

रैशब्दस्य हलादौ सुपि परत आद् भवति। राभ्याम् राभिः। हलीति किम्? रायौ रायः। सुपीत्येव। रैत्वम् रैता।

**युष्मदस्मदोरनादेशे** ॥५४॥ [पा० ७।२।८६, स० ६।४।५५]

अनादेशे सुपि परतो युष्मदस्मदोराद् भवति। युवाभ्याम् आवाभ्याम्। युष्माभिः अस्माभिः। युष्मासु अस्मासु। अनादेश इति किम्? युष्मत् अस्मत्।

**औशसमसु** ॥५५॥ [स० ६।४।५६]

औकारे शस्यमि च परतो युष्मदस्मदोराद् भवति। युवां तिष्ठथः, आवां तिष्ठावः। युवां पश्य, आवां पश्य। युष्मान् अस्मान्। त्वाम् माम्।

[ द्वितीयायां च। प्रथमायाश्च द्विवचने भाषायाम्। पा० ७।१।८७-८८ ]

**योऽचि** ॥५६॥ [पा० ७।२।८९, स० ६।४।५७]

अजादौ सुपि परतो युष्मदस्मदोर्यकारादेशो भवति। त्वया मया। त्वयि मयि। युवयोः आवयोः। अनादेश इत्येव। त्वत् मत्।

**शेषे लोपोऽदः** ॥५७॥

यत्र नात्त्वं न यकारस्तस्मिन् सुपि परतो युष्मदस्मदोरच्छब्दस्य लोपो भवति। त्वम् अहम्। यूयम् वयम्। तुभ्यम् मह्यम्। युष्मभ्यम् अस्मभ्यम्। त्वत् मत्। युष्मत् अस्मत्। तव मम। युष्माकम् अस्माकम्।

[ शेषे लोपः। पा० ७।२।९०, स० ६।४।५८ ]

**मान्तस्य युवावौ द्विवचने** ॥५८॥ [स० ६।४।५९]

द्विवचने वर्तमानयोर्युष्मदस्मदोर्मान्तस्य शब्दरूपस्य युवावौ भवतः। युवाम् आवाम्। युवाभ्याम् आवाभ्याम्। युवयोः आवयोः। मान्तस्येत्ययमधिकारः।

[ मपर्यन्तस्य। युवावौ द्विवचने। पा० ७।२।९१-९२ ]

**यूयवयौ जसि** ॥५९॥ [पा० ७।२।९३, स० ६।४।६०]

युष्मदस्मदोर्जसि परतो मान्तस्य यूयवयौ भवत । यूयम् वयम् ।

**त्वाहौ सौ** ॥६०॥ [पा० ७।२।९४, स० ६।४।६१]

सौ परतो युष्मदस्मदोस्त्व अह इत्येतावादेशौ भवत । त्वम् अहम् ।

**तुभ्यमह्यौ ङयि** ॥६१॥ [पा० ७।२।९५, स० ६।४।६२]

ङयि परतो युष्मदस्मदोस्तुभ्यमह्यौ भवत । तुभ्यम् मह्यम् ।

**तवममौ ङसि** ॥६२॥ [पा० ७।२।९६, स० ६।४।६३]

ङसि परतो युष्मदस्मदोस्तवममौ भवत । तव मम ।

**त्वमावेकस्मिन्** ॥६३॥ [स० ६।४।६४]

एकस्मिन्नर्थे वर्तमानयोर्युष्मदस्मदोस्त्व म इत्येतौ भवत । त्वाम् माम् । त्वया मया । त्वत् मत् । त्वयि मयि । त्वदीय मदीय । त्वत्पुत्रः मत्पुत्र. ।

[ त्वमावेकवचने । पा० ७।२।९७ ]

**त्रिचतुरोः स्त्रियां तिसृचतसृ** ॥६४॥ [पा० ७।२।९९, स० ६।४।६६]

त्रिचतुरोः स्त्रिया वर्तमानयो. सुपि परतस्तिसृ चतसृ इत्येतावादेशौ भवत । तिसृभि चतसृभि. ।

**तिसृका** ॥६५॥ [०संज्ञायाम् । स० ६।४।६७]

तिसृकेति संज्ञाया निपात्यते । तिसृका नाम ग्राम ।

[ तिसृभावे संज्ञायां कन्युपसंख्यानम् । पा० ७।२।९९।१ ]

**ऋतो रोऽचि** ॥६६॥ [स० ६।४।६८]

त्रिचतुरोर्ऋत सुप्यजादौ परतो रो भवति । तिस्र. चतस्रः ।

[ अचि र ऋत. । पा० ७।२।१०० ]

**जराया जरम् वा** ॥६७॥ [स० ६।४।६९]

जराशब्दस्याजादौ सुपि परतो जरमादेशो भवति वा। जरसा दन्ता शीर्यन्ते, जरया वा।

[जराया जरसन्यतरस्याम्। पा० ७।२।१०१]

**त्यदां तमादिषु चा द्वेरः** ॥६८॥ [त्यदादीना। स०६।४।७०]

त्यदादीना द्विपर्यन्ताना सुपि तमादिषु च परतोऽकारो भवति। स्य त्यौ त्ये। स तौ ते। तत तत्र तदा तथा। आ द्वेरिति किम्? भवान्। तसादिषु चेति किम्? त्यदीय.। अलुकीत्येव। तत् यत्।

[त्यदादीनाम। पा० ७।२।१०२। त्यदादीना द्विपर्यन्तानामकारवचनम्। वा० १]

**किमः कः** ॥६९॥ [पा० ७।२।१०३, स० ६।४।७१]

किमस्तसादिषु सुपि च परत कादेशो भवति। क कौ के कदा *कथम् कर्हि।

[*कथा Mss , but कथा is Vedic]

**तः सः सौ** ॥७०॥ [तस्य स सौ। स० ६।४।७२]

त्यदादीना तकारस्य सौ परत सकारादेशो भवति। स्य सः एषः। साविति किम्? तौ।

[तदो स सावनन्त्ययो। पा० ७।२।१०६]

**असावसुकोऽसकौ** ॥७१॥

एते शब्दा अदस सौ तदन्तस्य निपात्यन्ते। असौ। साकच्कस्य। असुक असकौ।

[तदो स सावनन्त्ययो। अदस औ सुलोपश्च। पा० ७।२।१०६-१०७। सावौत्वप्रतिषेध साकच्काद्वा सादुत्व च। ७।२।१०७।१। अदसो द। औ सुलोपश्च। अकचि वानौत्वे सादुश्च। स० ६।४।७३-७५]

**[*]इदम् अयम् इयम्** ॥७२॥

एते शब्दा इदम सौ तदन्तस्य लिङ्गत्रये निपात्यन्ते। [*]इदम् अयम् इयम्।

[इदमो म। य सौ। इदोऽय् पुंसि। पा० ७।२।१०८,११०-१११। इदमः स्त्रीपुंसयोरियमयमौ। स० ६।४।७६। [*]Could the rule originally have been अयम् इयम्? L points out that one Ms reads अयम् इयम् इदम् in the Vrtti I am inclined to read अयमियम् in the sūtra and the Vrtti and to emend लिङ्गत्रये into लिङ्गद्वये. Maitreya Raksita reads इदमोऽयमियम् in Tantrapradīpa vii 2 108]

**दो मः** ॥७३॥ [स० ६।४।७७। दश्च। पा० ७।२।१०९]

इदमो दकारस्य सुपि परतो मकारो भवति। इमौ इमे।

**टौस्यकोऽनः** ॥७४॥

टाकार ओसि च परतोऽककारस्येदमोऽनादेशो भवति। अनेन अनयो। अक इति किम्? इमकेन।

[अनाप्यक। पा० ७।२।११२। टौसोरन। स० ६।४।७९]

**हल्यश्** ॥७५॥

हलादौ सुपि परत इदमोऽशादेशो भवति। एभि आभ्याम्। अक इत्येव। इमकै।

[हलि लोप। पा० ७।२।११३। हल्यनकोऽश्। स० ६।४।७८]

**एतस्य चान्वादेशे द्वितीयायां चैनः** ॥७६॥ [स० ६।४।८०]

एतच्छब्दस्य य एतशब्दस्तस्येदमश्च कथितानुकथनविषये द्वितीयाया विभक्तौ टौसि च परत एनादेशो भवति। एतं छात्रं वेदमध्यापय, अथो एनं व्याकरणमध्यापय। एतत् कुण्डमानय, अथो एनत्परिवर्तय। एतौ छात्रौ वेदमध्यापय, अथो एनौ व्याकरणमध्यापय। एताश्छात्रान् वेद-

मध्यापय, अथो एनान् व्याकरणमध्यापय। एतेनच्छात्रेण रात्रिरधीता, अथो एनेन निपुणमधीतम्। एतयोश्छात्रयो शोभनं शीलम्, अथो एनयो प्रभूतं स्वम्। एतयोर्ग्रामयो सुखमवसाम, अथो एनयो सम्यग् यजामहे। एवमिदमोऽपि योज्यम्। अयं तु विशेष.। इदं कुण्डमानय, अथो एनं परिवर्तयेति मकारान्त एव भवति[1]। तृतीयादिषु त्रतसोश्चेदम एवान्वादेशेऽपि प्रयोगो भविष्यति। कुत [४।३।८] अत [४।३।८] अत्र [४।३।११] इति निपातनात् सिद्धम्।

[इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ। द्वितीया टौस्स्वेन। पा० २।४।३२,३४। तृतीयादावश्। स० ६।४।८१। [1]This is extremely doubtful नपुंसकैकवचन एनदिति वार्तिकम् (ii 4 34 1) Kātantra-pariśiṣta ii 6 ]

## पन्निश्मास्हृद्यूषन्दोषन् शसादौ वा ॥७७॥

शसादौ सुपि परत पादादीना स्थाने पदादय आदेशा वा भवन्ति। पद्भ्याम् पादाभ्याम्। निशि निशायाम्। मासि मासे। हृदि हृदये। यूष्णा यूषेण। दोष्णा दोषा। शसादाविति किम्? पाद निशा मास हृदयम् यूष दो।

[पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु। पा० ६।१।६३। पादनिशामासहृदययूषदोषा पन्निश्नास्हृद्यूषन्दोषन् शसादौ वा। स० ६।४।८२। भागवृत्तिकृता छान्दस वचनमित्यभ्युपगतम्। नैतन्मतमाद्यानां वृत्तिकृता न च चन्द्रस्य। स्मार्ताश्च भाषायामपि प्रयुक्तवन्त। शस्प्रभृतिष्वित्याचार्यं, शसादाविति चन्द्रश्च पठति। तयोर्नपुंसकादीकारे न भवितव्यमिति मतम्। कातन्त्रपरिशिष्टम् २।१६ ]

## लिङाशीर्लिङतिङ्शिति ॥ ७८॥

लिङ्याशीर्लिङयतिङयशितीति च प्राक् तिङ्ग्रहणाद् [ १७२ ] एतदधिकृत वेदितव्यम्।

[ आर्धधातुके। पा० २।४।३५, स० ६।४।८३ ]

## अस्तेर्भूः ॥७९॥ [पा० २।४।५२, स० ६।४।८४]

अस्तेर्लिडादिषु भूरादेशो भवति। बभूव भूयात् भविता। लुका निर्देश किम्? अस्यतेर्मा भूत। असिता। कथ कारयामास? कृभ्वस्तिभ्यो लिडनुप्रयोगवचनात् [१।१।५१]। लिडादिष्वित्येव। स्यात् अस्ति सन्।

**[अनुप्रयोगे तु भुवास्त्यबाधन स्मरन्ति कर्तुर्वचनान्मनीषिण। श्लो० वा० ६।४।११०]**

**ब्रुवो वच्** ॥८०॥ [०वचि। पा० २।४।५३, स० ६।४।८५]

ब्रुवो लिडादिषु परतो वचादेशो भवति। उवाच उचे उच्यात् वक्ता। लिडादिष्वित्येव। ब्रूयात् ब्रवीति ब्रुवन्।

**चक्षः ख्याञ्** ॥८१॥

चक्षेर्लिडादिषु ख्याञादेशो भवति। ख्यायात् ख्याता। लिडादिष्वित्येव। आचक्षीत आचष्टे आचक्षाण।

**[चक्षिङ ख्याञ्। पा० २।४।५४, चक्षिञ ख्याञवर्जने। स० ६।४।८६]**

**वा लिटि** ॥८२॥ [पा० २।४।५५, स० ६।४।८७]

लिटि परतश्चक्ष ख्याञादेशो वा भवति। आचख्यौ आचख्ये आचचक्षे।

**नासनवर्जनेषु** ॥८३॥

अस्यने च परतो वर्जने चार्थे चक्ष ख्याञादेशो न भवति। नृचक्षा· विचक्षण परिसञ्चक्ष्य। कथ व्याख्यानम्? ख्यातेर्भविष्यति।

**[वर्जने प्रतिषेध। असनयोश्च। पा० २।४।५४।९-१०। चक्षिङ ख्याञ-वर्जने। नोससनेषु। स० ६।४।८६,८८]**

**अजेर्व्ययुघञप्क्यपेषु** ॥८४॥

अजेर्लिडादिषु वीभावो भवति यु घञ् अप् क्यप् एतान् वर्जयित्वा। विवाय वीयात् प्रवेता वीन वीतवान्। अयुघञप्क्यपेष्विति किम्? प्राजनम् समाज· उदज समज्या। कथ प्रवयणम्? वी धात्वन्तरम्।

[अजेर्व्यघञपो. । पा० २।४।५६ । घञपो प्रतिषेधे क्यप उपसंख्यानम् । वा० १ । वा यौ । ६।४।५७ । अजेर्व्यघञप्क्यप्सु । तृच्वोर्वा । स० ६।४।८९-९० ]

**ति कित्यदो जग्धः** ॥८५॥

तकारादौ किति परतोऽदो जग्धादेशो भवति । जग्धः जग्ध्वा । तीति किम्? अद्यते । कितीति किम्? अत्ता ।

[ ८५-८६ । अदो जग्धिर्ल्यप्ति किति । पा०२।४।३६ । ल्यप्तिकित्यदो जग्धि. । स० ६।४।९२ ]

**ल्यपि** ॥८६॥

अत्तेर्ल्यपि परतो जग्धादेशो भवति । प्रजग्ध्य । ति कितीति सिद्धे ल्यपि पुनर्वचनाल्लिङ्गादुपदेशावस्थायामेव ल्यब् भवति । तेन हित्वदत्त्वात्त्वेत्त्व-दीर्घत्वशृडिटो न भवन्ति । हित्वा, प्रधाय । दत्त्वा, प्रदाय । खात्वा, प्रखन्य । स्थित्वा, प्रस्थाय । शान्त्वा, प्रशम्य । पृष्ट्वा, आपृच्छ्य । द्यूत्वा, प्रदीव्य । देवित्वा, प्रदीव्य ।

**लुङ्सनज्घञप्सु घस्लृ**[*] ॥८७॥ [स० ६।४।९२]

लुङि सन्यचि घञ्यपि च परतोऽत्तेर्घस्लादेशो भवति । अघसत् जिघत्सति प्रघस घास विघस । धात्वन्तरेण सिद्धेऽदिनिवृत्त्यर्थं वचनम् । लिटि तु द्वयमपि भवति । आद जघास ।

[ लुङ्सनोर्घस्लृ । पा० २।४।३७ । घस्लृभावेऽच्युपसंख्यानम् । वा० १ । घञपोश्च । २।४।३८ । *घस्लृ L ]

**वेञो लिटि वय् वा** ॥८८॥

वेञो लिटि परतो वयादेशो वा भवति । उवाय ववौ ।

[ लिट्यन्यतरस्याम् । वेञो वयि । पा० २।४।४०-४१ । लिटि वा । वेञो वयि । स० ६।४।९३-९४ ]

**हनो वध लिङि** ॥८९॥ [पा० २।४।४२, स० ६।४।९५]

हन्तेर्लिङि परतो वधादेशो भवति । वध्यात् । आशिषीत्येव । हन्यात् ।

**लुङि** ॥९०॥ [०च। पा० २।४।४३, स० ६।४।९६]

लुङि परतो हन्तेर्वधादेशो भवति। अवधीत्। वधेरदन्तत्वादाद् न भवति।

**तङि वा** ॥९१॥

लुङि तङ्भूते परतो हन्तेर्वधादेशो वा भवति। आवधिष्ट आहत।

[आत्मनेपदेष्वन्यतरस्याम्। पा० २।४।४४। आत्मनेपदे वा। स०६।४।९७]

**एतेर्गाः** ॥९२॥

इङ इकश्च लुङि परतो गादेशो भवति। अगात् अध्यगात्।

[इणो गा लुङि। पा० २।४।४५। इण्वदिक। वा० १। इणिकोर्गा। स० ६।४।९८]

**णौ गमबोधे** ॥९३॥

अबोधे वर्तमानस्य इण इकश्च णौ परतो गमादेशो भवति। गमयति ग्रामम्। अधिगमयति प्रियाम्। अबोध इति किम्? अर्थान् सम्प्रत्याययति।

[णौ गमिरबोधने। पा० २।४।४६। ०बोधे। स० ६।४।९९। 'प L]

**सनि** ॥९४॥ [स० ६।४।१००। ०च। पा० २।४।४७]

इण इकश्च सनि परतो गमादेशो भवति। जिगमिषति ग्रामम्। अधिजिगमिषति प्रियाम्। अबोध इत्येव। अर्थान् सप्रतीषिषति।

**इङः** ॥९५॥ [०च। पा० २।४।४८, स० ६।४।१०१]

इङ सनि परतो गमादेशो भवति। अधिजिगांसते विद्याम्।

**गाङ् लिटि** ॥९६॥ [पा० २।४।४९, स० ६।४।१०२]

लिटि परत इङो गाङादेशो भवति। अधिजगे।

**वा लुङ्लृङोः** ॥९७॥

लुङि लृङि च परत इङो गाङादेशो भवति वा। अध्यगीष्ट अध्यैष्ट। अध्यगीष्यत अध्यैष्यत।

[विभाषा लुङ्लृङोः। पा० २।४।५०। लुङ्लृङोर्वा। स० ६।४।१०३]

**णौ संश्चङोः** ॥९८॥ [स० ६।४।१०४]

णौ सन्परे चङ्परे च परत इङो गाङादेशो वा भवति। अधिजिगापयिषति अध्यापिपयिषति। अध्यजीगपत् अध्यापिपत्। सश्चङोरिति किम्? अध्यापयति।

[णौ च संश्चङो। पा० २।४।५१]

**वलादेरिट्** ॥९९॥ [स० ६।४।१०५]

वलादेर्लिट आशीर्लिङोऽतिङोऽशितश्चेडागमो भवति। लुलविथ लविषीष्ट लविता। तिङ्सदृशस्य ग्रहणात्त्रादीना न भवति। लूभ्याम् लूभिः।

[आर्धधातुकस्येड् वलादेः। पा० ७।२।३५]

**ग्रहोऽस्यालिटीट्** ॥१००॥

ग्रह परस्यास्येटोऽलिटि परत ईकारो भवति। ग्रहीता। अस्येति किम्? चिण्वदिटो [५।३।७३] मा भूत्। ग्राहिष्यते। अलिटीति किम्? जगृहिव जगृहिम।

[ग्रहोऽलिटि दीर्घः। पा० ७।२।३७, चिण्वदिट प्रतिषेध। वा० ३। ग्रहेरस्यालिटि दीर्घः। स० ६।४।१०६]

**वॄतो वा** ॥१०१॥ [पा० ७।२।३८। वॄद्भ्यो वा। स० ६।४।१०७]

वृङ्वृञोर्ॠकारान्ताच्च परस्येट ईदादेशो वा भवति। वरीता वरिता। प्रावरीता प्रावरिता। आस्तरीता आस्तरिता।

**न लिङि** ॥१०२॥ [पा० ७।२।३९, स० ६।४।१०८]

लिङि परतो वॄत परस्येट ईत्त्व न भवति। वरिषीष्ट प्रावरिषीष्ट आस्तरिषीष्ट।

**सिच्यत्यङि** ॥१०३॥

अतङ्परे सिचि परतो वॄत परस्येट ईत्त्व न भवति। प्रावारिष्टाम् आस्तारिष्टाम्। अतङीति किम्? अवरीष्ट अवरिष्ट।

[सिचि च परस्मैपदेषु। पा० ७।२।४०। सिचि परस्मैपदे। स० ६।४।१०९]

**इट् मनो वा** ॥१०४॥ [स० ६।४।११०, ०सनि० । पा० ७।२।४१]

वृत परस्य सन इडागमो वा भवति। विवरिषते वुवूर्षते। प्राविवरिषति प्रावुवूर्षति। निपिपरिषति निपुपूर्षति।

**लिङ्सिचोस्तङि** ॥१०५॥

वृत परस्य लिङ सिचश्च तङ्विषय इड् वा भवति। वरिषीष्ट वृषीष्ट। आस्तरिषीष्ट आस्तीर्षीष्ट। आवरिष्ट आवृत। आस्तरिषाताम् आस्तीर्षाताम्।

**[ लिङ्सिचोरात्मनेपदेषु। पा० ७।२।४२, स० ६।४।१११ ]**

**ऋतः संयोगादेः** ॥१०६॥

ऋकारान्तात् सयोगादे परयोर्लिङ्सिचोस्तङीड् वा भवति। स्मरिषीष्ट स्मृषीष्ट। अस्मरिषाताम् अस्मृषाताम्। औपदेशिकसयोगग्रहणादिह न भवति। सस्कृषीष्ट समस्कृत।

**[ ऋतश्च संयोगादे.। पा० ७।२।४३, ऋत सयोगादेरसुट। स० ६।४।११२ ]**

**स्वृसूङ्घूदितः** ॥१०७॥

स्वरते· सूते सूयतेरूदितश्च परस्य वलादेरिड् वा भवति। स्वरिता स्वर्ता। सविता सोता। मार्जिता मार्ष्टा। अनुबन्ध किम्? सुवते सविता। कथं विधोता विधवितेति? धुवा धूञा च सिद्धम्।

**[ स्वरतिसूतिसूयतिधूञूदितो वा। पा० ७।२।४४, ०धूञूदिद्भ्य। स० ६।४।११३ ]**

**रधादिभ्यः** ॥१०८॥ [०च। पा० ७।२।४५]

रध इत्येवमादिभ्य· परस्य वलादेरिड् वा भवति। रधिता रद्धा। नशिता नष्टा। तर्पिता त्रप्ता। दर्पिता द्रप्ता। द्रोहिता द्रोग्धा। मोहिता

मोग्धा । स्नोहिता स्नोग्धा । स्नेहिता स्नेग्धा । लिटि स्नादिनियमात् [१५८] परत्वादिट् । ररन्धिव ररन्धिम ।

[ रधनशतृपदृपद्रुहमुहस्नुहस्निहिभ्य । स० ६।४।११४ ]

**निष्कुषः** ॥१०९॥ [निर· कुष·। पा०७।२।४६, स०६।४।११५]

निष्कुष परस्य वलादेरिड् वा भवति । निष्कोषिता निष्कोष्टा ।

**ततवतोः** ॥११०॥

निष्कुष परयो क्तक्तवत्वोरिड् भवति, नित्यं पुनर्विधानात्, यतोऽपतिनिष्कुषो वा [१४०] इति तत्रावचनात् । निष्कुषित निष्कुषितवान् ।

[ इण् निष्ठायाम् । पा० ७।२।४७, निष्ठाया । स० ६।४।११६ ]

**पूक्लिशस्त्वश्च** ॥१११॥

पुव क्लिशश्च परयो क्तक्तवत्वो. क्त्वश्च इड् वा भवति । उत्तरत्र नित्यार्थं वचनादिट् । पविन्वा पूत्वा । क्लिशित्वा क्लिष्ट्वा । पवित पवितवान्, पूत पूतवान् । क्लिशित क्लिशितवान्, क्लिष्ट क्लिष्टवान् ।

[ क्लिश क्त्वानिष्ठयो । पूङश्च । पा० ७।२।५०-५१ । पूङ्क्लिशिभ्या क्त्वश्च । स० ६।४।११७ । Goyī reads this rule as पूङ्क्लिशो क्त्विव च under Sam ii 746 ]

**वसक्षुध इट्** ॥११२॥

वसिक्षुधिभ्या परयो क्तक्तवत्वो क्त्वश्च इडागमो भवति । उषित्वा उषित उषितवान् । क्षुधित्वा क्षुधित क्षुधितवान् । वस्तेरिडस्त्येव ।

[ वसतिक्षुधोरिट् । पा० ७।२।५२, क्षुधिवसिभ्यामिट् । स० ६।४।११८ ]

**अञ्चो ने** ॥११३॥

नकारे सत्यञ्चते परस्य क्त्व क्तक्तवत्वोश्च इड् भवति । अञ्चित्वा जानु जुहोति । अञ्चितमित्र शिरो वहति । उञ्चितवान । नाञ्च पूजायम् [५।३।५०] इति नलोपाभाव । न इति किम् ? उदक्तमुदक कूपात् ।

[अञ्चे पूजायाम्। पा० ७।२।५३, अञ्चते पूजायाम्। स० ६।४।११९। चान्द्रा अञ्चेर्णे (अञ्चो ने) इति सूत्रं पठन्ति। अस्यायमर्थ.—अञ्चतेर्णके सति इडागमो भवति। नकारस्तु नाञ्चे पूजायाम् इति नलोपप्रतिषेधात् पूजायामेव श्रूयते इति तत्रैव स्थित इडागम। तन्त्रप्रदीप।]

**लुभ आकुले** ॥११४॥

लुभे परयो क्तक्तवत्वो क्त्वश्चाकुले गम्यमान इड् भवति। विलुभिता केशा। विलुभितवान्। आकुल इति किम्? लुब्धो वृषल।

[लुभो विमोहने। पा० ७।२।५४, स० ६।४।१२०]

**जॄषस्त्वः** ॥११५॥ [स० ६।४।१२१]

जॄष परस्य क्त्वा इत्येतस्य इड् भवति। जरित्वा जरीत्वा।

[११५-११६। जॄव्रश्च्यो क्त्वि। पा० ७।२।५५]

**व्रश्चित्वा** ॥११६॥

व्रश्चित्वेत्यय शब्दो निपात्यते।

[व्रश्चेरसम्प्रसारण च। स० ६।४।१२२]

**उदितो वा** ॥११७॥ [पा० ७।२।५६, स० ६।४।१२३]

उदित. परस्य क्त्वा इत्येतस्य इड् वा भवति। शमित्वा शान्त्वा।

**तीषुसहलुभरुषरिपः** ॥११८॥ [तीष० । पा० ७।२।४८]

इच्छत्यादिभ्य परस्य तकारादेर्वलादेरिड् वा भवति। एषिता एष्टा। सहिता सोढा। लोभिता लोब्धा। रोषिता रोष्टा। रेषिता रेष्टा। तीति किम्? सहिष्यते। इषु इत्युता निर्देशादिष्यतेरिष्णातेश्च न भवति। प्रेषिता। पञ्चमी तीति सप्तम्या षष्ठीं प्रकल्पयति परबलीयस्त्वात्।

[तादे सहलुभेषुरुषरिषिभ्य। स० ६।४।१२०]

**सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनितनिपतिदरिद्रः** ॥११९॥

इवन्तादृध्यादिभ्यश्च परस्य सन इड् वा भवति। दिदेविषति *दुद्यूषति। अर्दिदिषति ईर्त्सति। बिभ्रज्जिषति बिभ्रक्षति। दिदम्भिषति धिप्सति। शिश्रयिषति शिश्रीषति। सिस्वरिषति सुस्वूर्षति। यियविषति युयूषति। प्रोर्णुनविषति प्रोर्णुनूषति। बिभरिषति बुभूर्षति। ज्ञपा निर्देशादन्यस्य न भवति। बुभूर्षति। ज्ञीप्सति जिज्ञापयिषति। सिसनिषति सिषासति। तितनिषति तितंसति। पिपतिषति पित्सति। दिदरिद्रिषति दिदरिद्रासति।

[ सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्। पा० ७।२।४९। केचिदत्र ०भरज्ञपिसनितनिपतिदरिद्राणामिति पठन्ति। काशिका। इवन्तर्धभ्रस्जदम्भुस्वृश्रियूर्णुभरज्ञपिसनितनिपतिदरिद्राभ्यः सनः। स० ६।४।१२५। *दिद्यूषति— Mss ]

**स्यसिचिकृतचृतच्छृदतृदनृतः** ॥१२०॥ [सेऽसिचि०। पा० ७।२।५७। सादेरसिच०। स० ६।४।१२६]

कृतादिभ्यः परस्य सकारादेरसिच इड् वा भवति। कर्तिष्यति कर्त्स्यति। चर्तिष्यति चर्त्स्यति। छर्दिष्यति छर्त्स्यति। तर्दिष्यति तर्त्स्यति। नर्तिष्यति नर्त्स्यति। सीति किम्? कर्तिता। असिचीति किम्? अकर्तिष्टाम्।

**अनिङ्गमेरिट्** ॥१२१॥ [स० ६।४।१२७]

अनिङादेशाद् गमेः परस्य सकारादेरिड् भवति। गमिष्यति जिगमिषति जिगमिषिता सञ्जिगमिषिता। अनिङ्गमेरिति किम्? अधिजिगांसिता।

[ १२१-१२२। गमेरिट् परस्मैपदेषु। पा० ७।२।५८, गमेरिट् परस्मैपदेषु चेत्कृत्युपसंख्यानम्। वा० १ ]

**न तङानैः** ॥१२२॥

तङानैः सह प्रयोगे गमेः परस्य सकारादेरिड् न भवति। सञ्जिगंसते

सञ्जिगंसमाना । समो गमृच्छीत्यादिना [१।४।७१] तङ् । सञ्ज्स्यते सञ्ज्स्यमान सञ्ज्मीष्ट ।

[नात्मनेपदेषु । स० ६।४।१२८]

**वृद्भ्य इट् ॥१२३॥**

वृतादिभ्य परस्य सकारादेश्च तङानैरेव सह प्रयोग इडागमो भवति । वर्तिष्यते वर्तिष्यमाण । विवर्तिषते विवर्तिषमाण । वर्धिष्यते वर्धिष्यमाण. । विवर्धिषते विवर्धिषमाण । तङानैरित्येव । वर्त्स्यति विवृत्सति विवृत्सिता ।

[न वृद्भ्यश्चतुर्भ्यः । पा० ७।२।५९ । वृतिवृधिश्वधिस्यन्दिभ्योऽन्यत्र । स० ६।४।१२९]

**तासश्च क्लृपः ॥१२४॥**

क्लृप परस्य तास सकारादेश्च तङानैरेव सह प्रयोग इड् भवति । कल्पितासे कल्पिष्यते चिकल्पिषते । तङानैरित्येव । कल्प्ता कल्प्स्यति चिक्लृप्स्यति चिक्लृप्सिता ।

[तासि च क्लृप । पा० ७।२।६० । तासश्च कृप । स० ६।४।१३०]

**न स्नोः ॥१२५॥**

तङानै सह प्रयोगे स्नो परस्य तास सकारादेश्च इड् न भवति । प्रस्नोष्यते प्रस्नोष्यमाण प्रस्नोतासे । तङानैरित्येव । प्रस्नविता ।

[१२५-१२६ । स्नुक्रमोरनात्मनेपदनिमित्ते । पा० ७।२।३६ । स्नोरात्मनेपदे । स० ६।४।१३१]

**क्रमः ॥१२६॥** [स० ६।४।१३२]

तङानै सह प्रयोगे क्रम परस्य तास सकारादेश्च इड् न भवति । प्रक्रंस्यते प्रक्रंस्यमान प्रक्रन्तासे । तङानैरित्येव । क्रमिता ।

**तङ्विषयात्कर्तर्यतिङः ॥१२७॥**

तङ्विषयात्क्रम परस्य कर्तृवृत्तेरतिङ इड् न भवति । प्रक्रन्ता ।

तङ्विषयादिति किम्? क्रमिता। कर्त्तरीति किम्? प्रक्रमितुम् प्रक्रमितव्यम्। अनिड इति किम्? प्रचक्रमिषे।

[ कर्तरि चात्मनेपदविषयात्कृति। पा० ७।२।३६।५। तद्विषयात्तु। स० ६।४।१३३। The correct reading would appear to be तङ्-विषयात्तु. ]

**वशि** ॥१२८॥

वशादेरतिड इड् न भवति। ईश्वरः भास्वरः। दीप्रः। भस्म। रक्षणः याच्ञा। स्वप्नः दण्डः। अनिड इत्येव। जग्मिवः।

[ नेड्वशि कृति। पा० ७।२।८। नवशुणादे कृत। स० ६।४।१३४ ]

**तेरग्रहादिभ्यः** ॥१२९॥

ग्रहादिवर्जितेभ्यः परस्य तेरिड् न भवति। तन्तिः रन्तिः वन्तिः। कथं सक्तुः पत्रम् हस्तः काष्ठम् कुक्षिः इक्षुः तसरः शल्कः वत्सः इति। औणादिका एते, यथा गर्भः दर्भः गुल्फः शर्करेत्यादि। ग्रहादिनिरासः किम्? निगृहीतिः उपस्निहितिः निकुचितिः निपठितिः। आकृति-गणत्वात्प्रभणितिरित्यादि।

[ तितुत्रतथसिसुसरकसेषु च। पा० ७।२।९। तितुत्रेष्वग्रहादीनाम्। वा० १। अवशुणादे कृत। क्तेरग्रह-स्निह-कुच-पठ-वद-भण-रण-दीधी-मथादिभ्यः। स० ६।४।१३४-१३५ ]

**एकाचोऽश्विश्रिडीशीङ्य्वादिषट्कात्** ॥१३०॥

एकाचः श्विश्रिडीशीङ्भिरूदन्तैर्यौत्यादिभिश्च षड्भिर्वर्जितादिड् न भवति। याता चेता नेता स्तोता कर्ता। एकाच इति किम्? दरिद्रिता आदीधीता वेविता प्रोर्णविता जागरिता। श्वयत्यादिपर्युदासः किम्? श्वयिता श्रयिता डयिता शयिता। लविता। यविता नविता क्ष्णविता प्रस्नविता क्षविता रविता। षट्कादिति किम्? कोता। श्वयत्यादिपर्युदासादुत्तरत्र हलन्तग्रहणाच्चेह न भवति। पठिता। कथं वरिता प्रावरिता आस्तरितेति? वृतो वा न लिङि [१०१-१०२] इति वचनात्।

[ एकाच उपदेशेऽनुदात्तात्। पा० ७।२।१०। इवर्णान्ताश्चाश्विश्रिडीशीदीधी-वेवीङ। उवर्णान्ता युरुणुक्षुक्ष्णुस्नूर्णुवर्जम्। ऋदन्ताश्चाजागृवृङ्वृञ। भाष्यम्। अच एकाचोनूदृच्छ्विश्रिडीङ्शीङ्युरस्नुनुक्षुक्ष्णुवृङ्वृञ। स० ६।४।१३६ ]

**सिधिवुधिस्विदिमणिपुषश्लिषः श्यना ॥१३१॥**

सिध्यत्यादिभ्य श्यनोपलक्षितेभ्य परस्य वलादेरिड् न भवति। सेद्धा बोद्धा स्वेत्ता मन्ता पोष्टा श्लेष्टा। श्यनेति किम्? सेधिता बोधिता स्वेदिता मनिता पोषिता श्लेषिता।

[ सदि-शदि-ह्रदि-च्छिदि-तुदि-स्विदि-भिदि-स्कन्दि-क्षुधि-खिद्यति-विन्दि-विद्यति-राधि-युधि-बुधि-शुधि-क्रुधि-रधि-साधि-व्यधि-बन्धि-सिध्यति-हनि-मन्यत-यस्तवर्गान्तानाम्। रुशि-रिशि-दिशि-विशि-लिशि-स्पृशि-दृशि-क्रुशि-मृशि-दशि-त्विषि-कृषि-श्लिषि-विषि-पिषि-तुषि-दुषि-द्विषि-घसि-वसि-दहि-दिहि-वहि-दुहि-नहि-रुहि-लिहि-मिहयश्चोष्मान्तानाम्। पा० ७।२।१० भाष्यम्। श्लिषि-पुषि-सिधि-बुधि-स्विदि-मन श्यना। स० ६।४।१३९ ]

**विदेरलुकः ॥१३२॥** [स० ६।४।१३८]

विदेरलुग्विकरणात्परस्य वलादेरिड् न भवति। वेत्ता। अलुक इति किम्? वेदिता शास्त्राणाम्।

**यरलाद् भः ॥१३३॥** [स० ६।४।१४६]

यरलेभ्य· परो यो भकारस्तदन्तात्परस्य वलादेरिड् न भवति। यब्धा रब्धा लब्धा। यरलादिति किम्? उम्भिता। भ इति किम्? लगिता।

[ तपि-तिपि-वपि-शपि-चुपि-लुपि-लिपि-स्वप्यापि-क्षिपि-सृपि-तृपि-दृपि-यभि-रभि-लभि-यमि-रमि-नमि-गमय पवर्गान्तानाम्। ७।२।१० भाष्यम्। ]

**यरनगान्मः ॥१३४॥** [स० ६।४।१४७]

यरनगादिभ्य· परो यो मकारस्तदन्तात्परस्य वलादेरिड् न भवति। यन्ता रन्ता प्रणन्ता गन्ता।

**शकादिभ्यः ॥१३५॥**

शक इत्येवमादिभ्य· परस्य वलादेरिडागमो न भवति। शक्ता घस्ता

वस्ता। शक्यतेर्वस्तेश्चेडस्त्येव। शकिता वसिता। शक्ल-घस्ल-वसति-हनिभ्यः। पचि-वचि-रिचि-विचि-मिचि-मुचि-प्रच्छ। दिशि-दृशि-विशि-लिशि-रिशि-रुशि-मृशि-स्पृशिभ्य। क्रुशो दंश। त्यजि-यजि-युजि-रुजि-निजि-विजि-भुजि-भजि-सृजि-सञ्जि-रञ्जि-भञ्जिभ्य। स्वञ्जि-मस्जि-भ्रस्जिभ्य। रुह-दुह-दिह-लिह-मिह-नह-दह-वह। अदि-हदि-शदि-सदि-तुदि-नुदि-भिदि-च्छिदि-क्षुदि-पदि-खिदि-स्कन्द। तप-तिप-शप-वप-लिप-लुप-सृप-स्वपा-ऽप-क्षिप-च्छुप। शुपि कृपि-पिपि-विपि-शिपिभ्य। तुषि-त्विषि-दुषि-द्विषिभ्य। व्यधि-युधि-रुधि-शुधि-वन्धि-क्रुधि-क्षुधे। राधि-साधिभ्या च।

[शकि कवर्गान्तानाम्। पचि-वचि-सिचि-मुचि-रिचि-विचि-प्रच्छि-यजि-भजि-सृजि-त्यजि-भुजि-भ्रस्जि-भञ्जि-रुजि-युजि-णिजि-विजि-सञ्जि-स्वञ्जयश्चवर्गान्तानाम्। सदि-शदि-हदि-च्छिदि-तुदि-स्विदि-भिदि-स्कन्दि-क्षुदि-खिद्यति-विन्दि-विद्यति-राधि-युधि-बुधि-शुधि-क्रुधि-रुधि-साधि-व्यधि-बन्धि-सिध्यति-हनि-मन्यतयस्तवर्गान्तानाम्। तपि-तिपि-वपि-शपि-चुपि-लुपि-लिपि-स्वप्यापि-क्षिपि-सृपि-तृपि-दृपि-यभि-रभि-लभि-यमि-रमि-नमि-गमय पवर्गान्तानाम्। रशि-रिशि-दिशि-विशि-ल्विशि-स्पृशि-दृशि-क्रुशि-मृशि-दंशि-त्विषि-कृषि-श्लिषि-विषि-पिषि-तुषि-दुषि-द्विषि-घस्मि-वस्मि-दहि-दिहि-वहि-दुहि-नहि-रुहि-लिहि-मिहयश्चोष्मान्तानाम्। वसिः प्रसारणी। भाष्यम् ७।२।१०। शकेर्लृदित। हन्-घस्-वस्-प्रच्छ। परि-मु-सि-वि-वाच। भ्रस्-मस्-भु-रु-वं-स-रम्-भ-वि-सृ-त्य-य-यु-नि-भाज। अ-च्छि-स-खि-ह-तु-स्क-प-नु-भि-क्षु-शाद् द। सा-रा-ब-रु-क्षु-यु-कु-शु-व्याद् ध। आ-स्व-लि-लु-च्छु-क्षि-ति-सृ-त-व-शात् प। लि-वि-मृ-दि-स्पृ-दन्-द-रु-क्रु-रे श। वि-तु-दु-त्वि-द्वि-शि-शु-कृ-पे ष। दि-न-मि-व-द-रु-दु-लि-रि-लोर्ह। स० ६।४।१३७,१४०-१४५, १४८-१५०]

श्र्युगूर्णोः कितः ॥१३६॥ [श्र्युगूर्णुभ्य०। स० ६।४।१५१]

श्रयतेरुगन्तादेकाच ऊर्णोतेश्च परस्य कितो वलादेरिड् न भवति। श्रित्वा श्रित। युत्वा युत। लूत्वा लून। वृत्वा वृत। तीर्त्वा तीर्ण। ऊर्णुत्वा ऊर्णुत। एकाच इत्येव। जागरित। कित इति किम्? लविता।

[ श्र्युक किति। पा० ७।२।११। वाच्य ऊर्णोर्णुंवद्भावो यङ्प्रसिद्धिः प्रयोजनम्। आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात्॥ काशिका। ]

**मनो ग्रहगुहोश्च** ॥१३७॥ [सनि०। पा० ७।२।१२]

ग्रहिगुहिभ्यामुगन्ताच्च परस्य सन इड् न भवति। जिघृक्षति जुघुक्षति। लुलूषति पुपूषति। [1]श्रयतेरूर्णोतेर्यौतेर्वृ‌तश्च परस्य सन इड् विभाषोक्त [११९, १०१]।

[ ग्रहिगुहिभ्या च सन। स० ६।४।१५२। [1]श्र L ]

**स्वार्थे** ॥१३८॥ [स० ६।४।१५३]

स्वार्थिकस्य सन इड् न भवति। नितिक्षते चिकित्सति जुगुप्सते।

[ आर्धधातुकत्वाभावादिण् न भवति। आर्धधातुकत्वाभावस्तु सनो धातोरित्यविधानात्। न्यास। ]

**श्वीदितस्ततवतोः** ॥१३९॥

श्वयतेरीदितश्च परयोस्ततवतोरिड् न भवति। शून· शूनवान्। ओलस्जी। लग्न लग्नवान्।

[ श्वीदितो निष्ठायाम्। पा० ७।२।१४। श्विडीडीदिन्नयो निष्ठाया.। स० ६।४।१५४ ]

**यतोऽपतेर्वा** ॥१४०॥ [स० ६।४।१५५]

यस्मादिड् वा विहितस्तत पतिवर्जितात्परयोस्ततवतोरिड् न भवति। सूत सूतवान्। अपतेरिति किम्? पतित पतितवान्। एकाच इत्येव। दरिद्रित। कथ विदित? विशिसहचरितस्य विदविश [१६६] इति[1] ग्रहणात्।

[ यस्य विभाषा। पा०७।२।१५। तनिपतिदरिद्राणामुपसंख्यानम् [ काशिका ७।२।४९ ] ति पतेर्विभाषितेट्कस्यापि द्वितीयाश्रितातीतपतितेति [ २।१।२४ ] निपातनादिडागम। काशिका। [1] *i e*, तौदादिकस्य लाभार्थस्य ]

**आदितः** ॥१४१॥ [स० ६।४।१५६, ०च। पा० ७।२।१६]

आदित परयोस्ततवतोरिड् न भवति। मिन्न· मिन्नवात्।

**भावारम्भयोर्वा ॥१४२॥**

भावे तदारम्भे च ततवतोरिड् वा न भवति। भिन्नम् भेदितम्। प्रभिन्न प्रभेदित । आदित्येव। गतम्।

[ विभाषा भावादिकर्मणो । पा० ७।२।१७, भावादिकर्मणोर्वा। शके. कर्मणि। स० ६।४।१५७-१५८ ]

**जपिवमः ॥१४३॥**

जपिवमिभ्या परयोस्ततवतोरिड् वा न भवति। जप्त जपितः। वान्त वमित ।

[ १४३-१४४। जपिवम्याश्वसिविश्वसिभ्य । स० ६।४।१५९ ]

**व्याङः श्वमः ॥१४४॥**

विपूर्वादाङ्पूर्वाच्च श्वसे परयोस्ततवतोरिड् वा न भवति। विश्वस्तः विश्वसित । आश्वस्त आश्वसित । व्याङ इति किम्? निश्वसित· उच्छ्वसित ।

[ This innovation would appear to be introduced first by Candra ]

**क्षुब्धस्वान्तध्वान्तं मन्थमनस्तमः ॥१४५॥**

क्षुब्धादयो मन्थादिष्वर्थेषु निपात्यन्ते। क्षुब्धो मन्थ । स्वान्तं मन । ध्वान्त तम । समानाधिकरण किम्? क्षुभितं मन्थेन, स्वनितं मनसा, ध्वनित तमसा।

[ १४५-१४६। क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तम.सक्ताविस्पष्टस्वरानायासभृशेषु। पा० ७।२।१८, स० ६।४।१६० ]

**विरिब्धफाण्टबाढम्लिष्टानि स्वरानायासभृशास्पष्टेषु ॥१४६॥**

विरिब्धादय स्वरादिषु गम्यमानेषु निपात्यन्ते। विरिब्ध. स्वरश्चेत्, विरेभितमन्यत्। फाण्टमनायासनिर्जात चेत्। सद्योऽभिपुतोद्धृतौपध द्रवद्रव्य-

मेवोच्यते। फाणितमन्यत्। बाढ भृश चेत्, बाहितमन्यत्। म्लिष्टमविस्पष्टं चेत्, म्लेच्छितमन्यत्।

**धृषशसः प्रागल्भ्ये** ॥१४७॥ [धृषिशसिभ्या०। स०६।४।१६१]

धृषिशसिभ्या परयोस्तवतो [1] प्रागल्भ्य एवेड् न भवति। धृष्टः विशस्त। प्रागल्भ्य इति किम्? धर्षित विशसित।

[धृषिशसी वैयात्ये। पा० ७।२।१९। [1]परस्य वलादे v 1]

**दृढः स्थूलबलिनोः** ॥१४८॥ [स० ६।४।१६२]

दृढ इति स्थूले बलवति च निपात्यते। दृढ। दृहित दृंहितं चान्यत्।

[दृढ स्थूलबलयो। पा० ७।२।२०]

**प्रभौ परिवृढः** ॥१४९॥ [पा० ७।२।२१, स० ६।४।१६३]

परिवृढ इति प्रभौ निपात्यते। परिवृंहितमन्यत्।

**कृच्छ्रगहनयोः कषः** ॥१५०॥ [पा०७।२।२२, स०६।४।१६४]

कृच्छ्रे गहने चार्थे कषते परयोस्तवतोरिड् न भवति। कष्टोऽग्नि। कष्टा पर्वता। कषितमन्यत्र।

**घुषेरविशब्दने** ॥१५१॥ [स० ६।४।१६५। घुषिर०। पा० ७।२।२३]

विशब्दनादन्यत्र घुषे. परयोस्तवतोरिड् न भवति। घुष्टा रज्जु। अविशब्दन इति किम्? अवघुषितं वाक्यमाह। अतो लिङ्गाद् वा णिच्। तेन जुघुषु पुष्पमाणवा [भाष्यम् ७।२।२१] इति सिद्धं भवति।

**संनिवेरर्दः** ॥१५२॥

समादिपूर्वादर्दते. परयोस्तवतोरिड् न भवति। समर्ण न्यर्ण। व्यर्णः। सनिवेरिति किम्? अर्दित।

[अर्दे सन्निविभ्य.। पा० ७।२।२४, स० ६।४।१६६]

**अभेरविदूरे** ॥१५३॥ [स० ६।४।१६७]

अभेः परादर्दते परयोस्क्तक्तवतोरविदूरे गम्यमान इड् न भवति। अभ्यर्णा शरत्। अविदूर इति किम्? अभ्यर्दितः।

[ **अभेश्चाविदूर्ये। पा० ७।२।२५** ]

**णेर्वृत्तं ग्रन्थे** ॥१५४॥ [स० ६।४।१६८]

वृतेर्ण्यन्तस्य क्ते परतो ग्रन्थविषये वृत्तमिति निपात्यते। वृत्तं पारायणं देवदत्तेन। वृत्तः पारायणे। वर्तितमन्यत्।

[ **णेरध्ययने वृत्तम्। पा० ७।२।२६** ]

**वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः**॥१५५॥[पा०७।२।२७, स० ६।४।१६९]

ण्यन्तानामेते क्ते परतो वा निपात्यन्ते। दान्तः दमितः। शान्तः शमितः। पूर्णः पूरितः। दस्तः दासितः। स्पष्टः स्पाशितः। छन्नः छादितः। ज्ञप्तः ज्ञपितः[*]।

[ [*]ज्ञापितः C ]

**रुषहृषामत्वरसङ्घुषास्वनः** ॥१५६॥

रुषादिभ्यः परयोस्क्तक्तवतोरिड् वा न भवति। रुष्टः रुषितः। हृष्टः हृषितः। हृषेर्लोमसु [पा०७।२।२९] विस्मितप्रतिघातयोः [७।२।२९ भाष्यम्] इति च न वक्तव्यम्, अन्यत्रापि दर्शनात्, अर्थान्यत्वे च व्यवस्थितविभाषया वा। हृष्टाः केशाः, हृषिताः केशाः। हृष्टा दन्ताः, हृषिता दन्ताः। हृष्टं लोमभिः, हृषितं लोमभिः। अभ्यान्तः अभ्यमितः। तूर्णः त्वरितः। सघुष्टः सघुषितः। आस्वान्तः आस्वनितः। अविशब्दने मनसि च परत्वादनेनैव भवितव्यम्। अपचित इति चिनोतेर्भविष्यति, ततः एव पूजा प्रतीयते। अपचायित इति चायतेर्भविष्यति।

[ **रुष्यमत्वरसङ्घुषास्वनाम्। हृषेर्लोमसु। अपचितश्च। पा० ७।२।२८-३०। रुषामत्वरसङ्घुषास्वनिभ्यः। हृषेर्लोमकेशकर्तृकात्। विस्मितप्रतिहतयोश्च। अपाच्चा-**

यश्विश्च। स० ६।४।१७०-१७३। [1]Evidently acc to the dictum धातूनामनेकार्थत्वात् Goyicandra (11 1630) rightly remarks धातूनामनेकार्थत्वेनेष्टार्थसिद्धिमभ्युपगन्तुं चन्द्र एव परमपण्डित ]

**अपचितिः** ॥१५७॥

अपपूर्वस्य चायेः क्तिनि परतश्चिभावो निपात्यते। अपचितिः चायृनिवृत्त्यर्थं* वचनम्।

[क्तिनि नित्यमिति वक्तव्यम्। पा० ७।२।३० भाष्यम्। क्तिनि नित्यम्। स० ६।४।१७४। *Should we read चायिनिवृत्त्यर्थम् ]

**सृभृवृस्तुद्रुस्रुश्रुवो लिटः** ॥१५८॥ [०श्रुभ्यो०। स० ६।४।१७५]

स्रादिभ्य एव परस्य वलादेर्लिट इड् न भवति। ससृव ससृम। बभृव बभृम बभृवहे बभृमहे। ववृव ववृम ववृवहे ववृमहे। वृङ्वृञोर्वलादिलक्षण एव प्रतिषिध्यते। तुष्टुव तुष्टुम। दुद्रुव दुद्रुम। सुस्रुव सुस्रुम। स्रादिभ्य इति किम्? पेचिव पेचिम। शेकिव शेकिम।

[कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि। पा० ७।२।१३]

**कृञोऽसुटः** ॥१५९॥ [पा० ७।२।१३।१, स० ६।४।१७६]

असुट्कात्करोतेः परस्य लिट इड् न भवति। चकृव चकृम। स्रादिनियमात्प्राप्तस्य प्रतिषेधः। असुट इति किम्? सञ्चस्करिव सञ्चस्करिम।

**ऋतस्तासि नित्यानिटस्थलः** ॥१६०॥ [स०६।४।१७७]

ऋदन्तात्तासि नित्यानिट परस्य थल इड् न भवति। हर्ता जहर्थ। ऋत इति किम्? भेत्ता बिभेदिथ। तासीति किम्? वृत ववरिथ। नित्यमिति किम्? स्वर्ता स्वरिता सस्वरिथ। अनिट इति किम्? जागरिता जजागरिथ। थल इति किम्? जह्रिव जह्रिम। अचो वा [१६१] इति प्राप्तस्य प्रतिषेधः।

[अचस्तास्वत्थल्यनिटो नित्यम्। ऋतो भारद्वाजस्य। पा० ७।२।६१, ६३]

**अचो वा** ॥१६१॥ [म० ६।४।१७८]

अजन्तात्तासि नित्यानिट परस्य थल इड् वा न भवति। याता ययाथ ययिथ। चेता चिचेथ चिचयिथ। होता जुहोथ जुहविथ। तासीत्येव। युन. युयविथ। नित्यमित्येव। सोता सविता *सुषविथ। अनिट इत्येव। लविता लुलविथ। थल इत्येव। ययिव ययिम।

[ *सुसविथ L ]

**पाठेऽत्वतः** ॥१६२॥ [म० ६।४।१७९]

उपदेशेऽकारवतस्तासि नित्यानिट परस्य थल इड् वा न भवति। पक्ता पपक्थ पेचिथ। शक्ता शशक्थ शेकिथ। पाठ इति किम्? कर्ष्टा चकर्षिथ। अत्वत इति किम्? भेत्ता बिभेदिथ। तपर किम्? राद्धा रराधिथ। तासीत्येव। शान्त शेमिथ। नित्यमित्येव। रद्धा रविता ररन्धिथ। अनिट इत्येव। फणिता फेणिथ। थल इत्येव। पेचिव पेचिम।

[ उपदेशेऽत्वत । पा० ७।२।६२ ]

**सृजिदृशः** ॥१६३॥ [०दृशिभ्याम्। स० ६।४।१८०]

सृजिदृशिभ्या परस्य थल इड् वा न भवति। सस्रष्ठ, ससर्जिथ। दद्रष्ठ ददर्शिथ।

[ विभाषा सृजिदृशो । पा० ७।२।६५ ]

**ऋवृव्येञदः** ॥१६४॥

अर्तेर्वृञोर्व्येञोऽत्तेश्च परस्य थल इड् भवति। नित्य विकल्पानुवृत्तेर्व्येञद आनर्थक्यात्। आरिथ ववरिथ सविव्ययिथ आदिथ।

[ इडत्त्यर्तिव्ययतीनाम्। पा० ७।२।६६। वृग्रहण किमर्थम्? न कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि [ ७।२।१३ ] इत्येव सिद्धम्? एव तर्हि नियमार्थोऽयमारम्भ। नियम एव यथा स्यात्। क मा भूत्। ववरिथ। भाष्यम्। बभूथाततन्थजगृम्भववर्थेति निगमे। पा० ७।२।६४। ऋवृञ्व्येञदिभ्य इट्। स० ६।४।१८१ ]

**क्वसोरेकाजाद्घसः** ॥१६५॥ [०घसिभ्य । स० ६।४।१८२]

एकाच आकारान्ताद् घसश्च परस्य क्वसोरिड् भवति। पेचिवान् ययिवान् जक्षिवान्। एकाचाद् घस इति किम्? बभूवान्।

[वस्वेकाजाद्घसाम्। पा० ७।२।६७]

**वा हनगमविदविशदृशः** ॥१६६॥

हनादिभ्य परस्य क्वसोरिड् वा भवति। जघ्निवान् जघन्वान्। जग्मिवान् जगन्वान्। विविदिवान् विविद्वान्। विविशिवान् विविश्वान्। ददृशिवान् ददृश्वान्।

[विभाषा गमहनविदविशाम्। पा० ७।२।६८। दृशेश्चेति वक्तव्यम्। भाष्यम्। गम-हन-दृश-विश-विद्लृभ्यो वा। स० ६।४।१८३। इह वस्वेकाजादघसामित्यादिसूत्रत्रय छान्दसमाहु। क्वसोश्छान्दसत्वात्। चन्द्रगोमी च भाषासूत्रकार क्वसोरिडागमार्थं सूत्रितवान्। वस्वेकाजाद्घसाम्। वा गमहन्विदविशाम्। दृशेश्च। भाषावृत्ति ७।१।६९]

**ऋहनः स्ये** ॥१६७॥ [ऋद्धनो ०। पा० ७।२।७०]

ऋदन्ताद्धन्तेश्च परस्य स्य इत्येतस्य इड् भवति। करिष्यति हनिष्यति।

[ऋहनिभ्य स्यस्य। स० ६।४।१८४]

**अञ्जेः सिचः** ॥१६८॥ [स० ६।४।१८५। ०सिचि। पा० ७।२।७१]

अञ्जे परस्य सिच इडागमो भवति। आञ्जीत्।

**स्तुसुञोऽतङि** ॥१६९॥

स्तौते सुनोतेश्च परस्य सिचोऽतङि परत इड् भवति। अस्तावीत् असावीत्। अतङीति किम्? अस्तोष्ट। अधावीदिति धूञा सिद्धम्, अधापीदिति धुवा भवितव्यम्।

[स्तुसुधूञ्भ्य परस्मैपदेषु। पा० ७।२।७२, स० ६।४।१८६]

**यमरमनमातां सक् च ॥१७०॥** [पा० ७।२।७३]

यमादीनामाकारान्तानां चानन्तरस्य सिच इड् भवति, सक् चैषामागमः। अयसिष्टाम् [1]व्यरसिष्टाम् अनसिष्टाम् अयासिष्टाम्। अनडीत्येव। आयस्त पादम्।

[ यमिरमिनमातां सुक् च। स० ६।४।१८७। [1]अरम्सिष्टाम् L ]

**ऋस्मिपूञ्ज्ञशः सनः ॥१७१॥**

ऋप्रभृतिभ्यः परस्य सन इड् भवति। अरिरिषति सिस्मयिषते पिपविषते अञ्जिजिषति अशिशिषते[*]।

[ स्मिपूङ्रञ्ज्वशां सनि। पा० ७।२।७४। १७१-२ ऋस्मिपूङञ्ज्वशूकॄगृदृधृप्रच्छिभ्यः सनः। स० ६।४।१८८। [*]अशिशिषति G, HH Mss ]

**कॄभ्यः पञ्चभ्यः ॥१७२॥** [किरश्च प०। पा० ७।२।७५]

कॄ इत्येवमादिभ्यः पञ्चभ्यः परस्य सन इड् भवति। चिकरिषति जिगरिषति दिदरिषते दिधरिषते पिपृच्छिषति। पञ्चभ्य इति किम्? सिसृक्षति।

**रुद्भ्यस्तिङः ॥१७३॥**

रुदादिभ्यः पञ्चभ्यः परस्य वलादेस्तिङ इड् भवति। रोदिति स्वपिति प्राणिति श्वसिति जक्षिति। तिङ इति किम्? स्वप्ता। पञ्चभ्य इत्येव। जागर्ति।

[ रुदादिभ्यः सार्वधातुके। पा० ७।२।७६। रुदिस्वपिश्वस्यनिजक्षिभ्यस्तिङः। स० ६।४।१८९ ]

**जनीशीडः स्ध्वे ॥१७४॥**

जन ईश ईडश्च परस्य सकारादेस्तिङो ध्व इत्येतस्य च इड् भवति। व्यतिजज्ञिषे व्यतिजज्ञिध्वे व्यतिजज्ञिष्व व्यतिजध्वम्। जुहोत्यादित्वाद् द्विर्वचनम्। ईशिषे ईशिध्वे ईशिष्व ईशिध्वम्। ईडिषे ईडिध्वे ईडिष्व ईडिध्वम्।

[ईश. से। ईडजनोर्ध्वे च। पा० ७।२।७७-७८। किमर्थो योगविभागो नेशीडजना स्ध्व इत्येवोच्येत? ईशो ध्वे मा भूदिति। इष्यत एव। ईशिध्व इति। ईडजनोस्तर्हि से मा भूदिति। इष्यत एव। ईडिषे जनिष इति। ईशस्तर्हि से मा भूदिति। इष्यत एव। ईशिष्वेति। भाष्यम्। जनीशीडिभ्य सेध्वयो। स० ६।४।१९०। According to Goyīcandra on Sam 11 246 Candra's rule is जनीडीश्भ्य सध्वे.]

**आने मुगतः** ॥१७५॥ [म० ६।४।१९१]

आने परतोऽकारान्तस्य मुगागमो भवति। पचमान यजमान। अत इति किम्? कुर्वाण। तपर किम्? ढदान। प्रकृतेरित्येव। प्राण.।

[आने मुक्। पा० ७।२।८२]

**आसीनः** ॥१७६॥

आस परस्यानस्य ईत्त्व निपात्यते। आसीन।

[ईदास। पा० ७।२।८३, ईदस्याम। स० ६।४।१९२]

इति चान्द्रे व्याकरणे पञ्चमोऽध्याय· समाप्त।

---

**मृजेरात्** ॥ १ ॥

मृजेरत आद् भवति। मार्ष्टि, मार्ष्टा। अत इत्येव। मृष्ट।

[मृजेर्वृद्धि। पा० ७।२।११४, स० ७।१।१]

**ऋतोऽचि वा** ॥ २ ॥ [स० ७।१।२]

मृजेर्ऋकारस्याजादौ परत आद् वा भवति। मार्जन्ति, मृजन्ति। मार्जन्, मृजन्। ऋत इति किम्? समार्जनम्। अचीति किम्? मृष्टः।

[इहान्ये वैयाकरणा मृजेरजादौ सक्रमे विभाषा वृद्धिमारभन्ते। तदिहापि

साध्यम्। तस्मिन् साध्ये योगविभाग करिष्यते। भाष्यम् १।१।३। मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते। काशिका १।१।५ ]

**अजागृणिश्वीनां सिच्यतङ्यादैच्** ॥ ३ ॥

अतङ्परे सिचि परतो जागृणिश्विवर्जिताया अजन्ताया प्रकृतेरादैचो भवन्ति। अकार्षीत्, अचैषीत, अलावीत्। अत्र प्रत्यासत्तेरिकारस्यैकार, उकारस्यौकार, पारिशेष्याद् ऋकारस्याकार । शेषाणामसम्भवान्न भविष्यति; उदवोढाम इति टलोपस्यासिद्धत्वात। अतङीति किम्? अच्योष्ट। अजागृणिश्वीनाम् इति किम्? अजागरीत, औनयीत, अश्वयीत्। कथं न्यनुवीत, न्यधुवीद् इति? अन्तरङ्गत्वाद् उवि कृते वकारेण व्यवधानान्न भविष्यति, हलन्तलक्षणस्य च नेटि [ ५ ] इति प्रतिषेधात्। अलावीद् इत्यपि नह्यौकारेऽवादेशे च कृते न प्राप्नोति? नाप्राप्तेऽदेङयादैजारभ्यते, उवि पुन प्राप्ते चाप्राप्ते च। न च णिश्विग्रहण ज्ञापक सिच्यन्तरङ्गाभावस्य, आदैचोऽदेङपवादत्वात। न च प्रयोजनमस्ति। योऽप्याह—अचेचायीत्, अनेनायीत, अचिगर्यीत, अजिगर्यीद् इति यान्तलक्षण प्रतिषेध स्यात्, तत्रापि नादेङ्प्राप्तिरस्ति, आदैचा बाधितत्वात्[1]।

[ सिचि वृद्धि परस्मैपदेषु। ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्। पा० ७।२।१,५। अजागृणिश्वीना सिचि परस्मैपदेषु। स० ७।१।३। [1]The reading will be discussed in the notes at the end ]

**हलोऽचः** ॥ ४ ॥ [स० ७।१।४]

अतङ्परे सिचि परतो हलन्ताया प्रकृतेर्योऽच् तस्यादैचो भवन्ति। अपाक्षीत्, अभैत्सीत्, अरौत्सीत्, अताप्सीत्, अराङ्क्षीत्, असाङ्क्षीत्।

[ वदव्रजहलन्तस्याच । पा० ७।२।३ ]

**नेटि** ॥ ५ ॥ [पा० ७।२।४, स० ७।१।५]

इडादौ सिचि परतो हलन्ताया प्रकृतेरादैचो न भवन्ति। अकोषीत्।

**वोर्णोः** ॥ ६ ॥ [स० ७।१।६]

ऊर्णोतेरिडादौ सिचि परत ऐज् वा भवति। **प्रौर्णावीत्, प्रौर्णवीत्, प्रौर्णुवीत्**।

[ ऊर्णोतेर्विभाषा। पा० ७।२।६ ]

**हलादेरुपान्तस्याश्वसक्षणह्मयेदितोऽतः** ॥ ७ ॥

हलादेर्हलन्तस्य श्वसिक्षणिभ्या हकारमकारयकाराद् एदितश्चान्यस्य योऽकार उपान्तस्तस्येडादो सिच्यनङ्परे परत आद् वा भवति। अराणीत्, अरणीत्। हलादेरिति किम्? मा भवान् अटीत्। उपान्तस्येति किम्? अरक्षीत्। अश्वसक्षणह्मयेदित इति किम्? अश्वसीत्, अक्षणीत्; अग्रहीत्, अवमीत्, अव्ययीत्, अरगीत्। अत इति किम्? अकोषीत्। हल इत्येव। अवधीत्।

[ ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम्। अतो हलादेर्लघो। पा० ७।२।५,७। हलादेरह्म्यन्तक्षणश्वसेदितोऽत उपधाया। स० ७।१।७ ]

**वदव्रजलृरः** ॥ ८ ॥

वदिव्रजोर्लान्ताना रेफान्ताना च हलादीना योऽकारस्तस्येडादौ सिचि परत आद् भवति, नित्यं पुनर्विधानात्। अवादीत्, अव्राजीत्; अचालीत्, अक्षारीत्। उपान्तस्येत्येव। अश्वल्लीत्, अवभ्रीत्।

[ अतो रान्तस्य। वदव्रजहलन्तस्याच। पा० ७।२।२-३। व्रजवदर्लान्नित्यम्। स० ७।१।८ ]

**ञ्णिति** ॥ ९ ॥ [स० ७।१।९]

ञिति णिति च परत उपान्तस्यात आद् भवति। पाकः, पाचकः। उपान्तस्येत्येव। भङ्ग, भञ्जक.।

[ अत उपधाया। पा० ७।२।११६ ]

**अचः** ॥१०॥ [स० ७।१।१०]

ञिति णिति च परतोऽनन्तरस्याच आदैचो भवन्ति। **कारकः,**

नायक , लावक । [1]बभूवेति नित्यत्वाद् [2]वुकि कृते वकारेण व्यवधानान् न भविष्यति ।

[ अचो ञ्णिति । पा० ७।२।११५ । [1]बभूवेति L [2]अके L ]

**किति चापत्यादावचामादेः ॥११॥**

ञिति णिति किति च अपत्याद्यर्थविहिते परत प्रकृतेर्येऽचस्तेषाम् आदेरच आदैचो भवन्ति । दाक्षि , प्लाक्षि । औपगव । ऐतिकायनः । अपत्यादाविति किम् ? कण्डूयति, शिथिलयति । अचाम् इति किम् ? हलादेरपि यथा स्यात् ।

[ तद्धितेष्वचामादे । किति च । पा० ७।२।११७-११८ । किति च तद्धितेऽचामादेः । स० ७।१।११ ]

**देविकाशिंशपादीर्घमन्त्रश्रेयसाम् आत् ॥१२॥**

ञ्णिति किति चापत्याद्यर्थविहिते परत प्रकृतेर्देविकादीनामचाम् आदेरच आद् भवति । दाविकम् उदकम् । दाविकाकूला शालय । पूर्वदेविका नाम प्राचा ग्राम , तत्र भव पूर्वदाविक । शाशपश्चमस, शाशपास्थला[1] देवा , पूर्वशाशप [2] । दीर्घमत्रे भवम् , दार्घमत्रम् । श्रेयसि भवम्, श्रायसम् । अपत्यादावित्येव । देविकीयति । कथ वहीनरस्यापत्यम्, वैहीनरि ? विहीनरशब्द प्रकृत्यन्तरमस्ति ।

[ देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् । पा० ७।३।१ । वहीनरस्येद्वचनम् । पा० ७।३।१।६ । वहीनरस्येत्व वक्तव्यम् । वहीनरस्यापत्यं वैहीनरि । कुणरवाडवस्त्वाह । नैष वहीनर । कस्तर्हि ? विहीनर एष । विहीनो नर कामभोगाभ्य. विहीनर । विहीनरस्यापत्य वैहीनरि. । भाष्यम् । देविकाशिशपादीर्घसत्रश्रेयसा तत्प्राप्तावात् । वहीनरस्यैत् । स० ७।१।१३-१४ Grammarians from Jainendra downwards generally omit दित्यवाट् of Pānini because as the Bhāsāvrtti points out दित्यवाट् is a Vedic word. Sanksiptasāra ( Taddhita-Pariśista ) alone mentions the word. [1]Ms शाशपस्थला, but the word is derived from शिशपास्थल. [2]पूर्वशिंशपा नाम प्राचां ग्राम , तत्र भव पूर्वशांशप. । काशिका । ]

**केकयमित्रयुप्रलयानां यादेरियः** ॥१३॥ [पा० ७।३।२]

केकयादीनां ञ्णिति किति च परतोऽचामादेरच आदैच सिद्धा एव, यकारादेस्त्ववयवस्य इयादेशो भवति। कैकेयः, मैत्रेयः। प्रलयादागतम्, प्रालेयं हिमम्।

[केकयमित्रयुप्रलयानां यादेरियश्च। स० ७।१।१२]

**ऐज्भाविनो य्वः पदान्तात् प्रागैच्** ॥१४॥

ञ्णिति किति चापत्याद्यर्थे विहिते परत ऐज्भाविनोऽच स्थाने यौ य्वौ ताभ्यां पदान्ताभ्यां पूर्वावैचौ भवतः। वैयाकरणः, सौवश्वः। ऐज्भाविन इति किम्? द्व्याशीतिकः। अत्र ह्युत्तरपदस्यादैज्वचनात् [२६] पूर्वपदस्यादैचामभावः। [1]कथं पूर्वत्र्यलिन्दे भवः, पूर्वत्रैयलिन्दः? अत्राप्युत्तरपदस्थोऽयम्[2] अचाम् आदेरच ऐज्भाविनः स्थाने यकार इति कृत्वा भवत्येव। य्व इति किम्? द्वैमातुरः? पदान्तादिति किम्? यतश्छात्राः, यानाः।

[न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्। पा० ७।३।३। य्व पदान्तात्प्रागैच्। स० ७।१।१५। [1]उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्यते। पूर्वत्रालिन्दे भवः। पूर्वत्रैयलिन्दः। काशिका। [2]उत्तरपदस्यायम् Ms.]

✓ **द्वारादीनाम्** ॥१५॥ [द्वारादीनां च। पा० ७।३।४]

द्वारादीनां ञ्णिति किति च परतो य्वाभ्यां पूर्वावैचौ भवतः। द्वारे नियुक्तो, दौवारिकः। स्वरमविकृत्य कृतो ग्रन्थः, सौवरः। व्यल्कशे भवः, वैयल्कश इति विपूर्वात् पूर्वेणैव सिद्धम्। स्वस्तीत्याह, सौवस्तिकः। स्वर भवम्, सौवम्, असङ्ख्यस्यानाराच्छश्वतोऽसिति [५।२।१४० ग० सू०] इत्यन्त्याजादिलोपः। स्वर्गगमनम् आह, सौवर्गगमनिकः। स्फ्यकृतोऽपत्यम्, स्फैयकृतः। स्वादुमृदोरपत्यम्, सौवादुमृदवः। शुन इदम्, शौवनम्। अणि लोपाभावः। शुनो विकारः शौवं मांसम्। अञि लोप एव। श्वादंष्ट्राया भवः, शौवादंष्ट्रो मणिः, अन्येषाम् अपि [५।२।१४५] इति दीर्घत्वम्। श्वो भवः, शौवस्तिकः। स्वस्येदम्, सौवम्। स्वग्रामे भवः,

सौवग्रामिक , अध्यात्मादित्वाट्ठ [ ३।३।२९ ] ठञ्। स्वाध्यायेन जयति, सौवाध्यायिक । स्वग्रहणेन सिद्धे स्वग्रामादिपाठादिह न स्वति । स्वापतेयम् ।

[ द्वार-स्वर-स्वस्ति-स्वादु-मृदु-व्यल्कश-श्वन्-स्फ्यकृत-स्व-स्वाध्याय - स्वग्रामाणाम् । स० ७।१।१६ ]

**न्यग्रोधस्य केवलस्य** ॥१६॥ [स० ७।१।१७]

न्यग्रोधशब्दस्यासमस्तस्य ञ्णिति किति च परतो यकारात पूर्वम् ऐज भवति । नैयग्रोधश्चमस । केवलस्येति किम् ? न्याग्रोधमूला शाल्य । एतच्च ज्ञापकं तदादिविधे , व्युत्पत्तिपक्षे नियमार्थम्', अव्युत्पत्तिपक्षे विध्यर्थम् ।

[ न्यग्रोधस्य च केवलस्य । पा० ७।३।५ । 'न्यग्रोहतीति न्यग्रोध इति व्युत्पत्तिपक्षे नियमार्थमव्युत्पत्तिपक्षे विध्यर्थम् । काशिका । ]

**न व्यतिहारे** ॥१७॥

अन्योन्यक्रियाकरणे य्व पदान्तात् प्रागैज् न भवति । व्यावक्रोशी, व्यावचर्ची । स्त्रिया णच् [ १।३।७६ ], तस्मादण् [ ४।४।२१ ] ।

[ न कर्मव्यतिहारे । पा० ७।३।६ । न णच । स० ७।१।१८ ]

**स्वागतादीनाम्** ॥१८॥

स्वागतादीना ञ्णिति किति च परतो य्व पदान्तात् प्रागैज् न भवति । स्वागतम् इत्याह, स्वागतिक । स्वध्वरेण चरति, स्वाध्वरिक । स्वङ्गस्यापत्यम्, स्वाङ्गि । व्याङ्गि । व्याडि । व्यवहारेण चरति, व्यावहारिक ।

[ स्वागतादीनां च । पा० ७।३।७ । स्वागत-स्वध्वर-स्वङ्ग-व्यङ्ग-व्यड-व्यवहार-व्यायामानाम् । स० ७।१।१९ ]

**श्वादेरिति** ॥१९॥ [स० ७।१।२०]

श्वशब्दादेरिकारादौ ञ्णिति किति च परतो य्वः प्रागैज् न

भवति। श्वभस्त्रस्यापत्यम्, श्वाभस्त्रि। श्वगणेन चरति, श्वागणिक। कथं श्वाभस्त्रेरिदम्, श्वाभस्त्रम् इति[1]? इञि लुप्तेऽपि तत्कृत प्रतिषेधो भवत्येव। इतीति किम्? शौवदंष्ट्रो मणि.।

[श्वादेरिञि। पा० ७।३।८। इकारादिग्रहण च श्वागणिकाद्यर्थम्। तदन्तस्य चान्यत्र प्रतिषेध। ७।३।८।२-३। [1]तदन्तस्य चान्यत्रापि तद्धिते प्रतिषेध इष्यते। श्वाभस्त्रेरिद श्वाभस्त्रम्। काशिका।]

**पदस्य वा ॥२०॥**

श्वशब्दादे पदान्तस्य ञणिति किति च परतो य्व प्राग् ऐज् न भवति वा। श्वापदम्, शौवापदम्।

[पदान्तस्यान्यतरस्याम्। पा० ७।३।९। इञ। पदान्तस्यानिति वा। स० ७।१।२१-२२]

**उत्तरस्य ॥२१॥**

उत्तरपदस्य ञ्णिति किति च परतोऽचाम् आदेरच आदैचो भवन्ति। अविकारश्चायम्।

[उत्तरपदस्य। पा० ७।३।१०। गुरुलघुसहतपदार्थो वैमुहूर्तादीनामुत्तरपदस्य। स० ७।१।२४]

**अंशादृतोः ॥२२॥**

अवयवात् [1]परस्यर्तुवाचिन उत्तरपदस्य ञणिति किति च परतोऽचामादेरच आदैचो भवन्ति। पूर्ववार्षिक॰। वर्षाणामय पूर्वभागे पूर्वशब्दः। अवयवोऽपि समुदायशब्देनोच्यत इति पूर्वाश्च ता वर्षाश्चेति विशेषणसमासः। अंशादिति किम्? ऋत्वन्तरैर्व्यवहितासु पूर्ववर्षासु भव॰, पौर्ववर्षिकः। सौवर्षिक।

[अवयवादृतो। पा० ७।३।११। स० ७।१।२५। [1]परस्योत्तरवाचिन L.]

**सुसर्वार्धाज्जनपदस्य ॥२३॥** [पा० ७।३।१२]

सुसर्वार्धेभ्य परस्य जनपदवाचिनो ञ्णिति किति च परतोऽचाम् आदेरच आदैचो भवन्ति। सुपाञ्चालक, सर्वपाञ्चालक, अर्धपाञ्चालकः।

[ सुसर्वार्धेभ्यो जनपदस्य। स० ७।१।२६ ]

**अमद्राणा दिशः ॥२४॥** [स० ७।१।२७]

दिक्छब्दात् परस्य मद्रवर्जितस्य जनपदवाचिन उत्तरपदस्य ञ्णिति किति च परतोऽचाम् आदेरच आदैचो भवन्ति। पूर्वपाञ्चालक., उत्तरपाञ्चालक। अमद्राणाम् इति किम् ? पौर्वमद्र।

[ दिशोऽमद्राणाम्। पा० ७।३।१३ ]

**प्राचां ग्रामाणाम् ॥२५॥**

दिक्छब्देभ्य परेषा प्राच्यग्रामवाचिना ञ्णिति किति च परतोऽचामदेरच आदैचो भवन्ति। पूर्वकार्ष्णमृत्तिक। यद्यपि पूर्वकृष्णमृत्तिकेति समुदायो ग्रामवाची, अवयवोऽपि ग्रामवाच्येव। नगराणामपि ग्रामविशेषत्वाद् भवति। पूर्वपाटलिपुत्रक।

[ प्राचा ग्रामनगराणाम्। पा० ७।३।१४, स० ७।१।२८। See Bhāsya and Kāśika on vii 3 14 ]

**संख्यायाः संवत्सरपरिमाणस्यासंज्ञाशाणकुलिजस्य ॥२६॥**

सख्याया परस्य सवत्सरस्य परिमाणस्य चासज्ञासम्बन्धिनोऽशाणकुलिजस्य च ञ्णिति किति च परतोऽचाम् आदेरच आदैचो भवन्ति। द्विसावत्सरिक, द्विसौवर्णिक, द्विसाप्ततिक, द्विनावतिक। असंज्ञाशाणकुलिजस्येति किम् ? पाञ्चलोहितिकम्[1]। द्वैशाण, द्वैकुलिजिक।

[ सख्याया संवत्सरसंख्यस्य च। परिमाणान्तस्यासंज्ञाशाणयो। पा० ७।३।१५,१७। असज्ञाशाणकुलिजानामिति केचित्पठन्ति। काशिका। मानसंवत्सरस्याशाणकुलिजस्याखौ। जै० ५।२।२२। मानसवत्सरस्याशाणकुलिजस्यानाम्नि। शा० २।३।१००। सख्याधिकाभ्या सख्याया। संवत्सरपरिमाणस्याशाणकुलिजस्यासंज्ञायाम्। स० ७।१।२९-३०। [1]पञ्चलोहितिक. Ms ]

**वर्षस्याभाविनि** ॥२७॥ [स० ७।१।३१]

संख्याया परस्य वर्षस्याभाविनि विहिते ञणिति किनि च परतोऽचाम् आदेरच आदैचो भवन्ति। द्वाभ्या वर्षाभ्या भृतोऽधीष्टो वा, द्विवार्षिक । अभाविनीति किम्? त्रीणि वर्षाणि भावि धान्यम्, त्रैवर्षिकम् ।

[ वर्षस्याभविष्यति । पा० ७।३।१६ ]

**जाते प्रोष्ठभद्रात पदस्य** ॥२८॥ [०भद्राभ्या०। स० ७।१।३२]

प्रोष्ठभद्राभ्या परस्य पदशब्दस्य जातार्थविहिते ञणिति किनि च परतोऽचाम् आदेरच आदैचो भवन्ति। प्रोष्ठपदासु जात, प्रोष्ठपादो ब्राह्मण । भद्रपदासु जात, भद्रपाद । जात इति किम्? प्रोष्ठपदासु भव., प्रौष्ठपदो मेघ । भाद्रपद ।

[ जे प्रोष्ठपदानाम् । पा० ७।३।१८ । प्रोष्ठपदानामिति बहुवचननिर्देशात्पर्यायोऽपि गृह्यते भद्रपाद इति । काशिका । प्रोष्ठभद्राजाते । जै० ५।२।१६ ]

**हृद्भगसिन्धोः पूर्वस्य च** ॥२९॥

हृदादीनाम् उत्तरपदानाम् पूर्वपदस्य च ञणिति किनि च परतोऽचाम् आदेरच आदैचो भवन्ति। सौहार्दम्, सौभाग्यम्, साक्तुसैन्धव । [1]कच्छादित्वाद् [ ३।२।४८ ] अण्। सौहृदम् इति हृदयस्याणि हृदादेशो [ ५।२।५५ ], न हृद् उत्तरपदम् ।

[ हृद्भगसिन्ध्वन्ते पूर्वपदस्य च। पा० ७।३।१९। हृद्भगसिन्धो पूर्वपदस्य च। स० ७।१।३३ Should we read हृद्भगसिन्धूनाम् for हृद्भगसिन्धोः in S K? [1]सिन्धुशब्द कच्छादिषु पठ्यते तेन तदन्तविधिरिष्यत इत्यण्प्रत्यय । काशिका । ]

**अनुशतिकादीनाम्** ॥३०॥ [०च । पा० ७।३।२०]

अनुशतिकादीना ञणिति किति च परे उभयो पदयोरचाम् आदेरच आदैचो भवन्ति। अनुशतिकस्येदम्, आनुशातिकम्। अनुहोडेन

चरति, आनुहोडिक । अनुसवत्सरे दीयते, आनुसावत्सरिक । अगारवेणो-रपत्यम, आगारवैनवम अमिहत्याया भवम, आसिहात्यम। अस्यहत्य-शब्दोऽस्मिन्नर्थीनि विमुक्तादिभ्य [४।२।१५५] अण, आस्यहात्य । अस्य हेति प्रयोजनम अस्य, आस्यहैतिक, अत एव वचनात पद-समुदायाट्ठञ्, विभक्तेश्चालुक्। वध्योगस्यापत्यम्, बिदादित्वाद् [२।४।२२] अञ्, वाध्योग । पुष्करसदोऽपत्यम, पौष्करसादि बाह्वादित्वाद् [२।४।२०] इञ्। अनुरहतोऽपत्यम, आनुराहति । कुरुकत, कौरुकात्य; गर्गादित्वाद [२।४।२४] यञ्। कुरुपञ्चालेषु भव कौरुपाञ्चाल । उदक-शुद्धस्यापत्यम्, औदकशौद्धि । इह लोके भव, ऐहलौकिक । पारलौकिक; लोकान्ताट [३।३।२८] ठञ्। सर्वपुरुषाणाम इदम, सार्वपौरुषम। सर्वभूमेर्निमित्तम, सयोग उत्पातो वा, सार्वभौम । प्रयोगे भव, प्रायौगिक; अध्यात्मादित्वाट्ट [३।३।२९] ठञ्। परस्त्रिया अपत्यम, पारस्त्रैणेय; कल्याण्यादित्वाड [२।४।५६] ढकीनञ्। राजपुरुषात ष्यञि, राज-पौरुष्यम. ष्यञीति किम्? राजपुरुषायणि । अगोत्राद् आदेर्जाद्यच [२।४।९०] इति फिञ्। सूत्रनडस्यापत्यम्, सौत्रनाडि । आकृति-गणश्चायम। अभिगमार्हा गुणा, आभिगामिका । अधि देवे भव, आधिदैविक । आधिभौतिक । चतस्र एव विद्या, चातुर्वैद्यम्। एवं शातकौम्भम इत्याद्यपि सिद्धम्।

[अतो शतिक-होड-सवरण-रहत्-सवत्सराणाम्। कुरो कतपञ्चालयो। अधेर्देवभूतयो। इहपराभ्या लोकस्य। सर्वाद् भूमिपुरुषयोश्च। अस्याद्धत्यहेत्यो। वध्योग-प्रयोगा-ऽऽभिगमाऽ-गारवेणु-परस्त्री-पुष्करसद्-उदकशुद्ध-सूत्रनड-चतुर्विद्या-ऽसिहत्य-शतकुम्भ-सुखशयनादीना च। राजपुरुष-परिमण्डल-प्रतिभू-सर्ववेदाना ष्यञि। स० ७।१।३४-४१]

**देवतानां चार्थे सूक्तहविषोः ॥३१॥**

देवताशब्दाना चार्थवृत्तीना सूक्तहविषोरर्थयोर्ण्णिति किति च परे

उभयो· पदयोरचामदेरच आदैचो भवन्ति। आग्निवारुण सूक्त हविर्वा। सूक्तहविषोरिति किम्? स्कान्दविशाखम्।

[देवताद्वन्द्वे च। पा० ७।३।२१। यो देवताद्वन्द्व सूक्तहवि सम्बन्धी तन्नाय विधि। काशिका। देवताना द्वन्द्वे सूक्तहविषो। स० ७।१।४३]

**नेन्द्रस्य परस्य** ॥३२॥ [पा० ७।३।२२, स० ७।१।४४]

इन्द्रशब्दस्य परव्यवस्थितस्य ञ्णिति किति च परतोऽचामादेरच ऐज् न भवति। आग्नीन्द्रम्। परस्येति किम्? ऐन्द्राग्नम्।

**दीर्घाद् वरुणस्य** ॥३३॥ [स० ७।१।४४क]

दीर्घात् परस्य वरुणस्य ञ्णिति किति च परतोऽचाम् आदेरच आदैज् न भवति। मैत्रावरुणम्। दीर्घादिति किम्? आग्निवारुणम्।

[दीर्घाच्च वरुणस्य। पा० ७।३।२३]

**प्राचां नगरस्य** ॥३४॥ [पा० ७।३।२४]

प्राचा देशे वर्तमानस्य नगरस्य ञ्णिति किति च परतोऽचाम् आदेरच आदैचो भवन्ति, पूर्वस्य च। सौह्मनागर, पौण्ड्रनागर·। प्राचाम् इति किम्? उदीचा ग्रामे मद्रनगरे भव, [1]माद्रनगर।

[प्राचा नगरान्ते। पा० ७।३।२४, प्राचा नगरान्तस्य। स० ७।१।४२। [1]मा L]

**जङ्गलधेनुबलजस्य वा** ॥३५॥

जङ्गलादीना परेषा ञ्णिति किति च परतोऽचाम् आदेरच आदैचो वा भवन्ति, पूर्वस्य तु नित्यम्। कौरुजाङ्गलम्, कौरुजङ्गलम्। वैश्वधैनवम्, वैश्वधेनवम्। सौवर्णबालजम्, सौवर्णबलजम्।

[जङ्गलधेनुबलजान्तस्य विभाषितमुत्तरम्। पा० ७।३।२५, जङ्गलधेनुबलजान्तस्य वा। स० ७।१।४४ ख]

**अर्धात् परिमाणस्य पूर्वस्य तु वा** ॥३६॥ [पा० ७।३।२६, स० ७।१।४५]

अर्थात् परस्य परिमाणवाचिनो ञ्णिति किति च परतोऽचाम् आदेरच आदैचो भवन्ति, पूर्वस्य तु वा। आर्धद्रौणिक, अर्धद्रौणिक।

**नातः** ॥३७॥ [स० ७।१।४६]

अर्थात् परस्य परिमाणवाचिनो ञ्णिति किति च परतोऽत आन् न भवति, पूर्वस्य तु वा। आर्धप्रस्थिक, अर्धप्रस्थिक। तपर' किम्? अर्धखार्यां भवा, अर्धखारी, सा भार्यास्य, अर्धखारीभार्य इति। ०आदे-ञ्झेतुर० [५।२।३६] इति पुंवद्भावप्रतिषेधो भवति।

[नात परस्य। पा० ७।३।२७]

**प्राद् वाहनस्य ढे** ॥३८॥ [म० ७।१।४७]

प्रशब्दात् परस्य वाहनस्य ढे परत आद् भवति, पूर्वस्य तु वा। प्रवाहणस्यापत्यम् प्रावाहणेय, प्रवाहणेय। शुभ्रादित्वाड् [२।४।५३] ढक्। प्रवाहणेयी भार्यास्य, प्रवाहणेयीभार्य इत्यादेञ्झेतुर् [५।२।३६] इति पुवद्भावप्रतिषेधो 'यथा स्यात्। प्रवाहणेयस्य भाव, प्रवाहणेयकम् इत्यत्रापि ढ परोऽस्तीति विकल्पो भवति।

[प्रवाहणस्य ढे। तत्प्रत्ययस्य च। पा० ७।३।२८-२९। ढस्य च। स० ७।१।४८। प्राद्वाहणस्य ढे is found in Jainendra (v 2 32) and Śākaṭāyana (ii. 3 102) Hc has प्राद्वाहणस्यैये viii 4 21 So should we change the न of वाहन in the rule to ण?]

**नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्** ॥३९॥ [पा० ७।३।३०, स० ७।१।४९]

नञ्परेषा शुच्यादीना ञणिति किति च परतोऽचामादेरच आदैचो भवन्ति, पूर्वस्य तु वा। अशुचेरिदम् आशौचम्, अशौचम्। आनैश्वर्यम्, अनैश्वर्यम्। आक्षैत्रज्ञ्यम्, अक्षैत्रज्ञ्यम्। ब्राह्मणादिपाठाद् [४।१।१४१] भावे ष्यञ्। अकुशलस्येदम् आकौशलम्, अकौशलम्। आनैपुणम्, अनैपुणम्, अनैपुण्यम्[1]। अन्यपदार्थाद् भावे ष्यञादयो यथायोग भवन्ति।

कथम् अयाथातथ्यम्, आयथातथ्यम् इति? न यथातथम्, अयथातथम्। अयथातथस्य भाव, आयथातथ्यम्। यथातथस्य भाव, याथातथ्यम्। न याथातथ्यम्, अयाथातथ्यम्। एवम् आयथापुर्यम्, अयाथापुर्यम्।

[यथातथायथापुरयो पर्यायेण। पा० ७।३।३१, स० ७।१।५०। अयं योगः शक्योऽवक्तुम्। कथम् अयाथातथ्यम् आयथातथ्यम्। अयाथापुर्यम् आयथापुर्यम्? यदा तावत्पूर्वपदस्य वृद्धिस्तदैव विग्रह करिष्यते। न यथातथा अयथातथा। अयथातथाभाव आयथातथ्यम्। यदोत्तरपदस्य वृद्धिस्तदैव विग्रह करिष्यते। यथातथाभावो याथातथ्यम्। न याथातथ्यम् अयाथातथ्यम्। भाष्यम्। 'अक्षेत्रज्ञानीश्वरौ तत्पुरुषावेव ब्रह्मणादिषु पठ्येते। काशिका। युवादौ ब्राह्मणादौ च कुशलनिपुणशब्दौ पठितौ ताभ्या तदन्तविध्यभावात् भावविवक्षायाञ्च टण्ष्यणौ न भवत। केवलयोस्तु टणि ष्यणि च कृते पश्चान्नञ्समासे अकौशलम् अकौशल्यमिति अनैपुणमनैपुण्यमित्येव भवति। गोयीचन्द्र।]

**हनस्तोऽचिण्णलोः** ॥४०॥ [पा० ७।३।३२, स० ७।१।५१]

हन्तेश्चिण्णलोरन्यस्मिन् ञिति च परेऽन्त्यस्य तकारादेशो भवति। घातयति, घातक, साधुघाती, घात घातम्, घातो वर्तते। अचिण्णलोरिति किम्? अघानि, जघान।

**आतो युगणलि** ॥४१॥

आकारान्तस्य णलोऽन्यस्मिन् ञ्णिति परे युग् आगमो भवति। दाय:, ध्याय। दायक ध्यायक। अदायि, अध्यायि। णौ पुक वक्ष्यति [४५]। अणलीति किम्? ददौ दधौ।

[आतो युक् चिण्कृतो। पा० ७।३।३३, स० ७।१।५२]

**मः सेटो नावम्यमिकमाचमविश्रमः** ॥४२॥

ञ्णिति परतो मान्तस्य सेटो वमादिवर्जितस्य यद् उक्त तन् न भवति। शमः, दम। शमक, दमक। अशमि, अदमि। म इति किम्? पाठ, पाठकः। सेट इति किम्? याम, यामक। रामक। अवम्यमिकमाचमविश्रम इति किम्? वामः, वामक, अवामि। आम.,

आमक , आमि । काम , कामक , अकामि । आचाम , आचामक , आचामि । विश्राम , विश्रामक , व्यश्रामि । अणल्लीत्येव । शशाम । कथम् उद्यम , उपरम इति ? अड उद्यमे, यम[1] उपरमे [धातु० १।१३१,२९६] इति निपातनात् सिद्धम् ।

[ नोदात्तोपदेशस्य मान्तस्यानाचमेः । पा० ७।३।३४ । अत्यल्पमिदमुच्यतेऽनाचमेरिति । अवमिकमिचमीनामिति वक्तव्यम् । भाष्यम् । न मः सेटो वृद्धिवम्यमिकम्याचम । विश्रमेर्वा । स० ७।१।७३,७६ । I am inclined to think that विश्रम् in this rule is due to corrupt reading. Jainendra has विश्रमो वा v 2 41, Śāk विश्रमो घञि iv 1 234 and Hc. विश्रमेर्वा iv 3 56 I believe Mailinātha in his commentary on the Meghadūta quotes correctly from Candra under stanza 25 विश्रामेत्यत्र नोदात्तोपदेशस्य मान्तस्यानाचमेः इति पाणिनीये वृद्धिप्रतिषेधेऽपि विश्रमो वा इति चन्द्रव्याकरणे विकल्पेन वृद्धिविधानाद्रूपसिद्धि । Goyichandra no doubt says under वे श्रम् वा Sam 1. 6. चन्द्रोऽत्र नित्या वृद्धिमाह भागवृत्तिकारस्तु नित्य वृद्धयभावम् । वे श्रमेर्वेति वर्धमान. । [1]Cāndra Dhātupātha has यमु उपरमे but the Vrttikāra has been influenced by the *Kāśikā* which has कथमुद्यमोपरमौ ? अड उद्यमे यम उपरमे इति निपातनादनुगन्तव्यौ । ]

**जनिवधोः** ॥४३॥

ञ्णिति परतो जनेर्वधेश्च यदुक्त तन्न भवति । जन, जनक, अजनि । वध , वधक , अवधि । अणलीत्येव । जजान, ववाध ।

[ जनिवध्योश्च । पा० ७।३।३५, जनिवध्यो । स० ७।१।५५ ]

**मेर्णलि वा** ॥४४॥

मिबादेशे णलि परत आद् वा भवति । अह पपाच, अहं पपच मेरिति किम् ? स पपाच ।

[ णलुत्तमो वा । पा० ७।१।९१ । णलुत्तमे । स० ७।१।५७ ]

**ऋरीव्लीन्हीक्नूयीक्ष्माय्यातां पुग् णौ** ॥४५॥ [स० ७।१।५८]

अर्तेरियर्ते रीङो री व्ली गताव् इत्यनयोर्न्ही क्नूयी क्ष्मायी इत्येतेषाम् आकारान्ताना च णौ परत पुग् आगमो भवति। अर्पयति, रेपयति, व्लेपयति, न्हेपयति, क्नोपयति, क्ष्मापयति, यापयति, धापयति, जापयति। पूर्वान्तकरणम् अदीदपद् इत्युपान्त-ह्रस्वार्थम्।

[ अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग् णौ। पा० ७।३।३६। ऋह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ। स० ७।१।५८ ]

**शाछासाह्वाव्यावेपां युक्** ॥४६॥ [पा० ७।३।३७, स० ७।१।५९ ]

शादीना णौ परतो युग् आगमो भवति। निशाययति, अवच्छाययति, अवसाययति, ह्वाययति, व्याययति, वाययति, पाययति। पातेर्लुकं वक्ष्यति [ ५१ ]। कृतात्वाना ग्रहणात् पुक प्राप्तिं दर्शयति—इह प्रकरणे लाक्षणिकस्यापि ग्रहणामस्तीति। तेन क्रापयति, जापयतीत्येवमादि सिद्धं भवति। पा ग्रहणे। पै ओवै शोषणे [ धातु० १।२७१ ] इत्यस्यापि ग्रहणं सिद्धं भवति।

**वो विधूनने जुक्** ॥४७॥ [पा० ७।३।३८, स० ७।१।६०]

वातेर्विधूनने णौ परतो जुगागमो भवति। पक्षकेणोपवाजयति। विधूनन इति किम्? आवापयति केशान्। पै ओवै शोषणे [ धातु० १।२७१ ] इत्यस्यापि रूपम्।

**धूञ्प्रीञोर्नुक्** ॥४८॥ [स० ७।१।६१]

धूञ प्रीञश्च णौ परतो नुगागमो भवति। धूनयति, प्रीणयति।

[ णिच्प्रकरणे धूञ्प्रीञोर्नुग्वचनम्। पा० ७।३।३७।१ ]

**लियः स्नेहविलापने वा** ॥४९॥

लिय. स्नेहद्रवीकरणे णौ परतो नुगागमो वा भवति। घृतं विली-

नयति, घृतं विलाययति। ईकारान्तनिर्देशात् कृतात्त्वस्य पुग् एव। घृतं विलापयति। स्नेहग्रहणं किम्? जतु विलापयति।

[ **लीलोर्नुंग्लुकावन्यतरस्यां स्नेहविपातने। पा० ७।३।३९। लिय स्नेहद्रवीकरणे वा। स० ७।१।६२** ]

**लो लुक्** ॥५०॥ [स० ७।१।६३]

लातेर्णौ परतो लुगागमो वा भवति। घृतं विलालयति, घृतं विलापयति। स्नेहविलापन इत्येव। जटाभिरालापयते।

[ **लीलोर्नुंग्लुकावन्यतरस्यां स्नेहविपातने। पा० ७।३।३९** ]

**पातेः** ॥५१॥ [स० ७।१।६४]

पातेर्णौ परतो लुगागमो भवति, नित्य योगविभागात्। पालयति।

[ **पातेर्लुग्वचनम्। पा० ७।३।३७।२** ]

**प्रयोक्तुर्भियः षुक्** ॥५२॥

भियो णौ परत षुगागमो भवति, सा चेद् भी प्रयोजकाद् भवति। मुण्डो भीषयते। ईकारान्तनिर्देशात् कृतात्त्वस्य पुग् एव। मुण्डो भापयते। प्रयोजकाद् इति किम्? कुञ्चिकयैनं भाययति। करणाद् अत्र भीर्न तु प्रयोजकात्।

[ **भियो हेतुभये षुक्। पा० ७।३।४०, स० ७।१।६५** ]

**स्फायो वः** ॥५३॥ [पा० ७।३।४१, स० ७।१।६६]

स्फायेर्णौ परतो वकारोऽन्त्यस्य भवति। स्फावयति।

**शदेरगतौ तः** ॥५४॥ [पा० ७।३।४२, स० ७।१।६७]

शदेरगत्यर्थस्य णौ परतस्तकारो भवति। फलानि शातयति। अगताविति किम्? गा शादयति गोपालक। कथं व्रीहीन् रोपयति, रोहयतीति? रुपिणा रुहिणा च सिद्धम्।

[ **रुहः पोऽन्यतरस्याम्। पा० ७।३।४३, रुहे पो वा। स० ७।१।६८** ]

**सत्यार्थवेदानामापुक्** ॥५५॥

सत्यादीना णौ परत आपुग् भवति। सत्यापयति, अर्थापयति, वेदापयति।

[ णिविधावर्थवेदसत्यानामापुक् च। पा० ३।१।२५।२। Probably the rule occurred in the Sarasvatī-Kanthābharana in the form अर्थवेदसत्यानामापुक् though we miss it in the Madras edition ]

**मितां ह्रस्वः** ॥५६॥ [पा० ६।४।९२, स० ७।१।६९ ]

घटादयो मित [धातु० १।५४८] इति वचनाद् घटादीना णौ परतो ह्रस्वो भवति। घटयति, व्यथयति। आदैच्प्रतिषेधे वक्तव्ये ह्रस्वग्रहण किम्? श्रा पाके [धातु० १।५४२] श्रपयति। अन्यत्र श्रापयति। मारणतोषणनिशानेषु ज्ञा [५४३]। सज्ञपयति पशून्, मारयतीत्यर्थ। विज्ञपयति राजानम्, तोषयतीत्यर्थ। प्रज्ञपयति शस्त्रम्, तेजयतीत्यर्थ। एतेष्विति किम्? आज्ञापयति, विज्ञापयति। कथ प्रज्ञप्तिं प्रज्ञपयति? लोकपरितोषणमप्यत्र विवक्षितम्। कम्पने चलि [ ५४४ ]। चलयति। अन्यत्र्य चालयति। ऊर्जने छदि [५४५]। छदयति। अन्यत्र छादयति। जिह्वोन्मन्थने लडि [ ५४६ ]। लडयति। अन्यत्र लाडयति। हर्षग्लेपनयोर्मदि [ ५४७ ]। मदयति, अन्यत्रोन्मादयति। जनीजॄक्नसुरञ्जोऽमन्ताश्च [ ५४९ ]। जनयति, जरयति, क्नसयति, रजयति मृगान्। णौ मृगरमणे [ ५।३।३० ] इत्यनुनासिकलोप। अमन्ता। रमयति, दमयति, यमयति, सक्रमयति। कथ सक्रामयति? सक्रामं करोतीति णिच्। ज्वलह्वलह्मलनमामप्रादीना वा [ ५५० ]। ज्वलयति, ज्वालयति। ह्वलयति, ह्वालयति। ह्मलयति, ह्मालयति। नमयति, नामयति। अप्रादीनाम् इति किम्? [1]प्रज्वलयति, [2]प्रह्वलयति, [3]प्रह्मलयति, [4]प्रणमयति, [5]उपनमयति। ग्लास्नावनुवमा च [ ५५१ ]। ग्लपयति, ग्लापयति। स्नपयति, स्नापयति। वनयति, वानयति। वमयति, वामयति। अप्रादीनामित्येव। प्रग्लापयति,

प्रस्नापयति, [6]उपवनयति, [7]उद्वमयति। न कम्यमिचमाम [ ५५२ ]। अमन्ता इति ह्रस्वत्वे प्राप्ते प्रतिषेध । कामयते, आमयति, आचामयति। शमोऽदर्शने [ ५५३ ]। अदर्शनेऽर्थे शमो ह्रस्वो भवति। शमयति रोगम्। अदर्शन इति किम्? निशामयति रूपम्। यमोऽपरिवेषणे [ ५५४ ]। यमेरपरिवेषणेऽर्थे ह्रस्वो भवति। नियमयति। अपरिवेषण इति किम्? नियामयति ब्राह्मणान्। स्खदेरपपरिभ्या च [ ५५५ ]। अपपरिभ्या परस्य केवलस्य च स्खदेर्ह्रस्वो भवति। अपस्खदयति, परिस्खदयति, स्खदयति। स्खद स्खदने [ धातु० १।५१७ ] इति सिद्धे नियमार्थं वचनम। प्रस्खादयति। फण गतौ [ ५५६ ]। फणयति। अन्यत्र फाणयति फाणितम् फाण्टम्।

[ घटादयो मित । श्रा पाके। मारणतोपणनिशामनेषु ज्ञा। कम्पते चलि । ज्वलह्वलह्मलनमामनुपसर्गाद्वा। ग्लास्नावनुवमा च। न कम्यमिचमाम्। शमो दर्शने। यमोऽपरिवेषणे। स्खदिरवपरिभ्या च। पाणिर्नऽयधातुपाठ । [1]प्रज्वा° L [2]प्रह्वा° L [3]प्रह्मा L [4]प्रणा° L [5]उपना° L [6]उपवा° L [7]उद्वा° L ]

**चिण्णमोर्दीर्घश्च** ॥५७॥ [चिण्णमुलो० । म० ७।१।७०]

चिणि णमुलि च परतो मिता ह्रस्वो भवति, दीर्घश्च। अघटि, अघाटि। घट घटम्, घाटं घाटम्। दीर्घग्रहण किम्? अनुपान्तस्यापि यथा स्यात। अक्षञ्जि, अक्षाञ्जि। क्षञ्जं क्षञ्जम, क्षाञ्ज क्षाञ्जम्। अदक्षि, अदाक्षि। दक्ष दक्षम्, दाक्ष दाक्षम्।

[ चिण्णमुलोर्दीर्घोऽन्यतरस्याम्। पा० ६।४।९३ ]

**छादेर्घे** ॥५८॥

छादेर्घे परतो ह्रस्वो भवति। उरश्छद । घ इति किम्? छादयति।

[ छादेर्घेऽद्व्युपसर्गस्य। पा० ६।४।९६। छादेर्घेऽद्व्याद्व्युपसर्गस्य। स० ७।१।७१। अद्विप्रभृत्युपसर्गस्येति वक्तव्यम्। इहापि यथा स्यात्। समुपाभिच्छाद इति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। यत्र त्रिप्रभृतय सन्ति द्वावपि तत्र स्तः, तत्राद्व्युपसर्गस्येत्येव सिद्धम्। न वा एष लोके सम्प्रत्यय । न हि द्विपुत्र आनीयतामित्युक्ते त्रिपुत्र आनीयते। तस्माद् द्विप्रभृत्युपसर्गस्येति वक्तव्यम्। महाभाष्यम्। ]

**प्रादावेकस्मिन्** ॥५९॥

एकस्मिन्नेव प्रादौ सति च्छादेर्घे परतो ह्रस्वो भवति। प्रच्छदः, परिच्छद। एकस्मिन्निति किम्? समभिच्छाद, समुपच्छादः। कथम् आच्छाद? अण्यन्ताद् घञि भविष्यति।

[ See under 58 ]

**इस्मन्त्रन्क्विषु** ॥६०॥ [स० ७।१।७२]

छादेरिसादिषु परतो ह्रस्वो भवति। छदि, छद्म, छत्रम्, उपच्छत्।

[ इस्मन्त्रन्क्विषु च। पा० ६।४।९७ ]

**चङ्युपान्तस्य** ॥६१॥

चङ्परे णौ परत उपान्तस्य ह्रस्वो भवति। अचीकरत्। उपान्तस्येति किम्? अचकाङ्क्षत्। मा भवान् अटिटद् इति नित्यादपि द्विर्वचनादन्तरङ्गं ह्रस्वत्वमेव पूर्वं भवति। तथा हि। मा भवान् ओणिणद् इत्योणृ अपनयने [ धातु० १।१४८ ] इत्यस्य ऋदुपलक्षण णौ [1]ह्रस्वप्रतिषेधार्थम्। अलीलवद् इत्यैजावादेशावेवान्तरङ्गौ, अकृते चङि कृतत्वात्। तथादीदपद् इति पुग् एवान्तरङ्ग। अवीवदद् वीणा परिवादकेनेत्येकस्य णिचो लोपान् नाग्लोपि० [ ६२ ] इति प्रतिषेध प्राप्नोति। णिजातिनिर्देशान्न भविष्यति।

[ णौ चङ्युपधाया ह्रस्व। पा० ७।४।१। चङ्युपधाया। णेश्च। स० ७।१।७३-७४। [1]Should we read ह्रस्वत्व०, as in 63 Vrtti? ]

**नाग्लोपिशास्वृदिताम्** ॥६२॥ [पा० ७।४।२, स० ७।१।७५]

अग्लोपिना शासेर् ऋदिता च चङ्परे णौ परतो ह्रस्वो न भवति। मालाम् आख्यातवान्, अममालत्। राजानम् अतिक्रान्तवान्, अत्यरराजत्। अशशासत्। अययाचत्, अडुढौकत्।

**भ्राजभासभाषदीपजीवमीलपीडां वा** ॥६३॥ [स० ७।१।७६]

भ्राजादीना णौ चङि ह्रस्वो वा भवति। अबिभ्रजत्, अबभ्राजत्।

अवीभसत, अवभासत्। अबीभपत्, अवभापत्। अदीदिपत, अदिदीपत। अजीजिवत्, अजिजीवत्। अमीमिलत, अमिमीलत। अपीपिडत्, अपिपीडत्। [1]भ्राजभासोर्ऋदुपलक्षणत्व[2] ह्रस्वत्वप्रतिषेधार्थमनर्थकम्।

[ भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्। पा० ७।४।३। [1]भ्राजभासोर्ऋदित्करणमपाणिनीयम्। काशिका। [2]०लक्षण Ms ]

**कणादीनाम्** ॥६४॥

कणादीना चङ्परे णौ परतो ह्रस्वो वा भवति। अचीकणत्, अचकाणत्। अवीवणत्, अववाणत्।

[ काण्यादीना चेति वक्तव्यम्। के पुन काण्यादय ? काणिराणिश्राणिभाणिहेठिलोपय। महाभाष्यम् ७।४।३। कणवणभणश्रणलपह्वेआ च। स० ७।१।७७ *Kāśikā* also has the two examples अचीकण, अर्चाकणत् and अववाणत्, अवीवणत् In the Ākhyātavṛttı ( 260 ) of Kātantra both रण् and वण् are mentioned in this connexion ]

**उर्ऋत्** ॥६५॥ [पा० ७।४।७, स० ७।१।७८]

ऋवर्णस्योपान्तस्य चङ्परे णौ परत ऋदादेशो वा भवति। इरगगमपवाद। अचीकृतत्, अचिकीर्तत। अवीवृतत, अववर्तत्। अमीमृजत्, अममार्जत्।

**घ्र इत्** ॥६६॥ [स० ७।१।७९]

जिघ्रतेश्चङ्परे णौ परत इदादेशो भवति वा। अजिघ्रिपत्, अजिघ्रपत।

[ जिघ्रतेर्वा। पा० ७।४।६ ]

**स्थः** ॥६७॥ [स० ७।१।८०]

तिष्ठतेश्चङि णौ परत इद् भवति, नित्य योगविभागात्। अतिष्ठिपत्।

[ तिष्ठतेरित्। पा० ७।४।५ ]

**पिबः पीप्यः** ॥६८॥

पिबते मद्विर्वचनस्य पीप्यादेशो भवति। अपीप्यत्।

[लोप पिबतेरीच्चाभ्यासस्य। पा० ७।४।४। पिब पीप्य साभ्यासस्य। स० ७।१।८१]

**देङो दिगि लिटि** ॥६९॥ [स० ७।१।८२]

दयते मद्विर्वचनस्य लिटि परतो दिग्यादेशो भवति। अवदिग्ये, अवदिग्याने। लिटीति किम्? देदीयते।

[द्यतेर्दिगि लिटि। पा० ७।४।९]

**अधातोः कीदतोऽसुप आपि** ॥७०॥

आपि परेऽधातोर्य ककारस्तस्मात् पूर्वस्यात इदादेशो भवति, स चेदावसुप परो भवति। जटिलिका, कारिका, मामिका, पाचिका। अधातोरिति किम्? शका। कीति किम्? नन्दना। अत इति किम्? गोका, नौका। तपर किम्? राका। असुप इति किम्? बहुपरिव्राजका मथुरा। बहुचर्मिकेति ककारेण सुपो व्यवधानात् सिद्धम्। आपीति किम्? कारक।

[प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः। पा० ७।३।४४, स० ७।१।८४]

**यकाभ्याम् आपोऽत्यक्त्यपो वा** ॥७१॥

[1]त्यक्त्यपा वर्जितस्याधातोरयौ यकारककारौ ताभ्या परस्याप स्थाने योऽकारस्तस्य के आप्परे परत इदादेशो वा भवति, स चेद् आबसुप परो भवति। इभ्यिका, इभ्यका। चटकिका, चटकका। यकाभ्याम् इति किम्? अश्विका। आप इति किम्? साकाश्ये भवा, साकाश्यिका। पकार किम्? शुभयिका। अत्यक्त्यप इति किम्? दाक्षिणात्यिका, इहत्यिका। अधातोरित्येव। सुनयिका, अशोकिका।

[उदीचामातः स्थाने यकपूर्वायाः। पा० ७।३।४६। त्यक्त्यपोश्च प्रतिषिद्धत्वात्। ७।३।४४।५। अधातुत्यकत्यप्यकाभ्यामाप्स्थानस्य वा। स० ७।१।८६। [1]त्यक्त्यपा L ]

**भस्त्रैषाजाज्ञाद्वास्वानाम्** ॥७२॥ [स० ७।१।८७]

भस्त्रादीनाम् आपः स्थानेऽतः के परतः आप्यसुपः इत्त्वं वा भवति। भस्त्रिका, भस्त्रका। नैतदस्ति, अनुक्तपुंस्काद् [७३] इत्येव सिद्धम्। इदं तर्हि। अविद्यमानभस्त्रा, अभस्त्रा, सा चेद् अल्पा ह्रस्वा वा, अभस्त्रिका, अभस्त्रका। बहुभस्त्रिका, बहुभस्त्रका। अनिभस्त्रिका, अनिभस्त्रका। निर्भस्त्रिका, निर्भस्त्रका। अत्र हि ह्रस्वत्वे कृते भाषितपुंस्कादाब् विधीयते। या तु न भस्त्रा, अभस्त्रा, तस्याभाषितपुंस्काद् आप उत्तरेणैव सिद्धम्। अभस्त्रका, अभस्त्रिका, अभस्त्राका। परमभस्त्रका, परमभस्त्रिका, परमभस्त्राका। एषिका, एषका। अजिका, अजका। अनजिका, अनजका। बह्वजिका, बह्वजका। ज्ञिका, ज्ञका। अज्ञिका, अज्ञका। बहुज्ञिका, बहुज्ञका। द्विके, द्वके। स्विका, स्वका। अस्विका, अस्वका। इह त्वनेकका, अद्वकेत्यकचो मध्य-पातित्वाद् असुप इति प्रतिषेधेन भवितव्यम्। स्वशब्दस्य तु ज्ञातिधनाख्याया क एवेति तेन व्यवधानाद् असुप इति प्रतिषेधो नास्ति।

**[ भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि। पा० ७।३।४७। नञ्पूर्वग्रहणानर्थक्यं चोत्तरपदमात्रस्येद्वचनात्। वा० २। ]**

**अनुक्तपुंस्काद् आच्च** ॥७३॥

अभाषितपुंस्काद् विहितस्यापः स्थानेऽतः के परतः आप्यसुपः इत्त्वम् आत्त्वं च वा भवति। खट्विका, खट्वका, खट्वाका। न खट्वा, अखट्वा, सा चेद् अल्पा ह्रस्वा वा, अखट्विका, अखट्वका[1], अखट्वाका। या त्वविद्यमाना खट्वास्या, सा खट्विकैव, भाषितपुंस्कत्वात्। एवम् अतिखट्विका।

**[ अभाषितपुंस्काच्च। आदाचार्याणाम्। पा० ७।३।४८-४९, अभाषितपुंस्कादा च। स० ७।१।८८।** [1]Ms Om **]**

**वर्तका शकुनौ** ॥७४॥ [स० ७।१।८९]

वर्तकेति शकुनावभिधेये निपात्यते। वर्तका पक्षी। वर्तिकैवान्या।

**[ वर्तका शकुनौ प्राचाम्। पा० ७।३।४५।८ ]**

**सूतकापुत्रकावृन्दारकाः** ॥७५॥ [स० ७।१।९०]

एषाम् इत्त्वाभावो वा निपात्यते। सूतका, सूतिका। पुत्रका, पुत्रिका। वृन्दारका, वृन्दारिका।

[ वा सूतकापुत्रकावृन्दारकाणाम्। पा० ७।३।४५।१० ]

**नरिका** ॥७६॥

नरान् कायतीति नरिकेति नित्यम् इत्त्व योगविभागान्निपात्यते।

[ ममकनरकयोरुपसंख्यानमप्रत्ययस्थत्वात्। पा० ७।३।४४।४। मामकनरकयोश्च। स० ७।१।८५ ]

**न यत्तदोः** ॥७७॥

यत्तदोरिदादेशो न भवति। यका, सका। यका तका पचामहे।

[ न यासयोः। पा० ७।३।४५। न यत्तत्स्यकानाम्। स० ७।१।९१ ]

**आशिषि** ॥७८॥ [स० ७।१।९२]

आशिषि गम्यमानायाम् इत्त्व न भवति। जीवतात्, जीवका। नन्दतात्, नन्दका।

[ आशिषि च। पा० ७।३।४५।३ ]

**क्षिपकादीनाम्** ॥७९॥

क्षिपकादीनाम् इत्त्व न भवति। क्षिपका। ध्रुवका। एडका। चटका। देवका।

[ क्षिपकादीना च। पा० ७।३।४५।५। क्षिपका-ध्रुवका-धुवका-लहका-चरका-चटकेष्टकैडकैरका-करकाऽ-ऽवका-ऽलका-दण्डका-पिपका-कन्यका-मेनकादीनाम्। स० ७।१।९४ ]

**तारका ज्योतिषि** ॥८०॥ [पा० ७।३।४५।६, स० ७।१।९५]

तारकेति ज्योतिषि वाच्ये निपात्यते। तारिकान्या।

**वर्णका तान्तवे** ॥८१॥ [पा० ७।३।४५।७, स० ७।१।९६]

वर्णकेति तान्तवे द्रव्येऽभिधेये निपात्यते। वर्णिकान्या।

**अष्टका पितृणाम् ॥८२॥**

अष्टकेति निपात्यते पितृसम्बन्धिनी चेत्। अन्यत्राष्टिका खारी। कथम् उपत्यका, अधित्यकेति? त्यकन्निपातनाद् [४।२।३५] एव सिद्धम्।

**[अष्टका पितृदेवत्ये। पा० ७।३।४५।१, म० ७।१।९७। प्रतिषेधे त्यकन उपसंख्यानम्। पा० ७।३।४५।१। न यत्-तत्-त्यकानाम्। म० ७।१।९१]**

**चजोः कु घिण्यतोः ॥८३॥**

चकारजकारयोर्घिति ण्यति च परतः कवर्गादेशो भवति। पाकः, रागः, त्यागः, पाक्यम्, वाक्यम्, व्यङ्ग्यम्।

**[चजो कु घिण्ण्यतो। पा० ७।३।५२, म० ७।१।९८]**

**न्यङ्क्वादयः ॥८४॥**

न्यङ्क्वादयः शब्दाः कृतकुत्वा निपात्यन्ते। न्यङ्कुः। मद्गुः। भृगुः। तक्रम्। वक्रम्। ओकः। दृक् (?)। मेघः, अर्घः, निदाघः, अवदाघः। निपातनं च विशिष्टविषयमेव, न सर्वत्र भवति। मेहः, अर्हः, निदाहः, अवदाहः। व्यतिषङ्गः, अवसर्गः, व्यतिभङ्गः, अनुषङ्गः इति घान्ता भविष्यन्ति कर्तर्यपि, बहुलाधिकारात्, अत एवतेभ्योऽञ् न प्रयोक्ष्यते। श्वपाकः, मांसपाकः, उलूकपाकः, कपोतपाकः इति पाकशब्देन समासो भविष्यति। व्याप्यादण् [१।२।१] एतेभ्यो बहुलाधिकारात् [१।१।१०३] न प्रयोक्ष्यते। दूरेपाकः, क्षणेपाकः, फलेपाकः। सप्तम्या बहुलम् [५।२।११] इत्यलुक्। [1]डावन्तावप्यत एव सिद्धौ। उकारान्ता इत्यपरे पठन्ति। दूरेपाकुः, क्षणेपाकुः, फलेपाकुरिति, तेषाम् औणादिकत्वात् समुपपन्नम्। न्यग् रुणद्धीति न्यग्रोधः। वीरुत्। अन्येषाम् अपि [५।२।१४५] इति दीर्घत्वम्, अतो धत्वम् अप्येतयोर्न वक्तव्यम्।

**[न्यङ्क्वादीनां च। पा० ७।३।५३। न्यङ्क्विमस्जिभ्रस्जीनामौ। तञ्चिवञ्च्योरकि। उपावाभ्यां सृजोऽचि। व्यतिभञ्ज्यनुसञ्ज्योश्च। पचेर्दूरादिभ्यो णे। कपोतो-**

**लूकश्वमासेभ्योऽणि। उच के गुणश्च। शुचिरुच्योर्धजि। मिहेर्हस्याचि सञ्ज्ञायाम्। वहे सम्प्रसारण चानुपसर्गस्य। दहेर्न्यवाभ्या घञि। अर्हे। स० ७।१।९९-११०।**
[1]The dual shows that क्षणेपाक is to be omitted ]

**ञ्णिन्नि हनो हः ॥८५॥**

ञिति णिति नकारे च परतो हन्तेर्हकारस्य कुत्व भवति। घातः, घातक, घ्नन्ति। हननीयक इति न भवति व्यवधानात्।

[ **हो हन्तेर्ञ्णिन्नेषु। पा० ७।३।५४। हन्तेर्ञ्णिति। स० ७।१।१११** ]

**द्वित्वहेतौ** ॥८६॥ [स० ७।१।११३]

द्विर्वचनहेतौ परे हन्तेर्हकारस्य कुत्व भवति। जङ्घन्यते, जिघासति। जिहननीयिषतीति न भवति व्यवधानात्।

[ **अभ्यासाच्च। पा० ७।३।५५** ]

**हेरचङि** ॥८७॥ [पा० ७।३।५६, स० ७।१।११४]

द्वित्वहेतावचङि परतो हिनोते कुत्व भवति। प्रजिघाय, प्रजिघीषति। अचङीति किम्? प्राजीहयत्। णिव्यवधानादेव सिद्धेऽचङीति प्रतिषेधादन्यत्र णिज्व्यवहितेऽपि द्वित्वहेतौ कुत्व भवति। प्रजिघाययिषति।

**सन्लिटोर्जेः** ॥८८॥ [पा० ७।३।५७, स० ७।१।११५]

सनि लिटि च परतो जयते कुत्वं भवति। जिगीषति, जिगाय। सन्लिटोरिति किम्? जेजीयते। इह कस्मान् न भवति। जिज्यतु, जिज्युरिति? लाक्षणिकत्वात्। जिनातेर्हि यण इकि कृते एतद् रूपम्।

**चेर्वा** ॥८९॥ [स० ७।१।११६]

चिनोते सन्लिटो परत कुत्व वा भवति। चिकीषति, चिचीषति। चिकाय, चिचाय। सन्लिटोरित्येव। चेचीयते।

[ **विभाषा चे। पा० ७।३।५८** ]

**न क्वादेः** ॥९०॥ [पा० ७।३।५९]

कवर्गादेर्धातो कुत्व न भवति। कूज, कूज्यम्। खर्जः, खर्ज्यम्।

**अजिव्रज्योः** ॥९१॥

अजेर्व्रजेश्च कुत्वं न भवति। समाजः, उदाजः, परिव्राजः, परिव्राज्यम्। कथं भुज इति? भुजेः को भविष्यति। करणम् अपि कर्तृतया विवक्ष्यते। कथं न्युब्जः? अचि कर्तरि भविष्यति। भोग इति घञि, अभ्युद्गः, समुद्गः इति गमेर्डो भविष्यति।

[ अजिव्रज्योश्च। भुजन्युब्जौ पाण्युपतापयोः। पा० ७।३।६०-६१। शुच्युब्ज्योर्घञि कुत्वम्। ७।३।५९।२। पाण्युपतापयोरिति किम्? भोगः समुद्गः। काशिका। ९०-९१ न काद्यजिव्रज्यादेः। म० ७।१।११७। The printed Madras edition adds निष्ठायां सेट् after the visarga which remaining intact shows the subsequent portion is not a part of this rule ]

**वञ्चेर्गतौ** ॥९२॥ [पा० ७।३।६३, म० ७।१।११०]

वञ्चेर्गतौ गम्यमानायां कुत्वं न भवति। वञ्च्यं वञ्चन्ति वाणिजाः[1]। गताविति किम्? वङ्क्यं[2] काष्ठम्। कुटिलमित्यर्थः।

[ [1]Ms reads वणिजाः. The full stanza is quoted by Hemachandra in his Bṛhadvṛtti on iv 1 113

पश्यैते व्याधवार्केण्यसङ्कुले वित्तवत्तमाः।
रात्रावपि महारण्ये वञ्च्यं वञ्चन्ति वाणिजाः॥

He says वञ्चेर्घञ्। वञ्च्यं वञ्चति गन्तव्यं गच्छतीत्यर्थः। [2]The printed *Kāśikā* reads वङ्क्यम् but both Jinendrabuddhi and Haradatta read वङ्कम् which they derive with घञ् but their explanation is hardly convincing The Bhāsāvṛtti and the Siddhānta-Kaumudī read वङ्क्यम् which is also the reading of the Kātantravṛtti (Kṛdvṛtti 488), Śākaṭāyanavṛtti (iv 1 174), Mugdhabodha (973), Mādhavīyadhātuvṛtti etc Hemacandra reads वङ्कम् but he reads वञ्च्यम् also as वञ्चम् So the evidence is in favour of वङ्क्यम् ]

**ण्य आवश्यके** ॥९३॥ [पा० ७।३।६५, स० ७।१।१२१]

ण्ये परत आवश्यकेऽर्थे कुत्व न भवति। पाच्यम्, अवश्यपाच्यम्। मोच्यम्, अवश्यमोच्यम्। आवश्यक इति किम्? पाक्यम्।

[क्त्यो। जै० ४।४।९८, ह्लादोऽ क्ति। शा० ४।२।२४४, ह्लादो ह्रद् क्तयोश्च। हे० ४।२।६७. It is to be noted that क्तिन् is not mentioned in ह्लादो ह्रस्व (Krt 1. 18) of the Kātantra The Vrtti says प्रह्लत्तिरिति कैश्चिदिष्यत इत्यर्थ। इह तु दीर्घवानेव प्रह्लात्तिरिति प्रमाणम्।]

**ऋचरुचयाचत्यजाम्** ॥९४॥ [स० ७।१।१२२]

ऋचादीना ण्ये परत· कुत्वं न भवति। अर्च्यम्, रोच्यम्, याच्यम्, त्याज्यम्। ऋचेरत एव ण्य।

[यजयाचरुचप्रवचर्चश्च। पा० ७।३।६६। प्रवचिग्रहणमनर्थक वचोऽशब्दसज्ञाभावात्। उपसर्गपूर्वनियमार्थमिति चेदविवाक्यस्य विशेषवचनात् सिद्धम्। ण्यप्रतिषेधे त्यजेरुपसख्यानम्। वा० १-३। Printed SK reads प्रवचयजत्यजाम् vii 1 122 but the correct reading appears to be ऋचरुच ]

**वचोऽशब्दाख्यायाम्** ॥९५॥

वचेर्ण्ये परतोऽशब्दाख्याया गम्यमानाया कुत्व न भवति। वाच्यम्, प्रवाच्यम्। अशब्दाख्यायाम् इति किम्? वाक्यम्।

[वचोऽशब्दसंज्ञायाम्। पा० ७।३।६७, स० ७।१।१२३]

**प्रयोज्यनियोज्यौ शक्ये** ॥९६॥

एतौ शब्दौ शक्येऽर्थे निपात्येते। शक्य· प्रयोक्तुम्, प्रयोज्यः। शक्यो नियोक्तुम्, नियोज्य·। शक्य इति किम्? प्रयोग्य, नियोग्य.।

[प्रयोज्यनियोज्यौ शक्यार्थे। पा० ७।३।६८, निप्राभ्या युज शक्ये। स० ७।१।१२४]

**भोज्यमन्ने** ॥९७॥ [स० ७।१।१२५]

भोज्यम इत्यन्नेऽभिधेये निपात्यते। भोज्य ओदन , भोज्या यवागू । अन्न इति किम्? भोग्य कम्बल ।

[भोज्य भक्ष्ये। पा० ७।३।६९। भोज्यमभ्यवहार्य इति वक्तव्यम्। इहापि यथा स्यात्। भोज्य सूप.। भोज्या यवागूरिति। कि पुन कारण न सिध्यति? भक्षिरय खरविशदे वर्तते, तेन द्रवे न प्राप्नोति। नावश्य भक्षि खरविशद एव वर्तते। कि तर्हि? अन्यत्रापि वर्तते। तद् यथा। अब्भक्ष वायुभक्ष इति। भाष्यम्।]

**यजो बहुलम् ॥९८॥**

यजेर्बहुल कुत्व न भवति। याज्यम्, प्रयाज्यम्, पर्नीमयाज , उपांशुयाज , ऋतुयाज , याग , प्रयाग , अनुयाग ।

[प्रयाजानुयाजौ यज्ञाङ्गे। यजयाचरुचप्रवचर्चश्च। पा० ७।३।६२,६६। प्रयाजानुयाजग्रहण प्रदर्शनार्थम्, अन्यत्राप्येवंप्रकारे कुत्वं न भवति। एकादशोपयाजा। उपांशुयाजमन्तरा यजति। अष्टौ पत्नीसयाजा भवन्ति। ऋतुयाजैश्चरन्ति। इत्येवमादि सिद्धं भवति। काशिका। प्रयाजानुयाजोपांशुयाजपत्नीसयाजर्तुयाजा यज्ञाङ्गे। स० ७।१।१२०]

**ओलोपः श्ये ॥९९॥**

श्ये परत ओकारस्य लोपो भवति। दो। अवद्यति। सो। अवस्यति।

[ओत श्यनि। पा० ७।३।७१, ओतो लोप श्यनि। स० ७।१।१२७]

**क्सस्याचि ॥१००॥** [पा० ७।३।७२, स० ७।१।१२८]

क्सस्याजादौ परतोऽन्त्यस्य लोपो भवति। अधुक्षाताम्, अधुक्षि। अचीति किम्? अधुक्षत।

**लुग् वा दुहदिहलिहगुहां तङि दन्त्ये ॥१०१॥**

दुहादीना तङि दन्त्ये परत क्सस्य लुग् वा भवति। लुग्ग्रहणं सर्वलोपार्थम। अदुग्ध, अधुक्षत। अदुग्धा, अधुक्षथा। अदुग्ध्वम्, अधुक्षध्वम्। अदुह्वहि, अधुक्षावहि। अदिग्ध, अधिक्षत। अलीढ, अलिक्षत।

न्यगूढ, न्यवुक्षन। दुहादीनाम् इति किम्? [1]व्यत्यरुक्षन। नडीति किम्? अवुक्षत्। दन्त्य इति किम्? अवुक्षामहि।

[लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये। पा० ७।३।७३। लुग्वा दुहदिहलिहगुहिभ्य आत्मनेपदे दन्त्ये। स० ७।१।१२९। [1]व्यत्यमुक्षत L.]

शमामष्टानां श्ये दीर्घः ॥१०२॥ [स० ७।१।१३०]

शमादीनामष्टाना श्ये परतो दीर्घो भवति। शाम्यति, दाम्यति, ताम्यति, श्राम्यति, भ्राम्यति, क्षाम्यति, क्लाम्यति, माद्यति। अष्टानाम् इति किम्? असयति। श्य इति किम्? भ्रमति।

[शमामष्टाना दीर्घ श्यनि। पा० ७।३।७४]

ष्ठिवुक्लमाचमां शिति ॥१०३॥

ष्ठीवते क्लमेराचमेश्च शिति परतो दीर्घो भवति। ष्ठीवति, क्लामति, आचामति। आङ्पूर्वग्रहणं किम्? चमति।

[ष्ठिवुक्लमुचमा शिति। पा० ७।३।७५, दीर्घत्वमाङि चम। वा० १, ष्ठिवुक्लम्वाचमां शिद्विकरणे। स० ७।१।१३१]

क्रमोऽतडाने ॥१०४॥

क्रमतेरतडाने शिति परतो दीर्घो भवति। क्रामति, क्रामन्। अतडान इति किम्? आक्रमते सूर्य.। आक्रममाण सूर्यः।

[क्रम परस्मैपदेषु। पा० ७।३।७६, स० ७।१।१३२]

इषुगमियमां छः ॥१०५॥ [पा० ७।३।७७, स० ७।१।१३३]

इषुप्रभृतीना शिति परतश्छो भवति। इच्छति, गच्छति, यच्छति। उकारग्रहणं किम्? इष्यति, इष्णाति। पर्येषतेश्च न भवति।

पाघ्राध्मास्थाम्नादाण्दृशशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यशीयसीदाः ॥१०६॥

पादीना शिति परत. पिबादय आदेशा भवन्ति। पिबेरदन्त-

त्वादेदेङ् न भवति। पिबति, जिघ्रति, धमति, तिष्ठति, मनति, यच्छति, पश्यति, शीयते, सीदति। कथम् ऋच्छति, धावतीति? प्रकृत्यन्तरत्वात्। अर्तेः शिति प्रयोगो न भविष्यति, घस्त्यादिवत् नियतविषयत्वात्। सर्तेस्तु विसरति, प्रसरतीति सिद्धमादेशाभावात्।

[पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्छधौशीयसीदाः। पा० ७।३।७८ SK. vii 1 134 omits सर्ति and धौ and frames a separate rule सर्तेर्धावो वेगितायां गतौ vii 1 135]

ज्ञाजनोर्जाः ॥१०७॥ [०जा। पा०७।३।७९, म०७।१।१३६]

जानातेर्जनेश्च शिति परतो जादेशो भवति। जानाति, जायते।

प्वादीनां ह्रस्वः ॥१०८॥ [पा०७।३।८०, म०७।१।१३७]

प्वादीनां शिति परतो ह्रस्वो भवति। पुनाति, लुनाति। प्वादय आगणान्ताः। कथं जानाति? ज्ञाजनोर्जा [१०७] इति दीर्घोच्चारणात्।

[येषामागणान्ताः प्वादयस्तेषां जानातीत्रापि ह्रस्वः प्राप्नोति। ज्ञाजनोर्जा (७।३।७९) इति दीर्घकरणसामर्थ्यान्न भवति। काशिका।]

मिदेरेत् ॥१०९॥ [म० ७।१।१३८]

मिदेरिकारस्य शिति परत एकारो भवति। मेद्यति, प्रमेद्यति। प्रतिषेधबाधनार्थ आरम्भः।

[मिदेर्गुणः। पा० ७।३।८२]

इति चान्द्रे व्याकरणे षष्ठाध्यायस्य प्रथमः पादः समाप्तः।

इकोऽदेङ् क्रियार्थायाः ॥ १ ॥

इगन्ताया प्रकृतेः क्रियार्थाया अदेङो भवन्ति। कर्ता, चेता, स्तोता। अत्र प्रत्यासत्तेरिकारस्यैकारः, उकारस्यौकारः, परिशेष्याद् ऋकार-

स्याकारः। इक इति किम्? यानम्, म्लायति, उम्भिता। क्रियार्थाया इति किम्? वायुभि, पटुतरः, अग्निकाम्यति।

[ १-२१ सार्वधातुकार्धधातुकयो। पा० ७।३।८४, सार्वधातुकार्धधातुकयोर्गुणः। स० ७।२।१ ]

**उश्नोः ॥ २ ॥**

प्रकृतेर्विहितस्योकारस्य श्नोश्चादेङो भवन्ति। करोति, चिनोति। कथ तरुर्मद्गुरिति? श्नुसाहचर्याद् विकरणस्यैव ग्रहणम्।

**जुस्पुकोः ॥ ३ ॥** [स० ७।२।२]

जुसि पुकि च परत इकोऽदेङो भवन्ति। अबिभयु, अबिभरुः, अजुहवु। ह्रेपयति, क्नोपयति। इक इत्येव। अनेनिजु, यापयति। कथं चिनुयु? अत्र द्वौ प्रतिषेधौ, अपिदाश्रयो यासुडाश्रयश्च।

[ जुसि च। पुगन्तलघूपधस्य च। पा० ७।३।८३,८६। अथ चिनुयु सनुयुरित्यत्र कस्मान्न भवति? अत्र द्वे ङित्त्वे सार्वधातुकाश्रय यासुडाश्रय च। तत्र नाप्राप्ते सार्वधातुकाश्रयङित्त्वनिमित्ते प्रतिषेधे जुसि गुण आरभ्यमाणस्तमेव बाधते। यासुडाश्रयङित्त्वनिमित्त तु न बाधते, तत्र हि प्राप्ते चाप्राप्ते चारभ्यत इति। प्रदीपिका।]

**लघोरुपान्तस्य ॥ ४ ॥**

उपान्तस्येको लघोरदेङो भवन्ति। वर्तिता, भेत्ता, बोद्धा, योद्धा। लघोरिति किम्? धूपिता। उपान्तस्येति किम्? रुणद्धि। क्रियार्थाया इत्येव। काष्ठभिद्भ्याम्।

[ पुगन्तलघूपधस्य च। पा० ७।३।८६। लघोरुपधाया। ७।२।५ ]

**सृजिदृशोर्झल्यम् ॥ ५ ॥**

सृजेर्दृशेश्च झलादौ परतोऽमागमो भवति। स्रष्टा, स्रष्टुम्। द्रष्टा, द्रष्टुम्। कथम् अस्राक्षीत्, अद्राक्षीत्? अदेङपवादोऽयं योगः, आदैच् तु भवत्येव। झलीति किम्? सर्जनम्, दर्शनम्। क्ङितीति प्रतिषेधात् सृष्टम्, दृष्टम्। क्रियार्थाया इत्येव। रज्जुसृड्भ्याम्।

[ मृजिदृशोर्झल्यमकिति। पा० ६।१।५८। सृजदृशोर्झल्य गुणवृद्धिप्रसङ्गे। स० ७।१।१३९ ]

स्पृशमृशकृषतृपदृपस्तृपां वा ॥ ६ ॥ [स० ७।१।१४०]

स्पृशादीनां झलादौ परतोऽनागमो भवति वा। स्प्रष्टा, स्पर्ष्टा। म्रष्टा, मर्ष्टा। क्रष्टा, कर्ष्टा। त्रप्ता, तर्प्ता। द्रप्ता, दर्प्ता। स्रप्ता, सर्प्ता। झलीत्येव। स्पर्शनम्। क्रियार्थाया इत्येव। घृतस्पृग्भ्याम्।

[ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्। पा० ६।१।५९ ]

द्विरुक्तस्य नाच्यलिटि ॥ ७ ॥

कृतद्विर्वचनस्य लघूपान्त्यस्याजादावलिटि परतो यदुक्तं तन्न भवति। नेनिजानि, अनेनिजम्। द्विरुक्तस्येति किम्? वेदानि, अवेदम्। अचीति किम्? नेनेक्ति। अलिटीति किम्? निनेज। उपान्त्यस्येत्येव। जुहवानि।

[ नाभ्यस्तस्याचि पिति सार्वधातुके। पा० ७।३।८७, नाभ्यस्तस्याचि सार्वधातुके। स० ७।२।६ ]

तिङ्शित्स्वपिदाशीर्लिङि ॥ ८ ॥

तिङि शिति चापिदनाशीर्लिङि च परत इकोऽदेङो न भवन्ति। चिनुत, चिन्वन्ति, बिभिदतु, बिभिदु तुदति, नुदति, चिन्वीत, तिङ्शितीति किम्? कर्ता। अपिदाशीर्लिङीति किम्? तरति, विचेपीष्ट। कथं बभूव, बभूविथेति? नित्यत्वाद् वुकि कृते कारेण व्यवधानान् न भविष्यति।

[ सार्वधातुकमपित्। असंयोगाल्लिट् कित्। पा० १।२।४-५। तिङ्शित्सार्वधातुकम्। आर्धधातुकं शेष। लिट् च। लिङाशिषि। पा० ३।४।११३-११६। ८-९। अपिति। अनाम्लिट्यजागु। स० ७।२।७-८ ]

जागुर्लिटि ॥ ९ ॥

जागर्तेस्तिङि शिति चापित्यलिटि परतोऽदेङो न भवन्ति। जागृत, जागृथ, जाग्रत्। अलिटीति किम्? जजागरतु, जजागरु। तिङ्शितीत्येव। जागरिता। अपिदाशीर्लिङीत्येव। जागर्ति, जागरिषीष्ट।

**चिण्णलिङत्सु** ॥१०॥

जागर्तेश्चिण्णलोरच आद्विषये ङित्येव च प्रतिषेधविषयेऽदेङो न भवन्ति। अजागारि, जजागार, जागृयात्। कथ जागृवि ? औणादिकत्वात् [उ० १।८२] न भविष्यति। एतेष्विति किम् ? जागरयति, जागरक., जागर , जागरित , जागर्यात्।

[९-१० जाग्रोऽविचिण्णल्ङित्सु। पा० ७।३।८५, जागुरकस्काने किति। अचिण्णल्ञ्णिति। स० ७।२।३-४ ]

**क्ङिति** ॥११॥ [स० ७।२।९]

किति ङिति च परत प्रकृतेरिकोऽदेङो न भवन्ति। कृतम्, जितम्, शुद्धम्, बुद्धम्। नरीनृत्यते, चेचीयते, तोष्टूयते, लोलूयते।

[क्ङिति च। पा० १।१।५]

**अतिङ्याच्च तल्लोपे** ॥१२॥

अतिङि परत क्नितो ङितश्च तल्लोपे सतीकोऽदेङो न भवन्ति, आच्च। यग्लोपे। कुसुभिता, मगवक.। क्यङ्लोपे। समिधिता। यङ्लोपे। लोलुव, पोपुव, चेच्य., देद्य, नेन्य., मरीमृज, बेभिदिता। अतिङीति किम् ? लोरवीति। निकुचितम् इति क्दिाश्रयप्रतिषेध।

[न धातुलोप आर्धधातुके। पा० १।१।४। यङ्यक्क्यलोपे वृद्धिश्चातिङि। स० ७।२।१०]

**कुटादीनामञ्णिति** ॥१३॥ [स० ७।२।११]

ञितो णितश्चान्यस्मिन् परत कुटादीनामदेङो न भवन्ति। उत्कुटिता, उत्कुटितुम्, उत्कुटितव्यम्। उत्पुटिता, उत्पुटितव्यम्। अञ्णितीति किम् ? उत्कोट., उत्पोटक।

[गाङ्कुटादिभ्योऽञ्णिन् ङित्। पा० १।२।१

**विज इटि** ॥१४॥ [स० ७।२।१२]

विजेरिडादौ परतोऽदेङ् न भवति। उद्विजिता, उद्विजितुम्, उद्विजितव्यम्। इटीति किम्? उद्वेजनम्।

[ विज इट्। पा० १।२।२ ]

**वोर्णोः ॥१५॥**

ऊर्णोतेरिडादौ परतोऽदेङ् वा न भवति। प्रोर्णविता, प्रोर्णुविता।

[ विभाषोर्णोः। पा० १।२।३, ऊर्णोर्वा। स० ७।२।१३ ]

**तनवतोरपूर्शीस्विदिमिदिक्ष्विदिधृषः ॥१६॥**

तनवतोरिडाद्यो परत पूप्रभृतिवर्जितानामेवादेङ् न भवति। तृषित, तृषितवान्। रुषित, रुषितवान। प्वादिपर्युदास किम? पवितः, पवितवान्। शयित, शयितवान्। प्रस्वेदित, प्रस्वेदितवान्। प्रमेदित, प्रमेदितवान्। प्रक्ष्वेदित, प्रक्ष्वेदितवान्। धर्षित, धर्षितवान्। इटीत्येव। पूत, प्रस्विन्न।

[ निष्ठाशीङ्स्विदिमिदिक्ष्विदिधृष। पूङ क्त्वा च। पा० १।२।१९,२२। निष्ठायामशीङ्पूस्विदिमिदिक्ष्विदिधृष। स० ७।२।१४ ]

**मृषोऽक्षान्तौ ॥१७॥**

क्षमाया अन्यस्मिन् मृषेस्तनवतोरिडाद्योः परतोऽदेङो न भवन्ति। अपमृषित वाक्यम् आह। अक्षान्ताविति किम्? मर्षित, मर्षितवान्।

[ मृषस्तितिक्षायाम्। पा० १।२।२०। मृषेरक्षमायाम्। स० ७।२।१५ ]

**उदुपान्तस्य शब्वतो भावारम्भयोर्वा ॥१८॥**

उदुपान्तो यस्य शब्वतस्तस्य भावे क्रियारम्भे च तनवतोरिडाद्योः परतोऽदेङो वा न भवन्ति। द्युतितम् अनेन, द्योतितम् अनेन। प्रद्युतित, प्रद्योतित। उदुपान्तस्येति किम्? स्वेदितम् अनेन, प्रस्वेदित। शब्वत इति किम्? गुधितम् अनेन, प्रगुधित। भावारम्भयोरिति किम्? रुचिता कन्या। इटीत्येव। रूढम् अनेन, प्ररूढ।

[ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् । पा० १।२।२१ । उदुपधाच्छपः । वा० १ । उदुपधस्य शब्वतो भावादिकर्मणोर्वा । स० ७।२।१६ ]

**मृडमृदगुधकुषक्लिशवदवसलुचग्रहां[1] क्त्वि ॥१९॥**

मृडादीनाम् एवेडादौ क्त्वि परतोऽदेङो न भवन्ति । मृडित्वा, मृदित्वा, गुधित्वा, कुषित्वा क्लिशित्वा, उदित्वा, उषित्वा, लुचित्वा, गृहीत्वा । मृडादीनाम् इति किम् ? देवित्वा, पवित्वा । इटीत्येव । पूत्वा ।

[ मृडमृदगुधकुषक्लिशवदवस क्त्वा । वञ्चिलुञ्च्यृतश्च । पा० १।२।७,२४ । मृडमृदगुधकुषक्लिशवदवसलुचां क्त्वि । स० ७।२।१७ । [1]Since ग्रह is mentioned in rule 19, it should be expunged from this rule ]

**ऋततृषमृषकृशां वा ॥२०॥** [स० ७।२।१८]

ऋतादीनाम् इडादौ क्त्वि परतोऽदेङ् वा न भवति । ऋतित्वा, अर्तित्वा । तृषित्वा, तर्षित्वा । मृषित्वा, मर्षित्वा । कृशित्वा, कर्शित्वा ।

[ वञ्चिलुञ्च्यृतश्च । तृषिमृषिकृशेः काश्यपस्य । पा० १।२।२४-२५ ]

**रलो हलादेरिदुतोः सनि च ॥२१॥**

रलन्तस्य हलादेर्याविदुतौ तयोरिडादौ क्त्वि सनि च परतोऽदेङो वा न भवन्ति । लिखित्वा, लेखित्वा, लिलिखिषति, लिलेखिषति । द्युतित्वा । द्योतित्वा; दिद्युतिषते, दिद्योतिषते । रल इति किम् ? देवित्वा, दिदेविषति । हलादेरिति किम् ? एषित्वा, एषिषिषति । इदुतोरिति किम् ? वर्तित्वा, विवर्तिषते । इटीत्येव । भुक्त्वा, बुभुक्षते ।

[ रलो व्युपधाद्धलादेः सश्च । पा० १।२।२६ । रलोर्हलादेरिदुदुपधस्य सनि च । स० ७।२।१९ ]

**रुदविदमुषग्रहाम् ॥२२॥** [स० ७।२।२०]

रुदादीनाम् इडादौ सनि क्त्वि च परतोऽदेङो न भवन्ति । रुदित्वा, रुरुदिषति । विदित्वा, विविदिषति । मुषित्वा, मुमुषिषति । गृहीत्वा । सनि नास्त्युदाहरणम् इडभावात् ।

[ रुदविदमुषग्रहिस्वपिप्रच्छः सश्च । पा० १।२।८ ]

**इकोऽनिटि** ॥२३॥

इगन्तस्यानिडादौ सनि परतोऽदेङो न भवन्ति। चिचीषति, तुष्टूषति, चिकीर्षति। अनिटीति किम्? शिशयिषते।

[ इको झल्। पा० १।२।९, सन्यनिटि। स० ७।२।२१ ]

**उपान्तस्य** ॥२४॥

अन्तस्य समीपस्येकोऽनिडादौ सनि परतोऽदेङो न भवन्ति। बिभित्सति, बुभुत्सते, विवृत्सति, धिप्सति, जिघृक्षति। अनिटीत्येव। विवर्तिषते।

[ हलन्ताच्च। पा० १।२।१०, लिङ्सिचोरुपधायाः। स० ७।२।२२ ]

**लिङ्सिचोस्तङि** ॥२५॥

लिङि सिचि च तङ्परे उपान्तस्येकोऽदेङो न भवन्ति। भित्सीष्ट, भुत्सीष्ट। अभित्त, अबुद्ध। तङीति किम्? अभैत्सीत्। अनिटीत्येव। वर्धिषीष्ट, अवर्धिष्ट। उपान्तस्येत्येव। चेषीष्ट, अचेष्ट।

[ लिङ्सिचावात्मनेपदेषु। पा० १।२।११ ]

**उः** ॥२६॥ [उश्च। पा० १।२।१२, स० ७।२।२३]

ऋवर्णान्तस्य लिङ्सिचोस्तङि परेऽदेङो न भवन्ति। कृषीष्ट, अकृत। तङीत्येव। अकार्षीत्, जागर्यात्। अनिटीत्येव। वरिषीष्ट, अवरिष्ट।

**सिचि दाधास्थामिच्च** ॥२७॥ [स० ७।२।२४]

दा धा स्था इत्येतेषां सिचि तङ्परे परत इदादेशो भवति, अदेङ् च न भवति। आदित, आधित, उपास्थित। तङीत्येव। अदात्, अधात्, अस्थात्।

[ स्थाघ्वोरिच्च। पा० १।२।१७ ]

**गाङ ईत् स्ये च** ॥२८॥ [स० ७।२।२५]

गाङः स्ये सिचि च परत ईद् भवति, अदेङ् च न भवति। अध्यगीष्यत, अध्यगीष्ट। अतङीत्येव। अगात्।

[गाङ्कुटादिभ्योऽञ्णिन्ङित्। पा० १।२।१, घुमास्थागापाजहातिसा हलि। पा० ६।४।६६]

**भूसुवोऽद्वेस्तिङि** ॥२९॥

भू सू इत्येतयोरद्विरुक्तयोस्तिङि परतोऽदेङ् न भवति। अभूत्, अभूः। सुवै, सुवावहै, सुवामहै। अद्वेरिति किम्? बोभवीति। तिङीति किम्? भविता।

[भूसुवोस्तिङि। पा० ७।३।८८, भूसुवो प्रतिषेध एकाज्ग्रहण बोभवीत्यर्थम्। वा० १। भूसुवोरनभ्यस्तयोस्तङि पिति। स० ७।२।२६]

**हलि पित्युत औत्** ॥३०॥

हलादौ तिङि पिति परे उदन्तस्य औदादेशो भवति। रौति, रौषि, रौमि। यौति, यौषि, यौमि। हलीति किम्? रवाणि। पितीति किम्? रुतः, रुथः। उत इति किम्? एति। अद्वेरित्येव। जुहोति।

[उतो वृद्धिर्लुकि हलि। पा० ७।३।८९, हल्यनुश्नोरुत औत्। स०७।२।२७]

**वोर्णोः** ॥३१॥ [स० ७।२।२८]

ऊर्णोतेस्तङि हलि पिति परत उत औदादेशो वा भवति। प्रोर्णौति, प्रोर्णोति। हलीत्येव। प्रोर्णवानि। पितीत्येव। प्रोर्णुतः।

[ऊर्णोतेर्विभाषा। पा० ७।३।९०]

**नालि** ॥३२॥

एकालि हलि तिङि पिति परत ऊर्णोतेरौदादेशो न भवति। प्रौर्णोत्, प्रौर्णोः।

[गुणोऽपृक्ते। पा० ७।३।९१, नैकालि। स० ७।२।२९]

**तृणह इम्** ॥३३॥ [पा० ७।३।९२, स० ७।२।३०]

तृहेः कृतश्नम्कस्य तिङि हलि पिति परत इमागमो भवति।

तृणेढि, तृणेक्षि, तृणेक्षि, अतृणेट्। हलीत्येव। तृणहानि[1]। पितीत्येव। तृण्ढ।

[ [1]तृणहाणि L ]

**ब्रुव ईट्** ॥३४॥ [पा० ७।३।९३]

ब्रुव परस्य हलादेस्तिङ पित ईड् आगमो भवति। ब्रवीति, अब्रवीत्। हलीत्येव। ब्रवाणि। पितीत्येव। ब्रूत।

**[ ब्रुवोरनाहेरीट्। स० ७।२।३१ ]**

**यङो वा** ॥३५॥ [पा० ७।३।९४]

यङन्तात् परस्य तिङो हलादे पित ईड् भवति वा। बोभवीति, बोभोति। व्यवस्थितविभाषया क्वचिद् भवत्येव। वावदीति, लालपीति। क्वचिन्न भवति। नर्नर्त्ति। हलीत्येव। बोभवानि। पितीत्येव। बोभूत।

**[ यङो बहुलम्। स० ७।२।३२ ]**

**अस्तिसिचोऽलः** ॥३६॥

अस्ते सिचश्च परस्यैकालस्तिङ ईड् भवति। आसीत्, अकार्षीत्। अल इति किम्? आस्ताम्। हलीत्येव। कारयामास।

**[ अस्तिसिचोऽपृक्ते। पा० ७।३।९६, अभ्वस्तिसिज्भ्यामपृक्तस्य। स० ७।२।३३ ]**

**रुद्भ्यः पञ्चभ्योऽट् च** ॥३७॥

रुदादिभ्य पञ्चभ्य परस्यैकालस्तिङ ईड् भवति, अट् च। अरोदीत्, अरोदत्। अस्वपीत्, अस्वपत्। प्राणीत्, प्राणत्। अश्वसीत्, अश्वसत्। अजक्षीत्, अजक्षत्। पञ्चभ्य इति किम्? अजागः। अल इत्येव। रोदिति। हलीत्येव। रुरोद।

**[ रुदश्च पञ्चभ्य। अड् गार्ग्यगालवयो। पा० ७।३।९८-९९, रुदिस्वपिश्वस्यनिजक्षिभ्योऽट् च। स० ७।२।३४ ]**

**अदः** ॥३८॥ [स० ७।२।३५]

अत्ते· परस्यैकालस्तिङोऽड् भवति। अदात्। अल इत्येव। अत्ति।

[अद. सर्वेषाम्। पा० ७।३।१००]

**अत आद्यञि** ॥३९॥ [स० ७।२।३६]

अदन्तस्य यञादौ तिङि परत आद् भवति। पचामि, करिष्यामि। प्रकृतेरसम्भवान् न भविष्यति। अत इति किम्? रुवः, रुमः। यञीति किम्? भवति। तिङीत्येव। केशव·, ऊपर.।

[अतो दीर्घो यञि। पा० ७।३।१०१]

**सुपि** ॥४०॥ [०च। पा० ७।३।१०२, स० ७।२।३७]

सुपि यञादौ परतोऽत आद् भवति। वृक्षाभ्याम्, प्लक्षाभ्याम्। अत इत्येव। वायुभ्याम्। यञीत्येव। वृक्षस्य।

**बहुषु झल्येत्** ॥४१॥

बहुष्वर्थेषु य सुप् तस्मिन् झलादौ परतोऽत एत्व भवति। वृक्षेभ्य., प्लक्षेभ्य·। वृक्षेषु। बहुष्विति किम्? वृक्षाभ्याम्। झलीति किम्? वृक्षाणाम्। सुपीत्येव। यजध्वम्। अत इत्येव। खट्वाभ्य.।

[बहुवचने झल्येत्। पा० ७।३।१०३, स० ७।२।३८]

**ओसि** ॥४२॥ [०च। पा० ७।३।१०४, स० ७।२।३९]

ओसि परतोऽत एत्वं भवति। वृक्षयो स्वम्, वृक्षयोर्निवेहि। अत इत्येव। वाय्वो।

**टि चापः** ॥४३॥

टाकार ओसि च परत आप एत्वं भवति। खट्वया, खट्वयोः। बहुराजया, बहुराजयो। पकार किम्? कीलालपा ब्राह्मणेन। कथम् अतिखट्वेनेति? दीर्घरूपाश्रयणान् न भविष्यति।

[आङि चाप। पा० ७।३।१०५, टि च दीर्घाप। स० ७।२।४०]

**सम्बोधने सौ** ॥४४॥

सम्बोधने सौ परत आप एत्वं भवति। हे खट्वे, हे बहुराजे। सम्बोधन इति किम्? खट्वा। साविति किम्? हे खट्वाः।

[सम्बुद्धौ च। पा० ७।३।१०६, स० ७।२।४१। Candra must not use the technical term *Sambuddhi*]

**अम्बार्थानामडलेकानां ह्स्वः ॥४५॥** [स० ७।२।४२]

अम्बापर्यायाणा डकारलकारेकच्छब्दरहिताना सम्बोधने सौ परतो ह्स्वो भवति। हे अम्ब, हे अक्क, हे अल्ल। अडलेकानाम् इति किम्? हे अम्बाडे, हे अम्बाले, हे अम्बिके।

[अम्बार्थनद्योर्ह्स्व। पा० ७।३।१०७। डलकवतीनां प्रतिषेधो वक्तव्य। अम्बार्थं द्व्यक्षरं यदि। भाष्यम्।]

**ङ्यूङः ॥४६॥**

ङयन्तस्य ऊङन्तस्य च सम्बोधने सौ परतो ह्स्वो भवति। हे कुमारि, हे गौरि, हे ब्रह्मबन्धु। तलो ह्स्वत्वं वा डिसम्बुद्ध्योरिति न वक्तव्यम्—देवते[1] देवताया निधेहि, हे देवत हे देवते इति, छान्दसत्वात्।

[अम्बार्थनद्योर्ह्स्व। पा० ७।३।१०७, तल्ह्स्वत्व वा डिसम्बुद्ध्यो।... देवत देवते। देवताया देवते। ..अवश्यं छन्दसि ह्स्वत्व वक्तव्यम्, उपगायन्तु मा पत्नयो गर्भिणयो युवतय इत्येवमर्थम्। भाष्यम् ७।३।१०७, स्त्र्याख्येदूतोऽनियुव। स०७।२।४३। [1]देवते L]

**मातुर्मातच् पुत्रे श्लाघ्ये ॥४७॥** [स० ७।२।४५]

मातु· श्लाघ्ये पुत्रे व्यपदेशक्षमे वर्तमानायाः सम्बोधने सौ परतो मातजादेशो भवति। हे गार्गीमात। चकार. स्वरार्थ। कबपवादश्चायम्। पुत्र इति किम्? हे मात। श्लाघ्य इति किम्? हे गार्गीमातृक।

[मातृणा मातच् पुत्रार्थमर्हते। भाष्यम् ७।३।१०७]

**इदुतोरेङ् ॥४८॥**

इकारोकारयो सम्बोधने सौ परत एङौ भवत । हे अग्ने, हे वायो । ह्रस्वविधानसामर्थ्यादिह न भवति । हे कुमारि, हे गौरि, हे ब्रह्मबन्धु ।

[ ह्रस्वस्य गुण । पा० ७।३।१०८, इदुतोर्गुण । स० ७।२।४६ ]

**जसि ॥४९॥** [०च । पा० ७।३।१०९, स० ७।२।४७]

जसि परत इदुतोरेङौ भवत । अग्नय·, वायव· ।

**ङित्यसख्युः ॥५०॥** [स० ७।२।४८]

ङिति सुपि परत इदुदन्तस्य सखिशब्दवर्जितस्य एङौ भवतः । अग्नये, अग्ने । वायवे, वायोः । असख्युरिति किम् ? सख्ये, सख्यु ।

[ घेर्ङिति । पा० ७।३।१११ । शेषो घ्यसखि । पा० १।४।७ ]

**पत्युः समासे ॥५१॥**

पतिशब्दस्य समास एव ङिति सुपि परत एङौ भवत· । बृहस्पतये, बृहस्पते । समास इति किम् ? पत्ये, पत्यु ।

[ पति समास एव । पा० १।४।८, पत्यु समास एव । स० ७।२।४९ ]

**स्त्रियां वा ॥५२॥** [स० ७।२।५०]

ङिति सुपि परत स्त्रियाम् इदुदन्ताया एङौ वा भवत । मतये, मत्यै । धेनवे, धेन्वै ।

[ ङिति ह्रस्वश्च । पा० १।४।६ ]

**यूभ्यां चाट् ॥५३॥**

स्त्रिया य ईकार ऊकारश्च ताभ्याम् इदुद्भ्या च परस्य ङित. सुप आडागमो भवति । कुमार्यै, कुमार्या । गौर्यै, गौर्या. । ब्रह्मबन्ध्वै, ब्रह्मबन्ध्वा । लक्ष्म्यै, लक्ष्म्याः । मत्यै, मत्या· । धेन्वै, धेन्वा. । इह न भवति । मनये, धेनव इति, एङि कृतेऽन्यरूपत्वात् । स्त्रियाम् इत्येव । ग्रामण्ये, ग्रामण्यः । खलप्वे, खलप्वः । अग्नये, अग्नेः । वायवे, वायोः ।

[ आण् नद्या· । पा० ७।३।११२, स्त्रीयूभ्या चाट् । स० ७।२।५१ ]

**सेयुवो वा** ॥५४॥

इयुवौ ययोर्विद्येते ताभ्या परस्य ङित सुप आडागमो भवति वा। श्रियै, श्रिये। श्रिया, श्रिय । भ्रुवै, भ्रुवे। भ्रुवा, भ्रुव ।

[ नेयङुवङ्स्थानावस्त्री। ङिति ह्रस्वश्च। पा० १।४।४,६, इयुवुस्थानाभ्या-मस्त्रिया वा। स० ७।२।५२ ]

**स्त्रियाः** ॥५५॥

स्त्रीशब्दात् परस्य ङित सुप आडागमो भवति, नित्यं पुनर्विधानात्। स्त्रियै, स्त्रिया ।

[ नेयङुवङ्स्थानावस्त्री। पा० १।४।४, स्त्रीयूभ्या चाट्। स० ७।२।५१ ]

**याडापः** ॥५६॥ [पा० ७।३।११३, स० ७।२।५३]

आप उत्तरस्य ङित सुपो याडागमो भवति। खट्वायै, खट्वाया.। बहुराजायै, बहुराजाया । स्त्रियाम् इत्येव। अतिखट्वाय।

**स्मैवतः स्याडच्च** ॥५७॥

स्मै यस्यास्ति तत आबन्तात् परस्य ङित सुप स्याडागमो भवति, आपश्चादादेश.। सर्वस्यै, सर्वस्या । विश्वस्यै, विश्वस्या । स्मैवत इति किम्? सर्वायै, अतिसर्वायै ।

[ सर्वनाम्न स्याड्ह्रस्वश्च। पा० ७।३।११४, सर्वनाम्न स्याडच्च। स० ७।२।५४ ]

**द्वितीयातृतीयाद् वा** ॥५८॥ [०तृतीयाभ्या०। स० ७।२।५५]

द्वितीयातृतीयाभ्या परस्य ङित सुप स्याडागमो वा भवति, आपश्चादादेश.। द्वितीयस्यै, द्वितीयायै, द्वितीयस्या, द्वितीयाया । तृतीयस्यै, तृतीयायै, तृतीयस्या, तृतीयाया ।

[ विभाषा द्वितीयातृतीयाभ्याम्। पा० ७।३।११५ ]

**ङेराम् तत्र** ॥५९॥

एष्वाडादिषु कृतेषु ङेरामादेशो भवति। कुमार्याम्, गौर्याम्,

ब्रह्मबन्ध्वाम्, लक्ष्म्याम्, मत्याम्, धेन्वाम्, श्रियाम्, भ्रुवाम्, स्त्रियाम्; खट्वायाम्, बहुराजायाम्, सर्वस्याम्, विश्वस्याम्, द्वितीयस्याम्, तृतीयस्याम्। तत्रेति किम्? श्रियि, भुवि।

[ङेराम्नद्याम्नीभ्य। इदुद्भ्याम्। पा० ७।३।११६-११७, ङेरामाडादिभ्य। स० ७।२।५६]

**नियः** ॥६०॥ [स० ७।२।५७]

निय परस्य ङेराम् भवति। ग्रामण्याम्।

[ङेराम्नद्याम्नीभ्य। पा० ७।३।११६]

**इदुद्भ्याम् औत्** ॥६१॥ [पा० ७।३।११७-११८]

इदुद्भ्या परस्य ङेरौदादेशो भवति। सख्यौ, पत्यौ। अस्त्रीलिङ्गम-[1]नेनेहोदाहरणम्।

[६१-६२। सखिपतिभ्यामौत्। इदुद्भ्यामेङोऽच्चैङ। स० ७।२।५८-५९।
[1]Should we drop अनेन? यन्न नदीसंज्ञं नापि घिसञ्ज्ञमिकारान्त तदिहोदाहरणम्। काशिका।]

**एङोऽच्च** ॥६२॥

इदुदन्तात् कृतैङ परस्य ङेरौद् भवति, एङश्चादादेश। अग्नौ, वायौ, मतौ, धेनौ। एङ इति किम्? मत्याम्, धेन्वाम्।

[अच्च घे। पा० ७।३।११९]

**टोऽस्त्रियां ना** ॥६३॥ [स० ७।२।६०]

अस्त्रियाम् इदुदन्तात् परस्य टा इत्येतस्य नाभावो भवति। प्रकृतत्वाद् एङ्वतोरेव नाभाव। अग्निना, वायुना। अस्त्रियाम् इति किम्? मत्या, धेन्वा।

[आङो नाऽस्त्रियाम्। पा० ७।३।१२०]

**ऋतो ङिसुटयत्** ॥६४॥

ऋकारान्तस्य ङौ सुटि च परतोऽदादेशो भवति। मातरि, मातरौ,

मातर , मातरम्, मातरौ । पितरि, पितरौ, पितर , पितरम्, पितरौ । ङिसुटीति किम् ? मात्रा, पित्रा ।

[ ऋतो ङिसर्वनामस्थानयो । पा० ७।३।११०, ऋतो ङिसुटोर्गुण । स० ७।२।६१ ]

**संयोगादेर्लिटि** ॥६५॥ [स० ७।२।६२]

सयोगादेर्ऋकारान्तस्य लिटि परतोऽद् भवति । सस्वरतु , सस्वरुः । सस्मरतु , सस्मरु । प्रतिषेधविषये [1]पुन प्रसवोऽयम्, न विधि । अन्यत्र पुनः सस्वार, सस्मार ।

[ ऋतश्च सयोगादेर्गुण । पा० ७।४।१० । [1]The usual term is प्रतिप्रसव . ]

**स्कृञः** ॥६६॥

सयोगादे. ससुट्कात् करोतेर्लिटि परतोऽद् भवति । संचस्करतुः, संचस्करु. । सुट् किम् ? चक्रतु. चक्रु । संयोगादिग्रहणेष्वौपदेशिकसंयोगग्रहणज्ञापनार्थ आरम्भ. ।

[ संयोगादेर्गुणविधाने सयोगोपधग्रहणं कृञर्थम् । पा० ७।४।१०।१ ]

**ॠद्दच्छृणाम्** ॥६७॥ [स० ७।२।६३]

ॠकारान्तानामृच्छेर्ऋ इत्येतस्य च लिटि परतोऽद् भवति । विचकरतु., विचकरु । आनर्छतु , आनर्छु । आरतु , आरु । विशश्रतुः, विशश्रुरिति श्रातिना सिद्धम् । विदद्रतु , विदद्रुरिति द्रातिना सिद्धम् । निपप्रतु., निपप्रुरिति प्रातिना सिद्धम् ।

[ ऋच्छत्यॄताम् । पा० ७।४।११ ]

**ऋश्विदृशोऽङि** ॥६८॥

ऋवर्णान्ताना श्वयतेर्दृशेश्चाङि परतोऽद् भवति । आरत्, समारत; असरत्, अजरत् । अश्वत्, अदर्शत् ।

[ ऋदृशोऽङि गुण । श्वयेतर । पा० ७।४।१६,१८, ऋदृशोऽङि । श्वयतेरत् । स० ७।२।६५-६६ ]

**असुपतवचां थुक्पुमुमः** ॥६९॥ [स० ७।२।६७]

असु पत वच इत्येतेपाम् अङि परतस्थुक् पुम् उम् इत्येत आगमा भवन्ति। आस्थत्, आस्थताम्। अपप्तत्, अपप्तताम्। अवोचत्, अवोचताम्।

[ अस्यतेस्थुक्। पत पुम्। वच उम्। पा० ७।४।१७,१९-२० ]

**केऽणो ऱ्हस्वः** ॥७०॥

के परतोऽणो ऱ्हस्वो भवति। खट्विका, कुमारिका, ब्रह्मबन्धुका। अण इति किम्? गोका, नौका। प्रकृतेरित्येव। कुमारी कायतीति कुमारीक।

[ केऽण । पा० ७।४।१३, के तद्धितेऽणो ह्रस्व । स० ७।२।६८ ]

**न कपि** ॥७१॥ [पा० ७।४।१४, स० ७।१।६९]

कपि परतोऽणो ऱ्हस्वो न भवति। बहुकुमारीको देशः।

**आपो वा** ॥७२॥ [स० ७।२।७०]

आप. कपि परतो ऱ्हस्वो वा भवति। बहुखट्विका, बहुखट्वाका।

[ आपोऽन्यतरस्याम्। पा० ७।४।१५ ]

**शीङ एदलिटि** ॥७३॥

अलिटि परत· शीङ एद् भवति। शेते, शयाते। शयानः। अलिटीति किम्? शिश्ये।

[ शीङ सार्वधातुके गुण । पा० ७।४।२१, शीङ एत् सार्वधातुके। स० ७।२।७१ ]

**यि क्ङित्ययङ्** ॥७४॥

यकारादौ क्ङिति परतः शेतेरणोऽयङादेशो भवति। शय्यते, शाशय्यते, अधिशय्य गतः। क्ङितीति किम्? शेयम्।

[अयङ्यि क्ङिति। पा० ७।४।२२, स० ७।२।७२]

**प्रादिभ्य ऊहो ह्रस्वः ॥७५॥**

प्रादिभ्यः परस्य ऊहतेर्यकारादौ क्ङिति परतो ह्रस्वो भवति। समुह्यते, समुह्यात्, समुह्य गतः। प्रादिभ्य इति किम्? ऊह्यते। यीत्येव। समूहितः। क्ङितीत्येव। अभ्यूह्योऽयम् अर्थः। अण इत्येव। आ ऊह्यते, ओह्यते, समोह्यते।

[उपसर्गाद्ध्रस्व ऊहतेः। पा० ७।४।२३, उपसर्गादूहो ह्रस्वश्च। स० ७।२।७३]

**लिङीणः ॥७६॥** [स० ७।२।७४]

प्रादिभ्यः परस्येणो लिङि यकारादौ क्ङिति परतो ह्रस्वो भवति। उदियात्, समियात्। लिङीति किम्? उदीयते, समीयते। प्रादिभ्य इत्येव। ईयात्। अण इत्येव। आ ईयात्, एयात्, समेयात्।

[एतेर्लिङि। पा० ७।४।२४]

**आशिषि दीर्घः ॥७७॥**

आशिषि लिङि यकारादौ परतोऽणो दीर्घो भवति। चीयात्, स्तूयात्, ईयात्। आशिषीति किम्? चिनुयात्, स्तुयात्, इयात्।

[अकृत्सार्वधातुकयोर्दीर्घः। पा० ७।४।२५, दीर्घोऽकृत्सार्वधातुके। स० ७।२।७५]

**च्वियङ्यक्क्येषु ॥७८॥**

च्वौ यङि यकि क्ये च परतोऽणो दीर्घो भवति। पटूकरोति, पटूभवति, पटूस्यात्। चेचीयते। चीयते, मन्तूयते। भृशायते, लोहितायति, लोहितायते।

[See under 77 च्वौ च। पा० ७।४।२६, स० ७।२।७६]

**रीङृतो ये च** ॥७९॥

ऋकारान्तस्य ये च्व्यादिषु च परतो रीङादेशो भवति। पित्र्यः स्थालीपाकः। पित्रीभवति। पित्रीयति, पित्रीयते। चेक्रीयते।

[रीङृत। पा० ७।४।२७, स० ७।२।७७]

**रिङ् शयगाशीर्लिङि** ॥८०॥

ऋकारान्तस्य शे यक्याशीर्लिङि च परतो रिङादेशो भवति। आद्रियते, क्रियते, क्रियात्। आशिषीति किम्? बिभृयात्। यीत्येव। कृषीष्ट।

[रिङ्शयग्लिङ्क्षु। पा० ७।४।२८, रिङ् शे। यगाशीर्लिङोर्ये। स० ७।२।७८-७९]

**ऋसंयोगाद्योरत्** ॥८१॥

अर्तेः संयोगादीनाम् ऋकारान्तानां च आशीर्लिङि यकि च परतोऽद् भवति, न तु शे, असंभवात्। अर्यते, अर्यात्। स्मर्यते, स्मर्यात्। यीत्येव। स्मृषीष्ट। आशिषीत्येव। इयृयात्। कथं संस्क्रियते, संस्क्रियाद् इति? औपदेशिकस्य [1]संयोगस्य ग्रहणात्।

[गुणोऽर्त्तिसंयोगाद्योः। पा० ७।४।२९, असुटूसंयोगाद्यर्त्योर्गुणः। स० ७।२।८०। [1]संयोगग्रहणात् L.]

**यङि** ॥८२॥ [०च। पा० ७।४।३०, स० ७।२।८१]

यङि परत ऋसंयोगाद्योरद् भवति। अरार्यते, सास्मर्यते।

**हनो घ्नी हिंसायाम्** ॥८३॥ [स० ७।२।८२]

हन्तेर्हिंसायां गम्यमानायां यङि परतो घ्नीभावो भवति। जेघ्नीयते। दीर्घः किम्? जेघ्नीत। हिंसायामिति किम्? जङ्घन्यते।

[यङ्प्रकरणे हन्तेर्हिंसायामीट्। पा० ७।४।३०।१]

**ई घ्राध्मोः** ॥८४॥ [पा० ७।४।३१, स० ७।२।८३]

घ्रा ध्मा इत्येतयोर्यङि परत ईकारो भवति। जेघ्रीयते, देध्मीयते। दीर्घ. किम्? जेघ्रीतः।

**अस्य च्वौ** ॥८५॥ [पा० ७।४।३२]

अवर्णान्तस्य च्वौ परत ईकारो भवति। शुक्लीकरोति, शुक्लीभवति, शुक्लीस्यात्। खट्वीकरोति, खट्वीभवति, खट्वीस्यात्।

[ अस्य च्वावनव्ययस्य। स० ७।२।८४ ]

**क्यचि** ॥८६॥ [०च। पा० ७।४।३३, स० ७।२।८५]

अवर्णान्तस्य क्यचि परत ईकारो भवति। पुत्रीयति, वस्त्रीयति, मालीयति।

**न क्षुध्यशनस्य** ॥८७॥ [स० ७।२।८६]

क्षुधि गम्यमानायाम् अशनस्य क्यचि परत ईत्त्वं न भवति। अशनायति। क्षुधीति किम्? अशनीयति दानाय।

[ ८७-८९। अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु। पा० ७।४।३४ ]

**धनस्य तृष्णायाम्** ॥८८॥ [स० ७।२।८७]

धनशब्दस्य तृष्णाया गम्यमानाया क्यचि परत ईत्त्व न भवति। धनायति। तृष्णायाम् इति किम्? धनीयति दानाय।

**उदन्यः** ॥८९॥

उदकस्य क्यचि तृष्णाया गम्यमानायाम् उदन्भावो निपात्यते। उदन्यति। उदकतृष्णा पिपासैव गृह्यते, तत्र प्रतीते। अन्यत्रोदकीयति।

[ उदकस्योदन्पिपासायाम्। स० ७।२।८८ ]

**वृषाश्वयोर्मैथुने सुक्** ॥९०॥

मैथुनतृष्णाया गम्यमानाया वृषाश्वयो क्यचि परतः सुग् आगमो भवति। वृषस्यति गौः। अश्वस्यति वडवा। मैथुन इति किम्? वृषीयति, अश्वीयति।

[ अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि । पा० ७।१।५१ । अश्ववृषयोर्मैथुनेच्छायाम् । वा० १ । वृषाश्वयोर्मैथुनेच्छाया सुक् । स० ७।२।८९ ]

**असुक् चात्तुम् ॥९१॥**

अत्तु तृष्णाया गम्यमानाया क्यचि परत प्रकृतेरसुगागमो भवति, सुक् च । दध्यस्यति, दधिस्यति । मध्वस्यति, मधुस्यति । क्षीरस्यति । लवणस्यति । अत्तुमिति किम् ? क्षीरीयति दानाय ।

[ क्षीरलवणयोर्लालसायाम् । ७।१।५१।२ । क्षीरलवणयोर्लालसायामिति वक्तव्यम्. । अपर आह । सर्वप्रातिपदिकेभ्यो लालसायामिति वक्तव्य दध्यस्यति मध्वस्यतीत्येवमर्थम् । अपर आह । सुग्वक्तव्यो दध्स्यति मधुस्यतीत्येवमर्थम् । ७।१।५१ भाष्यम् । क्षीरादिभ्यो लालसायामसुक् च । स० ७।२।९० ]

**दोसोमास्थामित्ति किति ॥९२॥** [स० ७।२।९१]

दो सो मा स्था इत्येतेषा तकारादौ किति परत इकारादेशो भवति । अवदित , अवदितवान् । अवसित , अवसितवान् । मितम्, मितवान् । स्थितम्, स्थितवान् । तीति किम् ? अवदाय । कितीति किम् ? अवदाता ।

[ द्यतिस्यतिमास्थामित्ति किति । पा० ७।४।४० ]

**छो वा ॥९३॥**

छा इत्येतस्य तकारादौ किति परत इदादेशो भवति । अवच्छितम्, अवच्छातम् । कथ शितम्, शातम् इति ? शिनोते. श्यतेश्च रूपम् ।

[ शाच्छोरन्यतरस्याम् । पा० ७।४।४१, छाशोर्वा । सशितो व्रते । स० ७।२।९२-९३ । देवत्रातो गलो ग्राह इतियोगे च सद्विधि । मिथस्ते न विभाष्यन्ते गवाक्ष सशितव्रत ॥ भाष्यम् ७।४।४१ ]

**धाञो हिः ॥९४॥**

दधातेस्तकारादौ किति परतो हिभावो भवति । विहितम्, विहितवान् । ञकार किम् ? धीतम्, धीतवान् ।

[ दधातेर्हि । पा० ७।४।४२, स० ७।२।९४ ]

**हाकस्त्वि ॥९५॥**

ओहागित्येनस्य क्त्वि परतो हिभावो भवति। हित्वा। ककारः किम्? हात्वा। तीत्येव। प्रहाय।

[जहातेश्च क्त्वि। पा० ७।४।४३, जहाते क्त्वि। स० ७।२।९५]

**दो दत् ॥९६॥** [पा० ७।२।९६]

दाणो देङो ददातेश्च तकारादौ किति परतो ददादेशो भवति। दत्त, दत्तवान्।

[दो दद् घो। पा० ७।४।४६]

**प्रादेरच्यस्तः ॥९७॥**

प्रादीनाम् अजन्ताना विशेष्यस्य दा इत्येतस्य तकारादौ किति परतस्तकारो भवति। प्रत्तम्, अवत्तम्। कथ प्रदत्तम्, सुदत्तम्, विदत्तम्, अनुदत्तम् इति? दत्तशब्देन प्रादिसमासो भविष्यति।

[अच उपसर्गात्त। पा० ७।४।४७, उपसर्गादचस्त। स० ७।२।९७। अवदत्तं विदत्त च प्रदत्त चादिकर्मणि। सुदत्तमनुदत्तं च निदत्तमपि चेष्यते॥ [भाष्यम्] अच उपसर्गात्त इति प्राप्ते निपात्यन्ते। अनुपसर्गा वा एतेऽवादयः क्रियान्तरविषया वेदितव्या। काशिका। ७।४।४६]

**अपो भि ॥९८॥** [पा० ७।४।४८, स० ७।२।१०१]

अप्शब्दस्य भकारादो परतस्तकारो भवति। अद्भिः, अद्भ्यः। भीति किम्? अप्सु। प्रकृतेरित्येव। अब्भक्ष.।

**सि सो लिङतिङि ॥९९॥**

सकारादौ लिङ्यतिङि च परत सकारस्य तकारो भवति। वत्सीष्ट, वत्स्यति, विवत्सति। लिङतिङीति किम्? आस्से, वस्से।

[स स्यार्धधातुके। पा० ७।४।४९, स० ७।२।१०२]

**तासस्ो रि च लोपः ॥१००॥**

तासोऽस्तेश्च रेफादौ सकारादौ च परत· सकारस्य लोपो भवति। कर्तारौ, कर्तार , कर्तासि, कर्तासे। असि, व्यतिसे[1]।

[ तास्मस्त्योर्लोप । रि च। पा० ७।४।५०-५१। रसोर्लोप । स० ७।२।१०४। [1]व्यतिषे Ms , but since से is a pada here, cerebralisation is barred by the rule नाद्यन्तयो· vi 4 90 ]

**ह एति** ॥१०१॥ [पा० ७।४।५२]

एति परतस्तासस्सोर्हकारो भवति। कर्ताहे, व्यतिहे।

[ तासस्सोर्ह एति। स० ७।२।१०३ ]

**क्यङि वा** ॥१०२॥ [स० ७।२।१०५]

क्यङि परत. सकारस्य लोपो वा भवति। पयायते, पयस्यते।

[ सलोपो वा। पा० ३।१।११।१ ]

**ओजोऽप्सरसोः** ॥१०३॥ [स० ७।२।१०६]

ओजसोऽप्सरसश्च क्यङि परत· सकारस्य लोपो भवति, नित्यं पुनर्विधानात्। ओजायते, अप्सरायते।

[ ओजोऽप्सरसोर्नित्यम्। पा० ३।१।११।२ ]

**यिवर्णयोर्दीधीवेव्योः** ॥१०४॥

यकारादाविवर्णे च परतो दीधीवेव्योरन्त्यस्य लोपो भवति। आदीध्यते, आवेव्यते। आदीधिता, आवेविता। आदीधित·, अवेवितः। यिवर्णयोरिति किम्? आदीध्यनम्, आवेव्यनम्।

[ यीवर्णयोर्दीधीवेव्यो.। पा० ७।४।५३, स० ७।२।१०७ ]

**यणचि** ॥१०५॥

दीधीवेव्योरजादौ परतो यण् भवति। आदीध्यनम्, आवेव्यनम्। आदीध्यक, आवेव्यक। कथम् आदीधेत्, आदीध्युरिति? छान्दसत्वाददेङ् तदभावश्च।

[ दीधीवेवीटाम्। पा० १।१।६, योऽचि। स० ७।२।१०८। दीधीवेव्योश्छन्दो-

विषयत्वाद्दृष्टानुविधित्वाच्च छन्दसोऽदीधेददीधयुरिति च गुणदर्शनादप्रतिषेध । १।१।६।१ ।]

### मिर्मीमारभलभशकपतपदृदाधामचः सि सनीस् ॥१०६॥

सकारादौ सनि परतो म्यादीनाम् अच स्थान इसादेशो भवति । डुमिञ् । प्रमित्सति । मीङ् । मित्सते । माङ् । मित्सते[1] । रभ । आरिप्सते । लभ । आलिप्सते । शक्लृ । शिक्षति । पत्लृ । पित्सति । पद । पित्सते । दाण् । दित्सति । दो । अवदित्सति । देङ् । अवदित्सते । डुदाञ्[2] । दित्सति । डुधाञ् । धित्सति । धेट् । धित्सति । सीति किम् ? पिपतिषति । सनीवन्तर्धेत्यादिना [५।४।११९] विकल्पेनेट् । सनीति किम् ? दास्यति ।

[ सनि मीमाघुरभलभशकपतपदामच इस् । पा० ७।४।५४, मी इति मीनातिमिनोत्योर्द्वयोरपि ग्रहणमिष्यते । काशिका । मीमारभलभशकपतपददाधामच इस्मिसनि । स० ७।२।१०९ । [1]Ms om माङ् । मित्सते. [2]In the Cāndra Dhātupātha, the root is read as डुदा, but the correct reading would appear to be डुदाञ् ]

### राधो हिंसायाम् ॥१०७॥ [स० ७।२।११०]

सनि परतो राधेर्हिंसाया गम्यमानायामच इसादेशो भवति । प्रतिरित्सति । हिंसायामिति किम् ? आरिरात्सति ।

[ इस्त्वं सनि राधो हिंसायाम् । पा० ७।४।५४।१ ]

### ज्ञप्याप्त्र्धाम् ईत् ॥१०८॥

ज्ञपि आप् ऋध इत्येतेषा सनि परतोऽच ईद् भवति । ज्ञीप्सति, ईप्सति, ईर्त्सति । सीत्येव । जिज्ञपयिषति, अर्दिधिषति ।

[ आप्ज्ञप्यृधामीत् । पा० ७।४।५५, ऋधापोरीत् । ज्ञपेरनन्त्यस्य । स० ७।२।१११-११२ ]

### दम्भ इच्च ॥१०९॥ [पा० ७।४।५६, स० ७।२।११३]

दम्भेः सनि सकारादौ परतोऽच इद् भवति, ईच्च । धिप्सति, धीप्सति । सीत्येव । दिदम्भिषति ।

**अव्याप्यस्य मुचेरोद् वा** ॥११०॥

मुचेर्व्याप्यरहितस्य सनि परतोऽच [1]ओकारो वा भवति। मोक्षते वत्सः स्वयम् एव, मुमुक्षते वत्सः स्वयम् एव। अव्याप्यस्येति किम्? मुमुक्षति वत्सं देवदत्तः।

**[मुचोऽकर्मकस्य गुणो वा। पा० ७।४।५७, मुचे कर्मकर्तर्योद्वा। स० ७।२।११४। [1]उकारो L.]**

**द्वित्वे पूर्वस्यात्र लोपः** ॥१११॥

यद् एतद् अतिक्रान्तं सनीसादेशादि तत्र द्विरुक्तौ पूर्वस्य लोपो भवति। तथा चैवोदाहृतम्। द्वित्व इति किम्? वर्णस्य मा भूत्। अत्रेति किम्? अमीमपत्, अदीदपत्। द्वित्वे पूर्वस्येत्यधिकारश्चायम्।

**[अत्र लोपोऽभ्यासस्य। पा० ७।४।५८, इसादिष्वप्रयोगोऽभ्यासस्य। स० ७।२।११५]**

**हलोऽनादेः** ॥११२॥ [स० ७।२।११६]

द्वित्वे पूर्वस्यानादेर्हलो लोपो भवति। जग्लौ, मम्लौ, आटतुः, आटुः। अनादेरिति किम्? पपाच।

**[हलादि शेष। पा० ७।४।६०]**

**खयि खरः** ॥११३॥ [स० ७।२।११७]

द्विरुक्तौ पूर्वस्य खयि परतः खरो लोपो भवति। तिष्ठासति, पिस्पन्दिषते, उचिच्छिषति। खयो लोपनिमित्तत्वादनादेरपि हलो लोपो न भवति। खयीति किम्? सस्नौ। खर इति किम्? औजिढत्[1], ययाचे। नैतद् अस्ति। हल इत्यनुवर्तिष्यते, तस्याप्याकारेण[2] व्यवधानान् न भविष्यति। उत्तरार्थं तर्हि खर्भविष्यति।

**[शर्पूर्वाः खयः। पा० ७।४।६१, शर्पूर्वशेषे खर्पूर्वग्रहणम्। वा० १।**
[1]This ought to be dropped [2]**तस्याप्यकारेण** Ms ]

**चर्** ॥११४॥

द्विरुक्तौ पूर्वस्य खर शेषस्य चर् भवति। पफाल, चिच्छेद, तस्थौ, टिठकारयिषति।

[अभ्यासे चर्च। पा० ८।४।५४, खया चय। स० ७।२।११८]

**झषो जश्** ॥११५॥

द्विरुक्तौ पूर्वस्य शेषस्य झषो जश् भवति। जिझकारयिषति, बभूव, डुढौके, दध्यौ। सिद्धकाण्डपाठाद् बभणतु, बभणुर् इत्यादेशादित्वाद् एत्त्वं न भवति। उचिच्छिषतीति चर्त्वस्य सिद्धत्वाच् छे [५।१।७०] इति तुग् न भवति।

[झला जश् झषि। अभ्यासे चर्च। पा० ८।४।५३-५४, झषां जश। स० ७।२।११९]

**कुङोश्चुः** ॥११६॥ [पा० ७।४।६२, स० ७।२।१२०]

द्विरुक्तौ पूर्वस्य कवर्गङकारयोश्चवर्गो भवति। चकार, चखाद, जगाद, जघास, जुडुवे, जहार।

**न कुङो यङि** ॥११७॥

यङि द्विरुक्तौ पूर्वस्य कुङश्चुत्वं न भवति। कोकूयते। ङकारः किम्? चोकूयते। यङीति किम्? चुकूपते।

[न कवतेर्यङि। पा० ७।४।६३, स० ७।२।१२१]

**उरत्** ॥११८॥ [पा० ७।४।६६, स० ७।२।१२२]

ऋवर्णस्य द्विरुक्तौ पूर्वस्याद् भवति। ववृधे। चक्रतु, चक्रु।

**ह्रस्वः** ॥११९॥ [पा० ७।४।५९, स० ७।२।१२३]

द्विरुक्तौ पूर्वस्य ह्रस्वो भवति। डुढौकिषते, तुत्रौकिषते, सिषेविषते।

**द्युतिस्वाप्योर्यण इक्** ॥१२०॥

द्युते स्वापेश्च द्विरुक्तौ पूर्वस्य यण इग् भवति। दिद्युतिषते,

सुष्वापयिषति। अनन्तरे द्विरुक्तनिमित्ते चैतदिष्यते। इह न भवति। सिष्वापकीयिषति।

[ द्युतिस्वाप्योः सम्प्रसारणम्। पा० ७।४।६७। द्युतिस्वाप्योः सम्प्रसारणमभ्यासनिमित्तानन्तर्ये। स० ७।२।१२४ ]

**व्यथो लिटि** ॥१२१॥ [पा० ७।४।६८, स० ७।२।१२५]

व्यथेर्लिटि द्विरुक्तौ पूर्वस्य यण इग् भवति। विव्यथे, विव्यथाते। लिटीति किम्? वाव्यथ्यते।

**दीर्घोऽपितीणः** ॥१२२॥ [स० ७।२।१२६]

अपिति लिटि परत इणो द्विरुक्तौ पूर्वस्य दीर्घो भवति। ईयतु, ईयु। अपितीति किम्? इयाय, इययिथ।

[ दीर्घ इणः किति। पा० ७।४।६९ ]

**अत आदेः** ॥१२३॥ [पा० ७।४।७०, स० ७।२।१२७]

द्विरुक्तौ पूर्वस्यादेरकारस्य दीर्घो भवति। आटतु, आटुः। आदेरिति किम्? पपाच।

**नुक् चानेकहलः** ॥१२४॥

एकहलोऽन्यस्य लिटि परतो द्विरुक्तौ पूर्वस्यादेर्दीर्घो भवति, नुक् चागमः। आनञ्जतु, आनञ्जु। आनृधतु., आनृधु। आनर्छतुः, आनर्छुः। अनेकहल इति किम्? आटतु, आटुः।

[ तस्मान्नुड्द्विहल। पा० ७।४।७१, तस्मान्नुडनेकहल। स० ७।२।१२८ ]

**अश्नोतेः** ॥१२५॥

अश्नोतेर्लिटि परतो द्विरुक्तौ पूर्वस्य कृतदीर्घस्यादेरतो नुग् भवति। आनशे, आनशाते। श्नुग्रहणं किम्? अश्नातेर्मा भूत्। आशतु., आशु।

[ अश्नोतेश्च। पा० ७।४।७२, ऋमदश्नोत्योश्च। स० ७।२।१२९ ]

**भुवोऽत्** ॥१२६॥ [स० ७।२।१३०]

भवतेर्लिटि द्विरुक्तौ पूर्वस्याद् भवति। बभूव, बभूवतु, बभूवुः।

[भवतेर । पा० ७।४।७३]

**निजां लुक्येत्** ॥१२७॥

निजादीना द्विरुक्तौ पूर्वस्य शपो लुकि सत्येद् भवति। निजिर नेनेक्ति। विजिर् वेवेक्ति। विष्लृ वेवेष्टि। निजादयो वृत्करणाद् एव गृह्यन्ते। लुकीति किम्? निनेज।

[निजा त्रयाणा गुण श्लौ। पा० ७।४।७५, निजिविजिविषा गुण श्लौ। स० ७।२।१३१]

**ऋपृभृमाहाङामित्** ॥१२८॥

ऋ पृ भृ मा हाङ् इत्येतेषा शपो लुकि सति द्विरुक्तौ पूर्वस्येद् भवति। इयर्ति, पिपर्ति, बिभर्ति, मिमीते, जिहीते। इकार किम्? जहाति।

[भृञामित्। पा० ७।४।७६, ऋपृभृहाङ्माङामित्। स० ७।२।१३२]

**सन्यतः** ॥१२९॥ [पा० ७।४।७९, स० ७।२।१३३]

सनि द्विरुक्तौ पूर्वस्यात इदादेशो भवति। पिपक्षति, यियक्षति। सनीति किम्? पपाच। अत इति किम्? चुकूषति।

**ओः पुयण्ज्यपरे** ॥१३०॥ [पा० ७।४।८०, स० ७।२।१३४]

उवर्णान्तस्य सनि द्विरुक्तौ पूर्वस्य पवर्गे यणि जकारे चावर्णपरे परत इदादेशो भवति। पिपविषते, पिपावयिषति। बिभावयिषति। यियविषति, यियावयिषति। रिरावयिषति। लिलावयिषति। जिजावयिषति; जु इति सौत्रो धातु [१।२।९९]। ओरिति किम्? पापच्यते, सनि पापचिषते। पुयण्जीति किम्? नुनावयिषति, जुहावयिषति। अ-पर इति किम्? बुभूषति।

[In the Ms बिभविषति is found before बिभावयिषति, रिरविषति before रिरावयिषति, लिलविषति before लिलावयिषति and जिज-

विषति before जिजावयिषति, but by सनो ग्रहगुहश्च v 4 137 इट् is barred in these cases ]

**स्रुश्रुद्रुप्रुप्लुच्युआं[1] वा ॥१३१॥** [स० ७।२।१३५]

स्रवत्यादीना सनि द्विरुक्तौ पूर्वस्य यण्यवर्णपरे परत इत्त्व वा भवति। सिस्रावयिषति, सुस्रावयिषति। शिश्रावयिषति, शुश्रावयिषति। दिद्रावयिषति, दुद्रावयिषति। पिप्रावयिषति, पुप्रावयिषति। पिप्लावयिषति, पुप्लावयिषति। चिच्यावयिषति, चुच्यावयिषति। वचनसामर्थ्याद् व्यवधानम् आश्रीयते। अ-पर इत्येव। सुस्रूषति।

[ स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीना वा। पा० ७।४।८१। [1]०च्यूना वा v 1 In the Dhātupātha we find च्युङ् छ्युङ् ज्युङ् झ्युङ् प्रुङ् प्लुङ् रुङ् गतौ. ]

**आदेङ् यङि ॥१३२॥**

यङि द्विरुक्तौ पूर्वस्य आदेङो भवन्ति। पापच्यते, लोलूयते, चेचीयते। नायमादेङ् यङ्निमित्त इति लुक्यपि भवति। पापच, देद्य, नेन्य, लोलुव, पोपुव। जहातेर्यङ्लुकि जहातीति नात्त्व तत्र बहुल-वचनात्।

[ गुणो यङ्लुको। पा० ७।४।८२, स० ७।२।१३६। दीर्घोऽकित.। पा० ७।४।८३। दीर्घोऽनागमस्य। स० ७।२।१३७ ]

**नीग् वञ्चुस्रंसुध्वंसुभ्रंशुकसपतपदस्कन्दाम् ॥१३३॥** [नीग्-वञ्च०। पा० ७।४।८४, स० ७।२।१३८]

वञ्च्यादीना यङि द्विरुक्तौ पूर्वस्य नीगागमो भवति। वनीवच्यते, सनीस्रस्यते, दनीध्वस्यते, बनीभ्रश्यते, चनीकस्यते, पनीपत्यते, पनीपद्यते, चनीस्कद्यते।

[ Ms has नीग् वञ्च in the sūtra and वञ्चादीना in the Vrtti ]

**अमोऽतो नुक् ॥१३४॥**

ञमन्तस्य यङि द्विरुक्तौ पूर्वस्यादन्तस्य नुग् आगमो भवति। तन्नन्यते, जङ्गम्यते, बम्भण्यते, जञ्जन्यते, तन्तम्यते। अत इति किम्? तेतिम्यते।

[नुगतोऽनुनासिकान्तस्य। पा० ७।४।८५, नुगतो जमन्तस्य। स० ७।२।१३९]

**जपजभदहदशभञ्जपशाम्** ॥१३५॥ [स० ७।२।१४०]

जपादीना यङि द्विरुक्तौ पूर्वस्य नुग् आगमो भवति। जञ्जप्यते, जञ्जभ्यते, दन्दह्यते, दन्दश्यते, बम्भज्यते, पम्पश्यते। पश इति सौत्रो धातु ।

[°पशा च। पा० ७।४।८६।]

**चरफलोः** ॥१३६॥ [स० ७।२।१४१]

चरे फलेश्च यङि द्विरुक्तौ पूर्वस्यातो नुग् भवति। चञ्चूर्यते, पम्फुल्यते।

[चरफलोश्च। पा० ७।४।८७]

**ति चोदतः** ॥१३७॥

तकारादौ यङि च परतश्चरफलोरत उद् भवति। चरणं चूर्ति; प्रफुल्ता सुमनस । चञ्चूर्यते, पम्फुल्यते।

[उत्परस्यात । ति च। पा० ७।४।८८-८९, स० ७।२।१४२-१४३]

**रीगृत्वतः** ॥१३८॥ [स० ७।२।१४४]

ऋकारवतो यङि द्विरुक्तौ पूर्वस्य रीगागमो भवति। नरीनृत्यते, दरीदृश्यते, परीपृच्छ्यते, वरीवृश्च्यते।

[रीगृदुपधस्य च। पा० ७।४।९०]

**रुग्रिकौ च लुकि** ॥१३९॥ [पा० ७।४।९१, स० ७।२।१४५]

यङो लुकि च सत्यृकारवतो द्विरुक्तौ पूर्वस्य रुक् रिक् इत्येतावादेशौ भवत , रीक् च। मर्मृज , मरिमृज., मरीमृजः।

**सन्वल्लघुनि णौ चङ्यनग्लोपे** ॥१४०॥ [स० ७।२।१४६]

लघुन्यक्षरे परतो णौ चङ्परेऽनग्लोपे सति द्विरुक्तौ पूर्वस्य सन्वत् कार्यं भवति। सन्यत [ १२९ ] इत्युक्तम्, इहापि तथा। अपीपचत्। ओः पुयण्ज्यपर [ १३० ] इत्युक्तम्, इहापि तथा। अपीपवत्, अलीलवत्। स्रवत्यादीनाम् [ १३१ ] इत्युक्तम्, इहापि तथा। असिस्रवत्, असुस्रवत्। अशिश्रवत्, अशुश्रवत्। अदिद्रवत्, अदुद्रवत्। अपिप्रवत्, अपुप्रवत्। अपिप्लवत्, अपुप्लवत्। अचिच्यवत्, अचुच्यवत्। अन्यस्य न भवति। अनूनवत्, अजूहवत्। लघुनीति किम्? अततक्षत्, अररक्षत्। णाविति किम्? अचकमत। अनग्लोप इति किम्? अजगदत्, अशशठत्, अतस्तनत्। चङीति किम्? रिरमयिषति। चङ्ग्रहणमुत्तरार्थम्।

[ सन्वल्लघुनि चङ्परेऽनग्लोपे। पा० ७।४।९३ ]

**दीर्घो लघोः** ॥१४१॥ [पा० ७।४।९४, स० ७।२।१४८]

द्विरुक्तौ पूर्वस्य लघोर्लघुन्यक्षरे परतो णौ चङ्यनग्लोपे सति दीर्घो भवति। अपीपचत्[1], अबीभवत्, अलीलवत्, अनूनवत्, अजूहवत्। लघुनीत्येव। अततक्षत्। लघोरिति किम्? असिस्रवत्। णावित्येव। अचकमत। चङीत्येव। रिरमयिषति। अनग्लोप इत्येव। अजगदत्, अशशठत्।

[ [1]अपीयवत् Ms ]

**स्मृदृत्वरप्रथम्रदस्तॄस्पशामत्** ॥१४२॥ [स० ७।२।१४९]

स्मरत्यादीनां णौ चङ्परे द्विरुक्तौ पूर्वस्य लघुन्यक्षरे परतोऽद् भवति। असस्मरत्, अददरत्। तपरकरणाद् दीर्घोऽपि न भवति। अतत्वरत्, अपप्रथत्, अमम्रदत्, अतस्तरत्, अपस्पशत्।

[ अत् स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्। पा० ७।४।९५ ]

**वा वेष्टिचेष्टयोः** ॥१४३॥

णौ चङ्परे वेष्टिचेष्ट्योर्द्विरुक्तौ पूर्वस्याद् वा भवति। अववेष्टत्, अविवेष्टत्। अचचेष्टत्, अचिचेष्टत्।

[विभाषा वेष्टिचेष्ट्योः। पा० ७।४।९६, वेष्टिचेष्ट्योर्वा। स० ७।२।१५० ]

**ईच्च गणः** ॥१४४॥ [ई च०। पा०७।४।९७, स०७।२।१५१]

गणेश्चङ्परे णौ द्विरुक्तौ पूर्वस्य ईदादेशो भवति, अच्च। अजीगणद् गा', अजगणद् गा। अदन्ततयाग्लोपित्वाद् आरम्भ। अनेन च हलोऽनादिलोपो न बाध्यते विरोधाभावात्, अनेकवाक्यत्वाच्च [६।२।११२]। अपीपचदित्यादावित्त्व दीर्घत्वेन न बाध्यते। यत्र त्वेकवाक्यत्व' तावत्, बाध्येत। यथात्त्व [६।२।१३२] नीगादयो [६।२।१३३] बाधन्त इति।

[प्रयोजन सन्वद्भावस्य दीर्घत्वम् ॥ ७।४।८२।३ ॥ अचीकरत्। अजीहरत् ॥ सन्वद्भावमपवादत्वाद्दीर्घत्व न बाधते। मान्प्रभृतीनां दीर्घत्वमित्त्वस्य ॥ ४ ॥ मान्प्रभृतीना दीर्घत्वमपवादत्वादित्त्व न बाधते ॥ गणेरीत्त्व हलादिशेषस्य ॥ ५ ॥ गणेरीत्त्वमपवादत्वाद्धलादिशेष न बाधते ॥ महाभाष्यम् ७।४।८२। [1]अनेकवाक्यत्वाच्च appears to be connected with both what precedes and what follows acc to काकाक्षिगोलकन्याय ]

इति चान्द्रे व्याकरणे षष्ठाऽध्यायस्य द्वितीयः पाद. समाप्त।

**वीप्साभीक्ष्ण्ययोर्द्वे** ॥ १ ॥

वीप्सायाम् आभीक्ष्ण्ये च यद् वर्तते तस्य द्वे रूपे भवत'। क्रियया गुणेन द्रव्येण वा भिन्नानर्थान् व्याप्तुमिच्छा वीप्सा। वृक्ष वृक्ष सिञ्चति। ग्रामो ग्रामो रमणीय'। ग्रामे ग्रामे पानीयम्। गृहे गृहे स्वामी। रस रसं भक्षयति। क्रिया क्रियामरभते। आनुपूर्व्येऽपि वीप्सास्त्येव। मूले मूले स्थूला, अग्रेऽग्रे सूक्ष्मा इति। यदि ह्यत्र मूलाग्रभेदो न स्यादानुपूर्व्यम् अपि न स्यात्। माष माषमस्मात् कार्षापणादिहभवद्भ्या देहीति माषं माषम् इत्यतो वीप्सैव गम्यते, शब्दान्तरात् पुनरस्मात् कार्षापणादित्यवधारणम्।

पूर्व पूर्व पुष्यन्ति, प्रथमं प्रथम पच्यन्त इत्यत्रापि वीप्सैव। उभाविमावाढ्यौ, कतरा कतरानयोराढ्यता ? सर्व इम आढ्या, कतमा कतमैषाम् आढ्यता ? इतीहापि वीप्सैव। आभीक्ष्ण्य पौन पुन्यम्। पचति पचति। प्रपचति प्रपचति। लुनीहि लुनीहीत्येवायं लुनाति। भुक्त्वा भुक्त्वा व्रजति। पटपटाकरोति, पटपटायति[1], पटपटायते।

[सर्वस्य द्वे। नित्यवीप्सयो। पा० ८।१।१,४। य (i e नित्यशब्द.) आभीक्ष्ण्ये वर्तते तस्येद ग्रहणम्। भाष्यम्। आनुपूर्व्ये स्वार्थेऽवधार्यमाणेऽनेकस्मिन्। चापले। क्रियासमभिहारे। आभीक्ष्ण्ये। डाचि च। वा० ३-७। पदस्य वीप्साया द्वे। सगतेश्चाभीक्ष्ण्ये। क्त्वाणमुलो। क्रियासमभिहारे लोट। आनुपूर्व्ये। अनेकावधारणे। डाच्यव्यक्तानुकरणे। डतरडतमयो समाना स्त्रीभावप्रश्ने। पूर्वप्रथमयोरर्थातिशये वा। स० ७।३।१-८। [1]Ms om ]

**परेर्वर्जने वाक्ये वा ॥ २ ॥**

परेर्वर्जने वर्तमानस्य वाक्यप्रयोगे सति द्वे रूपे वा भवत। परि परि त्रिगर्तेभ्यो वृष्टो देव·। परि त्रिगर्तेभ्यो वृष्टो देव। वर्जन इति किम् ? ओदन परि सिञ्चति। वाक्य इति किम् ? परित्रिगर्त वृष्टो देव।

[परेर्वर्जने। पा० ८।१।५, परेरसमासे। परेर्वर्जने वा। वा० १-२। वर्जने परेरसमासे। स० ७।३।१०]

**अध्युपर्यधसां सामीप्ये ॥ ३ ॥**

अधि उपरि अवस् इत्येतेपा सामीप्ये गम्यमाने द्वे रूपे भवतः। अध्यधिष्ठापयति। उपर्युपरि ब्राह्मणान् उदीक्षते। व्यसन्यधोऽधो व्रजति [मनु० ७।५३]। सामीप्य इति किम् ? अधिकरोति।

[उपर्यध्यधस सामीप्ये। पा० ८।१।७, अधोऽध्युपरीणा सामीप्ये। स० ७।३।११]

**वाक्यादेरामन्त्रितस्यासूयासम्मत्योः ॥ ४ ॥**

आमन्त्र्यत इत्यामन्त्रितम्, सबोध्यमानमुच्यते, तस्य वाक्यादेरसूयाया सम्मतौ च द्वे रूपे भवत.। अविनीतक३ अविनीतक, इदानी ज्ञास्यसि

जाल्म। कोपकुत्सनभर्त्सनेष्वप्यसूयास्त्येवेति कोपादयो न पृथगुच्यन्ते। सम्मतौ। अभिरूपक३ अभिरूपक, शोभनः खल्वसि। वाक्यादेरिति किम्? उदारोऽसि, देवदत्त। असूयासम्मत्योरिति किम्? देवदत्त, गामभ्याज शुक्लाम्।

[ वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु। पा० ८।१।८, स० ७।३।१२। असूयाकुत्सनयोः कोपभर्त्सनयोश्चैकार्थत्वात्पृथक्त्वनिर्देशानर्थक्यम्। पा० ८।१।८।१ ]

**एकस्य सुब्लुक्** ॥ ५ ॥ [स० ७।३।१३]

वीप्सायामेवैकशब्दस्य द्वित्व आदेः सुब्लुग् भवति। एकैकः।

[ एकं बहुव्रीहिवत्। पा० ८।१।९, बहुव्रीहित्वे प्रयोजनं सुब्लोपपुंवद्भावौ। वा० ३। ]

**आबाधे पुंवच्च** ॥ ६ ॥ [स० ७।३।१४]

आबाधस्त्वरितस्य चेतसो बाधा, तस्मिन् प्रयोक्तुर्गम्यमाने द्वे रूपे भवतः, सुब्लुक् पुंवद्भावश्चादेः। गतगतः, नष्टनष्टः। गतगता, नष्टनष्टा।

[ आबाधे च। पा० ८।१।१०, बहुव्रीहित्वे प्रयोजनं सुब्लोपपुंवद्भावौ। ८।१।९।३ ]

**प्रकारे गुणस्य** ॥ ७ ॥

प्रकारे गम्यमाने गुणवचनस्य द्वे रूपे भवतः, सुब्लुक् पुंवद्भावश्चादेः। पटुपटुः। पटुपट्वी। प्रकार इति किम्? पटुः। गुणस्येति किम्? अग्निर्माणवकः। प्रकारे वृत्त्यभावाद् रूपादीनां न भवति।

[ प्रकारे गुणवचनस्य। पा०८।१।१२, प्रकारे गुणवचनस्य वा। स०७।३।१५]

**अकृच्छ्रे प्रियसुखयोर्वा** ॥ ८ ॥

अकृच्छ्रार्थयोः प्रियसुखयोर्द्वे वा भवतः, सुब्लुक् पुंवद्भावश्चादेः। प्रियप्रियेण ददाति, प्रियेण ददाति, सुखसुखेन ददाति, सुखेन ददाति। अकृच्छ्र इति किम्? प्रियः पुत्रः, सुखो रथः।

[अकृच्छ्रे प्रियसुखयोरन्यतरस्याम्। पा० ८।१।१३, अकृच्छ्रे प्रियसुखयो.। स० ७।३।१६]

**व्यतिहारे सर्वादीनां सुर्बहुलम्** ॥ ९ ॥

सर्वादीना व्यतिहारे गम्यमाने द्वे रूपे भवत', आदेश्च प्रथमैकवचनं सुब्लुक् च बहुल भवति। अन्योऽन्यं भोजयन्ति। इतरेतर भोजयन्ति।

[कर्मव्यतिहारे सर्वनाम्न समासवच्च बहुलम्, यदा न समासवत् प्रथमैकवचन तदा पूर्वपदस्य। पा० ८।१।१२।११। अन्यस्य क्रियाया' सातत्ये। एकवचेतरस्य व्यतीहारे। परान्ययो सुक् च। स० ७।३।१७-१९]

**परस्यापुंस्याम्** ॥१०॥

स्त्रिया नपुसके च सर्वादीना परस्याम् वा भवति। अन्योऽन्यामिमे ब्राह्मण्यौ भोजयत, अन्योऽन्यम्। अन्योऽन्यामिमे ब्राह्मणकुले भोजयतः, अन्योऽन्यम्। इतरेतराम्, इतरेतरम्। अपुंसीति किम्? अन्योऽन्यं ब्राह्मणौ भोजयत.।

[स्त्रीनपुसकयोरुत्तरपदस्य वाम्भाव.। पा० ८।१।१२।१२। एषामपुंस्यां सुपो वा। स० ७।३।२०]

**यथास्वे यथायथम्** ॥११॥ [पा० ८।१।१४, स० ७।३।२१]

यथास्वम् इत्यस्मिन्नर्थे यथायथम् इति निपात्यते।

**द्वन्द्वं रहस्यमर्यादाव्युत्क्रान्तियज्ञपात्रप्रयोगेषु** ॥१२॥

द्विशब्दस्य रहस्यादिष्वर्थेषु द्वन्द्वम् इति निपात्यते। द्वन्द्व मन्त्रयन्ते[1]। आचतुरं ह्यीमे पशवो द्वन्द्वम्[2]। द्वन्द्वं व्युत्क्रान्ता। द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति। रहस्यादिष्विति किम्? द्वौ द्वौ।

[द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु। पा०८।१।१५। द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगेषु। स० ७।३।२२। [1]मन्त्रयते Ms., but Kāś, Hc etc have मन्त्रयन्ते. [2]Kāś adds मिथुनायन्ते and explains माता पुत्रेण मिथुन गच्छति पौत्रेण तत्पुत्रेणाऽपीति मर्यादार्थ.]

**अत्यन्तसहचरिते लोकविज्ञाते ॥१३॥** [स० ७।३।२३]

अव्यभिचारे सहचरिते लोकप्रसिद्धे युग्मे द्वन्द्वमिति निपात्यते। द्वन्द्वं सूर्याचन्द्रमसौ। द्वन्द्वं नारदपर्वतौ। अत्यन्तसहचरित इति किम्? द्वौ युधिष्ठिरार्जुनौ। लोकविज्ञात इति किम्? द्वौ देवदत्तयज्ञदत्तौ।

[अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्युपसङ्ख्यानम्। पा० ८।१।१५।१। द्वन्द्व कलहयुग्मसमासादिषु। स० ७।३।२४]

**संभ्रमे यावद्बोधम् ॥१४॥**

प्रयोक्तु सम्भ्रमे सति यावद्भि शब्दै. सोऽर्थोऽवगम्यते तावन्तः शब्दा प्रयोक्तव्या। अहिरहिरहि! बुध्यस्व बुध्यस्व बुध्यस्व!

[चापले। पा० ८।१।१२।५। न चावश्य द्वे एव। यावद्भि शब्दै· सोऽर्थो गम्यते तावन्त प्रयोक्तव्या। भाष्यम्। वाक्यस्यापि सम्भ्रमे यावद्बोधम्। स० ७।३।२५]

**अपादादौ पदादेकवाक्ये ॥१५॥**

एतदधिकृत वेदितव्यम्। पद्यते गम्यतेऽनेनार्थ इति पदम्, सुबन्तं तिङन्तं च। पदसमूहो वाक्यम्।

[पदस्य। पदात्। अनुदात्त सर्वमपादादौ। पा० ८।१।१६-१८। पदादपादादौ समानवाक्ये। स० ७।३।२६]

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयान्तयोर्वानौ वा ॥१६॥**

युष्मदस्मदो· षष्ठ्याद्यन्तयोरपादादौ वर्तमानयोः पदात् परयोरेकवाक्ये वाम् नौ इत्येतावादेशौ वा भवत·। ग्रामो वा स्वम्, जनपदो नौ स्वम्। ग्रामो युवयो स्वम्, जनपद आवयो स्वम्। ग्रामो वा दीयते, जनपदो नौ दीयते। ग्रामो युवाभ्या दीयते, जनपद आवाभ्या दीयते। ग्रामो वा पश्यति, जनपदो नौ पश्यति। ग्रामो युवा पश्यति, जनपद आवा पश्यति। षष्ठ्यादिग्रहणं किम्? ग्रामे युवाभ्या कृतम्, जनपद आवाभ्या कृतम्।

तदन्तविविना सिद्धेऽन्तग्रहण श्रूयमाणार्थम्। ग्रामो युष्मत्पुत्रस्य, जनपदोऽस्मत्पुत्रस्य। अपादादावित्येव।

रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता।
[1]मारजिद् भगवान् बुद्ध अस्माक कुलनन्दन ॥

पदादित्येव। युवयो स्वम्, आवयो स्वम्। एकवाक्य इत्येव। देवदत्तस्तिष्ठति ग्रामे, युवयो स्व नगरम्।

[ युष्मदस्मदो षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ। पा० ८।१।२०, युष्मदस्मदोरन्यतरस्यामनन्वादेशे। पा० ८।१।२६।१। अपर आह सर्व एव वानावादयोऽनन्वादेशे विभाषा वक्तव्या। भाष्यम्। द्विवचनस्य वानावौ। स०७।३।२८। [1]Kāś reads the second line thus स एव नाथो भगवानस्माक शत्रुमर्दन ॥ The absence of sandhi in *c d* in Candravrtti shows that it is a later adaptation ]

**बहुवचनस्य वस्नसौ** ॥१७॥ [पा० ८।१।२१]

बहुवचनान्तयोर्युष्मदस्मदोरपादादौ वर्तमानयो पदात् परयोरेकवाक्ये वस् नस् इत्येतावादेशौ वा भवत। ग्रामो व· स्वम्, जनपदो न स्वम्। ग्रामो युष्माकं स्वम्, जनपदोऽस्माकं स्वम्। ग्रामो वो दीयते, जनपदो नो दीयते। ग्रामो युष्मभ्य दीयते, जनपदोऽस्मभ्यं दीयते। ग्रामो व पश्यति, जनपदो न पश्यति। ग्रामो युष्मान् पश्यति, जनपदोऽस्मान् पश्यति।

[ युष्मदस्मदोर्ङंविभक्त्यन्तयोर्वस्नसौ वा। स० ७।३।२७ ]

**एकवचनस्य तेमे** ॥१८॥

एकवचनयोर्युष्मदस्मदोस्ते मे इत्येतावादेशौ वा भवत। ग्रामस्ते स्वम्, जनपदो मे स्वम्। ग्रामस्तव स्वम्, जनपदो मम स्वम्। ग्रामस्ते दीयते, जनपदो मे दीयते। ग्रामस्तुभ्य दीयते, जनपदो मह्य दीयते।

[ तेमयावेकवचनस्य। पा० ८।१।२२, स० ७।३।२९ ]

**त्वामौ द्वितीयायाः** [पा० ८।१।२३, स० ७।३।३०]

द्वितीयैकवचनान्तयोर्युष्मदस्मदोस्त्वा मा इत्येतावादेशौ वा भवत। ग्रामस्त्वा पश्यति, जनपदो मा पश्यति। ग्रामस्त्वा पश्यति, जनपदो मा पश्यति।

**अन्वादेशे ॥२०॥**

कथितानुकथनविषये युष्मदस्मदोरादेशा भवन्ति, नित्य पुनर्विधानात्। ग्रामो युवयो स्वम्, अथो जनपदो वा स्वम्। एवं सर्वत्र।

[ **युष्मदस्यदोरन्यतरस्यामनन्वादेशे। ८।१।२६।१, अनन्वादेश इति किमर्थम्? अथो ग्रामे कम्बलस्ते स्वम्। अथो ग्रामे कम्बलो मे स्वम्। भाष्यम्। वसूनसादयो नित्यमन्वादेशे। स० ७।३।३१** ]

**सपूर्वात् प्रथमान्ताद्वा ॥२१॥** [स० ७।३।३२]

विद्यमानपूर्वात् प्रथमान्तात् परयोर्युष्मदस्मदोरादेशा अन्वादेशेऽपि वा भवन्ति। ग्रामे पटो युष्माकं स्वम्, अथो जनपदे कम्बलो व. स्वम्; अथो जनपदे[1] कम्बलो युष्माक स्वम्। ग्रामे कम्बलोऽस्माक स्वम्, अथो नगरे कम्बलो न स्वम्, अथो नगरे कम्बलोऽस्माक स्वम्। सपूर्वादिति किम्? पटो युष्माक स्वम्, अथो कम्बलो व स्वम्। प्रथमान्तादिति किम्? पटो नगरे युष्माक स्वम्, अथो कम्बलो ग्रामे व' स्वम्।

[ **सपूर्वाया प्रथमाया विभाषा। पा० ८।१।२६।** [1]**नगरे** Ms ]

**न चवाहाहैवयोगे ॥२२॥** [पा० ८।१।२४, स० ७।३।३३]

चवादिभिर्योगे युष्मदस्मदोरादेशा न भवन्ति। ग्रामस्तव च स्वम्, जनपदो मम च स्वम्। ग्रामस्तुभ्य च दीयते, जनपदो मह्य च दीयते। ग्रामस्त्वा च पश्यति, जनपदो मा च पश्यति। ग्रामस्तव वा स्वम्, जनपदो मम वा स्वम्। ग्रामस्तुभ्य वा दीयते, जनपदो मह्य वा दीयते। ग्रामस्त्वा वा पश्यति, जनपदो मा वा पश्यति। ग्रामस्तव ह स्वम्, जनपदो मम ह स्वम्। ग्रामस्तुभ्यं ह दीयते, जनपदो मह्य ह दीयते। ग्रामस्त्वा ह पश्यति, जनपदो मा ह पश्यति। ग्रामस्तवाह स्वम्, जनपदो ममाह

स्वम्। ग्रामस्तुभ्यम् अह दीयते, जनपदो मह्यम् अह दीयते। ग्रामस्त्वामह पश्यति, जनपदो मामह पश्यति। ग्रामस्तवैव स्वम्, जनपदो ममैव स्वम्। ग्रामस्तुभ्यम् एव दीयते, जनपदो मह्यम् एव दीयते। ग्रामस्त्वाम् एव पश्यति, जनपदो माम् एव पश्यति। एव द्विवचनबहुवचनयोरुदाहार्यम्। योग इति किम्? ग्रामश्च ते स्वम्, नगरं च मे स्वम्।

**दृश्यर्थेऽनालोचने** ॥२३॥

दर्शनार्थेष्वालोचनवर्जितेषु सत्सु युष्मदस्मदोरादेशा न भवन्ति। ग्रामस्त्वा सदृश्यागत, जनपदो मा सप्रेक्ष्यागत। ग्रामस्तव स्वं संदृश्यागतः, जनपदो मम स्व सप्रेक्ष्यागत[1]। अनालोचन इति किम्? ग्रामस्त्वालोचयति, जनपदो मालोचयति।

[पश्यार्थैश्चानालोचने। पा० ८।१।२५, दृश्यर्थैरनालोकने। स० ७।३।३४। [1]Ms सदृश्यागत ]

**आमन्त्रितं पूर्वमसद्वत्** ॥२४॥ [स० ७।३।३५]

युष्मदस्मदोरादेशविषय आमन्त्रितं पूर्वमविद्यमानवद् भवति। देवदत्त तव स्वम्। यज्ञदत्त मम स्वम्। एवं सर्वत्र। आमन्त्रितम् इति किम्? कम्बलस्ते स्वम्, पटो मे स्वम्। पूर्वम् इति किम्? मयैतत्सर्वमाख्यातं युष्माकं द्विजपुगवा। परस्य ह्यसद्वद्भावेऽपादादाविति प्रतिषेधो न स्यात्। वत्करणं किम्? श्रवणं यथा स्यात्।

[आमन्त्रित पूर्वमविद्यमानवत्। पा० ८।१।७२ ]

**न सामान्यवचनमेकार्थे** ॥२५॥

समानाधिकरणे परत· सामान्यवचनम् आमन्त्रितम् असद्वन्न भवति। माणवक जटिलक ते स्वम्। परस्यासद्वद्भावे पूर्वाश्रया आदेशा भवन्ति। सामान्यवचनम् इति किम्? देवदत्त माणवक तव स्वम्। एकार्थ इति किम्? देवदत्त यज्ञदत्त युवयोः स्वम्।

[ नामन्त्रिते समानाधिकरणे सामान्यवचनम्। पा० ८।१।७३, न समानाधिकरणे सामान्यवचनम्। स० ७।३।३६ ]

**बहुत्वे वा ॥२६॥**

बहुत्वे वर्तमानमामन्त्रित सामान्यवचन समानाधिकरणे परतोऽसद्वद्वा न भवति। ब्राह्मणाः शरण्या युष्माक स्वम्। ब्राह्मणा शरण्या वः स्वम्।

[ विभाषितं विशेषवचने बहुवचनम्। पा० ८।१।७४, जस्वा। स० ७।३।३७ ]

**पूर्वत्रासिद्धम् ॥२७॥** [पा० ८।२।१, स० ७।३।३८]

[1]पूर्वस्मिँल्लक्षणे कर्तव्ये यत् पर तदसिद्ध वेदितव्यम्, इत उत्तरं च पूर्वस्मिन् पूर्वस्मिन्नुत्तरमुत्तरमसिद्धम्। अस्मा उद्धरति, द्वा अत्र, द्वा आनय, असा आदित्य। [ ६।४।२७ ] व्यलोपस्यासिद्धत्वात् स्वरसन्धिर्न भवति। अमुष्मै, अमुष्मात्, अमुष्य, अमुष्मिन्। [ ६।३।११२ ] उत्वस्यासिद्धत्वाद् अत [ २।१।२ ] इति स्मायादयो भवन्ति। शुष्किकेति [ ६।३।९० ] कत्वस्यासिद्धत्वाद् इत्त्वविकल्पो [ ६।१।७१ ] न भवति। क्षामिमान् इनि [ ८९ ] मत्वस्यासिद्धत्वान् मतोर्वत्व [ ३५ ] न भवति। गुडलिड्मान् इति ढत्वजश्त्वयोरसिद्धत्वाज् झय [ ३६ ] इति मतोर्वत्वं न भवति। औजिढद् इति ढत्वादेरसिद्धत्वाद् द्विर्वचने जिकारो [६।२।११६] भवति।

[ शुष्किका शुष्कजङ्घा च क्षामिमानौजढत्तथा।
मतोर्वत्वे झला जश्त्व गुडलिण्मान्निदर्शनम्॥ काशिका ८।२।१

Vopadeva in his Kāvyakāmadhenu supports औजढत्, while Mādhava supports औजिढत् [1]पूर्वस्मिन् लक्षणैर्कर्तव्ये L ]

**सुपि नलोपः ॥२८॥**

सुप्येव नलोपोऽसिद्धो भवति। राजभ्याम्, राजभिः, राजभ्य। नलोपस्यासिद्धत्वादात्त्वमैस्त्वमेत्त्व च न भवति। वृत्रहभ्याम्, वृत्रहभिरिति

तुग् न भवति। सुपीति किम्? वृत्रहच्छाया। नाय सुपि नलोप·। पञ्च ब्राह्मण्य इति नाकृते लुकि नलोप·, लिङ्गाभावाच्च न डाप्।

[नलोप सुप्स्वरसञ्ज्ञातुग्विधिषु कृति। पा० ८।२।२, नलोप. सुपि। स० ७।३।३९]

**न नि मुः** ॥२९॥ [स० ७।३।४०]

नाशब्दे परत· कार्ये कर्तव्ये मुभावो नासिद्धो भवति। अमुना। यञि सुपि [६।२।३९-४०] इत्यात्त्व न भवति। अत एव वचनान् नाभावेऽपि कर्तव्ये मुभावो नासिद्ध इति गम्यते।

[न मु ने। पा० ८।२।३]

**सिज्लोप एकादेशे** ॥३०॥ [पा० ८।२।६।५, स० ७।३।४१]

एकादेशे कर्तव्ये सिज्लोपो नासिद्धो भवति। अलावीत्।

**षठनि क्तादेशः** ॥३१॥

षत्वे ठनि कर्तव्ये तादेशो नासिद्धो भवति। वृक्ण.। झलि [५५] इति षत्वं न भवति। क्षीबेण चरति, क्षीबिक.। द्वयज्नौभ्या ठन् [३।४।६] इति ठन् भवति।

[निष्ठादेश षत्वस्वरप्रत्ययेड्विधिषु। पा० ८।२।६।७, षठनोर्निष्ठादेश। स० ७।३।४२]

**प्लुतस्तुकि** ॥३२॥

तुकि कर्तव्ये प्लुतो नासिद्धो भवति। अग्ना३इ च्छत्रम्। छ [५।१।७०] इति तुग् भवति। अग्निचि३द् इति तुकि कृते प्लुत.।

[प्लुतिस्तुग्विधौ छे। पा०८।२।६।११, प्लुतविकारश्छे तुकि। स०७।३।४३]

**धुटि श्चुः** ॥३३॥

धुटि कर्तव्ये श्चुत्वम् असिद्ध न भवति। भवाञ् श्च्योतति। न [६।४।१४] इति धुड् न भवति।

[श्चुत्व धुट्त्वे। पा० ८।२।६।१२, धुटि श्चुत्वम्। स० ७।३।४४]

**द्वित्वे परसवर्णः** ॥३४॥ [स० ७।३।४५]

द्वित्वे परसवर्णो नासिद्धो भवति। सय्य्यॅन्ता। यर [ ६।४।१४० ] इति द्वित्वं भवति।

[ द्विर्वचने परसवर्णत्वम्। पा० ८।२।६।१४ ]

**मादुपान्ताच्च मतोर्वः** ॥३५॥

मान्तादवर्णान्तान्मकारोपान्तादवर्णोपान्ताच्च मतोर्वत्वं भवति। इदंवान्, किंवान्, दाडिमीवान्, वृक्षवान्, मालावान्, अह्वान्, भास्वान्।

[ मादुपधायाश्च मतोर्वोऽयवादिभ्य । पा० ८।२।९, अमात्तदुपधाच्च मतोर्वे । स० ७।३।४६ ]

**झयः** ॥३६॥ [पा० ८।२।१०, स० ७।३।४७]

झयन्तात् परस्य मतोर्वत्व भवति। अग्निचित्वान् ग्रामः। विद्युत्वान् बलाहक।

**नाम्नि** ॥३७॥

संज्ञाया मतोर्वत्व भवति। कपीवती, मणीवती।

[ सञ्ज्ञायाम्। पा० ८।२।११, स० ७।३।४८ ]

**न यवादिभ्यः** ॥३८॥

यवादिभ्य परस्य मतोर्वत्वं न भवति। यवमान्। ऊर्मिमान्। भूमिमान्। कृमिमान्। मादुपान्ताद् [ ३५ ] इति प्राप्ते प्रतिषेध। वशामान्। शिम्बिमान्। नाम्नि [ ३७ ] इति प्राप्ते ककुद्मान्, झय [ ३६ ] इति प्राप्ते। यवादिराकृतिगण । इक्षुमती। द्रुमती। कान्तिमती। बन्धुमान् नाम पर्वत। बिन्दुमती। चारुमतीति संज्ञायाम्।

[ मादुपधायाश्च मतोर्वोऽयवादिभ्य.। पा० ८।२।९। न यवोर्मि-दल्मि-भूमि-तिमि-कृमि कुञ्चा-द्राक्षा-ध्राक्षा वासो-हरिद्-गरुत्-काकुज्-ज्योतिष्मद्-गोमद्भ्य। कान्ति-शिम्बि-हरि-चार्विक्षु-मधु-बन्धिवन्दु-बिन्दु-द्रु-वस्वञ्शु- श्रु - हनु - सानु - भान्वादिभ्य । स० ७।३।५३-५४ ]

**अष्ठीवच्चक्रीवत्कक्षीवदुदन्वद्रुमण्वच्चर्मण्वती** ॥३९॥

एते शब्दा. सज्ञाया निपात्यन्ते। अष्ठीवान्, [ शरीरैकदेशः ] चक्रीवान्, गर्दभः। कक्षीवान् नाम ऋषि । उदन्वान्, उदधिः। रुमण्वान् नाम पर्वतः। चर्मण्वती नाम नदी। नाम्नोऽन्यत्र। अस्थिमान्, चक्रवान्, [1]कक्ष्यावान्, उदकवान्, लवणवान्, चर्मवान्। कथम् आसन्दीवान् नाम ग्राम· ? आसन्दीशब्द· प्रकृत्यन्तरमस्तीति सज्ञाया मतोर्वत्वम्।

[ आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ( °ण्वत्य । स० )। उदन्वानुदधौ च । पा० ८।२।१२-१३, स० ७।३।४९-५०। [1]कक्षावात् L. ]

**राजन्वान् सौराज्ये** ॥४०॥ [पा० ८।२।१४, स० ७।३।५१]

राजन्वानिति सौराज्ये गम्यमाने निपात्यते। राजन्वान् देशः। सौराज्य इति किम् ? राजवान्।

**कृपो रो लोऽकृपणादीनाम्** ॥४१॥

कृपे रेफस्य लत्वं भवति, न तु कृपणादीनाम्। क्लृप्तम्, क्लृप्तवान्, कल्सा, कल्पक· । अकृपणादीनाम् इति किम् ? कृपण । कृपाणः। कृपीटम्। कर्पट· ।

[ कृपो रो ल । पा० ८।२।१८। कृपणादीनां प्रतिषेधो वक्तव्य । कृपण । कृपाण । कृपीटम्। महाभाष्यम्। कृपो रो लोऽकृपण-कृपाण-कर्पट-कृपीट-कर्पर-कर्पूर-कृपादीनाम्। स० ७।३।५४ ]

**प्रादीनामयतौ** ॥४२॥

प्रादीनामयतौ परतो रेफस्य लकारो भवति। पल्ययते, पलायते।

[ उपसर्गस्यायतौ। पा० ८।२।१९, स० ७।३।५५ ]

**ग्रो यङि** ॥४३॥ [पा० ८।२।२०, स० ७।३।५६]

गिरतेर्यङि परतो रेफस्य लत्व भवति। निजेगिल्यते।

**अचि वा** ॥४४॥ [स० ७।३।५७]

अजादौ विहितस्य गिरते रेफस्य लत्व वा भवति। निगलनम्,

निगरणम्। निगालक, निगारक । निगाल्यते, निगार्यते। पूर्वमेव णो ऌत्वम्। विहितविशेषण किम्? गिरो, गिर ।

[ अचि विभाषा। पा० ८।२।२१ ]

**परेर्घाङ्कयोगेषु** ॥४५॥ [स० ७।३।५८]

परेर्घादिषु परतो रेफस्य ऌत्व वा भवति। पलिघ, परिघ । पल्यङ्क, पर्यङ्क । पलियोग, परियोग ।

[ परेश्च घाङ्क्यो । पा० ८।२।२२ ]

**कपिरिकादीनाम्** ॥४६॥

कपिरिकादीना रेफस्य ऌत्व वा भवति। कपिलिका, कपिरिका। तल्पिलिका[1], तर्पिरिका। तिल्पिरिका, तिर्पिरिका। तिल्पिलीक, तिर्पिलीक । लोमानि, रोमाणि। अङ्गुलि, अङ्गुरि । गल, गर। अलम्, अरम्। लघु, रघु । मूरदेव, मूलदेव । वाल, वार । व्यवस्थितविभाषा चेयम्।

[ वाल-मूल-लघ्वलम्-अङ्गुलीना वा लो रमापद्यत इति वक्तव्यम्। सञ्ज्ञा-छन्दसोर्वा कपिलकादीनामिति वक्तव्यम्। कपिरक कपिलक । तिल्विरीक तिल्विलीक । रोमाणि लोमानि। पांसुरम् पासुलम्। कर्म कल्म। शुक्र शुक्ल। भाष्यम् ८।२।१८ । कपिरिका-तिप्परिका-ऽङ्गुरिक-रोम-पुरुष-तरुण-सरिरा-ऽरम्-सूर-करीर-कर्म-मुकुर-पासुर-रेखा-रिक्षादीनाम्। इरा-तर्पर-करभ-शरभ-वार-खार-रघु-गरादीनामर्थभेदे। स० ७।३।५९-६०। [1]तल्पलिका Ms ]

**डः** ॥४७॥

डकारस्य ऌत्व वा भवति। वलभी, वडभी। नाल, नाड ।

[There is no corresponding rule in the system of Pāṇini In the Rkpratiśākhya we find द्वयोश्चास्य स्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकार. It is to be noticed that only intervocal d becomes l Hence Bhoja says असयुक्तानादेर्ड vii 3 61 He adds जपादीना पो व. डो लो वा लश्च ड । स० २।२२५। चूडा चूला। वडभी वलभी। जडम् जलम्। त्व समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ। अयन्तु

युवयोर्भेद स जडात्मा पटुर्भवान् ॥ [ काव्यादर्श २।१८५ ] इति दण्डी । सक्षिप्त-सारवृत्ति । लश्च ड इति लत्वविधौ चन्द्रसूत्रम् । पाणिनीये मुख्यलक्षण नास्ति, डलयोरेकत्वस्मरणमिति वैयाकरणाना प्रसिद्धे । गोयीचन्द्र । ]

**सुपः प्रकृतेर्नो लोपः** ॥४८॥

सुबन्ताया प्रकृतेर्नकारान्ताया लोपो भवति । राजा, राजीयति, राजायते, राजपुरुष , पञ्च, सप्त । सुप इति किम् ? अहन् । प्रकृतेरिति किम् ? तस्मिन् , वृक्षान् ।

[ नलोप प्रातिपदिकान्तस्य । पा० ८।२।७, प्रातिपदिकस्यानह्नो नो लोप । स० ७।३।६३ ]

**न सम्बुद्धौ** ॥४९॥ [स० ७।३।६५]

सम्बोधने नो लोपो न भवति । हे राजन् । हे तक्षन् ।

[ न ङिसम्बुद्ध्यो । पा० ८।२।८ ]

**नपुंसके वा** ॥५०॥ [स० ७।३।६५क]

नपुसके वर्तमानस्य सम्बोधने नो लोपो वा भवति । हे वर्मन्, हे वर्म ।

[ वा नपुसकानाम् । पा० ८।२।८।२ ]

**सुपि वलि तद्वत्** ॥५१॥ [स० ७।३।६६]

सुपि वलादौ सुबन्तस्येव कार्यं भवति । पञ्चानाम्, पञ्चक । राजभ्याम्, राजवत । सुपीति किम् ? हन्ति । वलीति किम् ? राजानौ, राजान ।

[ स्वादिष्वसर्वनामस्थाने । यचि भम् । पा० १।४।१७-१८ ]

**संयोगस्य पदस्य** ॥५२॥

संयोगान्तस्य पदस्य लोपो भवति । अपचन्, गोमान्, श्रेयान् । तद्वदतिदेशात् पुंवत् ।

[ संयोगान्तस्य लोप । पा० ८।२।२३, संयोगस्य । स० ७।३।६७ ]

**रात् सः** ॥५३॥ [स० ७।३।६८]

रेफात् परस्य सकारस्यैव लोपो भवति। कर्तु, हर्तु, धातु। स इति किम्? ऊर्क्, ऊर्भ्याम्।

**[रात् सस्य। पा० ८।२।२४]**

**धि सङि** ॥५४॥ [स० ७।३।६९]

धकारादौ सङि[1] परत सकारस्य लोपो भवति। चकाधि। सङीति किम्? पयोधि।

**[धि च। पा० ८।२।२५, सङि लत्वसलोपसयोगादिलोपकुत्वदीर्घत्वानि। पा० ८।२।२२।१। [1]सन [च० १।१।१०] सकारादारभ्या महीङो [च० १।४।१] ङकारेण प्रत्याहार।]**

**झलो झलि** ॥५५॥ [पा० ८।२।२६, स० ७।३।७१]

झल परस्य सकारस्य झलादौ सङि परतो लोपो भवति। अभित्त, अबुद्ध। झल इति किम्? आस्ताम्। झलीति किम्? अभित्स्वहि। सङीत्येव। दृषत्स्थानम्।

**ह्रस्वात्** ॥५६॥

ह्रस्वात् परस्य सकारस्य झलि परतो लोपो भवति। अकृत, अकृथा। झलीत्येव। अकृषाताम्। सङीत्येव। द्विष्टराम्। अस्तेर् [५।४।७९] इति लिङ्गान्न वानो। कथम् अलविष्ट? इट ईटि [५७] इति लिङ्गान्न भवति।

**[ह्रस्वादङ्गात्। पा० ८।२।२७, ह्रस्वाद्धातो। स० ७।३।७२]**

**इट ईटि** ॥५७॥ [पा० ८।२।२८, स० ७।३।७०]

इट परस्य सकारस्येटि परतो लोपो भवति। अलावीत्। इट इति किम्? अयाक्षीत्। ईटीति किम्? अलविष्ट।

**स्कोः संयोगाद्योरन्ते च** ॥५८॥ [पा० ८।२।२९, स० ७।३।७३]

मकारककाराभ्यां संयोगाद्योर्झलि परत पदान्ते च लोपो भवति। लग्न, तष्ट। मक्, तट्। तद्वदतिदेशात् मग्भ्याम्। सडीत्येव। शक्रुस्याता।

**चोः कुः** ॥५९॥ [पा० ८।२।३०, म० ७।३।७४]

चवर्गस्य झलि पदान्ते च कवर्गो भवति। पक्ता, पक्, पग्भ्याम्। मर्डीत्येव। क्रुञ्च।

**क्विनः** ॥६०॥

क्विनन्तस्य झलि पदान्ते च कुत्व भवति। घृतस्पृक्, तादृक्, तादृग्भ्याम्।

[ क्विन्प्रत्ययस्य कु। पा० ८।२।६२, क्विन्दृशो कु। स० ७।३।१११ ]

**नग् वा** ॥६१॥

नशे क्विबन्तस्य कुत्व वा निपात्यते। जीवनक्, जीवनट्। जीवनग्भ्याम्, जीवनड्भ्याम्।

[ नशेर्वा। पा० ८।२।६३, स० ७।३।११२ ]

**हो ढः** ॥६२॥ [पा० ८।२।३१, स० ७।३।७५]

झलि पदान्ते च हकारस्य ढकारो भवति। सोढा, वोढा, मधुलिट्, मधुलिड्भ्याम्।

**दादेर्धातोर्घः** ॥६३॥ [पा० ८।२।३२, म० ७।३।७६]

दकारादेर्धातोर्हकारस्य झलि पदान्ते च घकारो भवति। दग्धा, धक्, धग्भ्याम्। दादेरिति किम्? सोढा, वोढा। धातोरिति किम्? दामलिट्।

**वा द्रुहमुहस्नुहस्निहाम्** ॥६४॥ [पा०८।२।३३, स०७।३।७७]

द्रुहादीना हकारस्य झलि पदान्ते च घकारो वा भवति। द्रोग्धा, द्रोढा; मित्रध्रुक्, मित्रध्रुट्, मित्रध्रुग्भ्याम्, मित्रध्रुड्भ्याम्। उन्मोग्धा,

उन्मोढा उन्मुक्, उन्मुट्, उन्मुग्भ्याम्, उन्मुड्भ्याम्। उत्स्नोग्धा, उत्स्नोढा, उत्स्नुक्, उत्स्नुट् उत्स्नुग्भ्याम्, उत्स्नुड्भ्याम्। चेलक्नोग्धा, चेलक्नोढा; चेलक्निक्, चेलक्निट्, चेलक्निग्भ्याम्, चेलक्निड्भ्याम्।

**नहाहो धः** ॥६५॥

नह आहश्च झलि पदान्ते च धो भवति। नद्धा, उपानत्, उपानद्भ्याम्। आत्थ।

**[ नहो ध । आहस्थ । पा० ८।२।३४-३५, नहाहोर्धतौ। स० ७।३।७८ ]**

**व्रश्चभ्रस्जसृजमृजयजराजभ्राजशां षः** ॥६६॥

व्रश्चादीनां झलि पदान्ते च षत्वं भवति। व्रष्टा, मूलवृट्। भ्रष्टा, धानाभृट्। स्रष्टा, रज्जुसृट्। मार्ष्टा, कंसपरिमृट्। यष्टा, उपयट्। विराट्। विभ्राट्। वेष्टा, विट्। प्रष्टा, प्राट्, पृट्।

**[ ०भ्राजच्छशां ष । पा० ८।२।३६, स० ७।३।७९ ]**

**झलो जश्** ॥६७॥

झलो झलि पदान्ते च जश् भवति। लब्धा, त्रिष्टुबत्र। खरि चरं वक्ष्यति [ ६।४।१४८ ], झयो हस्य पूर्वसवर्णम् [ ६।४।१५६ ]।

**[ झला जशोऽन्ते। पा० ८।२।३९, स० ७।३।११० ]**

**तसोस्तसौ मत्वर्थे** ॥६८॥

नकारसकारयोर्मत्वर्थीये परतस्तकारसकारादेशौ भवतः। जश्त्वरुत्वबाधनार्थं वचनम्। विद्युत्वान् बलाहकः। यशस्वी।

**[ तसौ मत्वर्थे। पा० १।४।१९ ]**

**झष एकाचः स्ध्वोर्बशो भष्** ॥६९॥ [स० ७।३।८०]

झषन्तस्यैकाचः सकारे ध्वे च पदान्ते च परतो बशो भष् भवति। भोत्स्यते, अभुद्ध्वम्, भुत्। झष इति किम्? दास्यति। एकाच इति

किम् ? दामलिट । स्ध्वोरिति किम् ? बोद्धा । वश इति किम् ? क्रोत्स्यति, क्रुत् ।

[ एकाचो बशो भष् झषन्तस्य स्ध्वो । पा० ८।२।३७ ]

**धस्तथोश्च** ॥७०॥

दधातेस्तकारथकारयो स्ध्वोश्च परतो बशो भष् भवति । धत्त, धत्थ, धत्से, धद्ध्वे । तथोश्चेति किम् ? अभिदध्महे । झष इत्येव । दधाति, दधासि ।

[ दधस्तथोश्च । पा० ८।२।३८, धाञस्तथोश्च । स० ७।३।८१ ]

**तथोर्धोऽधः** ॥७१॥

झषन्तस्यादधातेरनयोस्तकारथकारयोर्धकारो भवति । अलब्ध, अलब्धा । अध इति किम् ? धत्त, धत्थ । अस्मादेव वचनान् न पूर्वं जश्त्वम् ।

[ झषस्तथोर्धोऽध । पा० ८।२।४०, स० ७।३।८२ ]

**सि षढोः कः** ॥७२॥

सकारादौ परत षकारढकारयो ककारो भवति । पिष्ट । पेक्ष्यति । वह । वक्ष्यति ।

[ षढो क सि । पा० ८।२।४१, स० ७।३।८३ ]

**मो नो म्वोश्च** ॥७३॥ [स० ७।३।११३]

मकारान्तस्य धातोर्झलि पदान्ते च मकारवकारयोश्च परतो नकारो भवति । शान्त, शान्तवान्, प्रशान्, जङ्गन्मि, जगन्वान् । धातोरित्येव । अग्निम् ।

[ मो नो धातो । म्वोश्च । पा० ८।२।६४-६५ ]

**रदात्तवतोर्दश्च** ॥७४॥

रेफदकाराभ्या परयो क्तक्तवत्वोरादेर्नकारो भवति दश्च, पूर्वस्य

श्रुतत्वात् । पूर्ण , पूर्णवान् । भिन्न , भिन्नवान् । भिन्नवद्भ्याम् इति परस्या-श्रुतत्वान् न भविष्यति । रदादिति किम् ? कृतम् , कृतवान् । ततवतोरिति किम् ? भेत्ता । झलीत्येव । मुदितम् । कथ कार्त्ति ? बहिरङ्गत्वादसिद्धो रेफ ।

[ रदाभ्या निष्ठातो न पूर्वस्य च द । पा० ८।२।४२, रदाभ्या निष्ठातो दश्च न । स० ७।३।८४। इह कृतस्यापत्य कार्त्तिरिति वृद्धेर्बहिरङ्गलक्षणाया असिद्धत्वान्नत्वे कर्तव्ये रेफस्यासिद्धत्वम् । काशिका । ]

**यण्संयोगादातः** ॥७५॥ [०देरात । स० ७।३।८५]

यण्सयोगात्परो य आकारस्तदन्तात्परयोस्ततवतोर्नकारो भवति । ग्लान , ग्लानवान् । म्लान , म्लानवान् । यणिति किम् ? आम्नात । संयोगादिति किम् ? यात । आत इति किम् ? च्युत । धातोरित्येव । निर्यात ।

[ संयोगादेरातो धातोर्यण्वत । पा० ८।२।४३ ]

**ॠल्वादिभ्यः क्तिनश्च** ॥७६॥ [स० ७।३।८६]

ऋकारान्ताल्ल्वादिभ्यश्च परयोस्ततवतो क्तिनश्च नकारो भवति । कीर्ण , कीर्णवान् । लून , लूनवान् । लीन , लीनवान् । कीर्णि , लूनि , लीनि ।

[ ल्वादिभ्य । पा० ८।२।४४, ॠकारल्वादिभ्य क्तिन्निष्ठावत् । वा० १ ]

**पूञो नाशे** ॥७७॥ [स० ७।३।८७]

नाशे वर्तमानात्पूञ परयोस्ततवतोर्नो भवति । पूना यवा । नाश इति किम् ? पूत , पूतवान् ।

[ पूञो विनाशे । पा० ८।२।४४।३ ]

**दुग्वोरू च** ॥७८॥ [स० ७।३।८८]

दु गु इत्येतयोरनन्तरयोस्ततवतोर्नो भवति, दुग्वोरुकारस्य च ऊकार । आदून , आदूनवान् । विगून , विगूनवान् ।

[ दुग्वोर्दीर्घश्च । पा० ८।२।४४।२ ]

**सेर्ग्रासे** ॥७९॥

सिनोतेः परयोस्ततवतोर्ग्रासेऽभिधेये नो भवति। सिनो ग्रासः। ग्रास इति किम्? सिता पाशेन सूकरी।

[ **सिनोतेर्ग्रासकर्मकर्तृकस्य। पा० ८।२।४४।४, सेर्ग्रासे कर्मकर्तरि। स० ७।३।८९** ]

**ओदितः** ॥८०॥ [स० ७।३।९०]

ओदितः परयोस्ततवतोर्नो भवति। लग्नः, लग्नवान्। स्वादय ओदितः [ धातु० ४।९१ ] इति वचनात्। प्रसूनः, प्रसूनवान्. डीनः, डीनवान्। ओदित्त्वादेव लिङ्गादिडभावः।

[ **ओदितश्च। पा० ८।२।४५, सूयत्यादिभ्यो नवभ्यः। स० ७।३।९१** ]

**क्षेः क्षी च** ॥८१॥ [स० ७।३।९२]

क्षियः परयोस्ततवतोर्नो भवति, क्षीभावश्च। क्षीणः, क्षीणवान्।

[ **क्षियो दीर्घात्। पा० ८।२।४६** ]

**वा भावाक्रोशदैन्येषु** ॥८२॥ [स० ७।३।९३]

भावादिष्वर्थेषु क्षियः परयोस्ततवतोर्नो वा भवति, क्षीभावश्च। क्षीणमनेन, क्षितमनेन। क्षीणायुः, क्षितायुः। क्षीणकस्तपस्वी, क्षितकस्तपस्वी।

[ **निष्ठायामण्यदर्थे। वाक्रोशदैन्ययोः। पा० ६।४।६०-६१, क्षियो दीर्घात्। पा० ८।२।४६** ]

**श्योऽस्पर्शे** ॥८३॥ [पा० ८।२।४७, स० ७।३।९४]

श्यायतेः स्पर्शादन्यत्र वर्तमानात्परयोस्ततवतोर्नो भवति। शीनं घृतम्। अस्पर्श इति किम्? शीतो वायुः।

**अञ्चोऽनवधौ** ॥८४॥

अवधिरहितेऽर्थे वर्तमानादञ्चतेः परयोस्ततवतोर्नो भवति। समक्नौ शकुने पक्षौ। अनवधाविति किम्? उदक्तमुदकं कूपात्।

[ **अञ्चोऽनपादाने। पा० ८।२।४८, स० ७।३।९५** ]

**अद्यूते दिवः ॥८५॥**

दिव परयोस्तनवनोर्द्यूतादन्यत्र नो भवति। आद्यून, आद्यूनवान्। अद्यूत इति किम्? द्यूत वर्तते।

[ दिवोऽविजिगीषायाम्। पा० ८।२।४९, स० ७।३।९६ ]

**अवाते निर्वाणः ॥८६॥** [स० ७।३।९७]

वातात् अन्यत्र निर्वाण इति निपात्यते। निर्वाणो भिक्षु। निर्वाण प्रदीपो वातेन। अवात इति किम्? निर्वातो वात।

[ निर्वाणोऽवाते। पा० ८।२।५० ]

**घ्रात्रार्तिन्हीनुदोन्दविदो वा ॥८७॥**

घ्रादिभ्य परयोस्तवतोर्नो भवति वा। घ्राण, घ्रात। त्राण, त्रात। व्यवस्थितविभाषया देवत्रात। ऋण शोध्यम्, ऋतं सत्यम्। न्हीण, न्हीत। नुन्न, नुत्त। समुन्न, समुत्त। विन्न, वित्त। उन्दिसाहचर्या-द्विन्दतेर्ग्रहणम्, विद्यतेर्विन्न।

[ नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्। ऋणमाधमर्ण्ये। पा०८।२।५६,६०। देवत्रातो गलो ग्राह इतियोगे च सद्विधि। मिथस्ते न विभाष्यन्ते गवाक्ष संशितव्रत ॥ भाष्यम् ३।३।१५६, ७।४।४२। वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते। वित्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दते ॥ भाष्यम्। ८।२।५८। न्हीघ्रात्रोन्दनुदविनत्तिभ्यो वा। स० ७।३।९९ ]

**प्रस्त्यो मः ॥८८॥** [स० ७।३।१००]

प्रपूर्वात् स्त्यायते परयोस्तनवतोर्मो वा भवति। प्रस्तीम, प्रस्ती-मवान्। प्रस्तीत, प्रस्तीतवान्।

[ प्रस्त्योऽन्यतरस्याम्। पा० ८।२।५४ ]

**क्षः ॥८९॥**

क्षायतेस्तनवतोर्मो भवति। क्षाम, क्षामवान्। योगविभागो नित्यार्थ।

[ क्षायो म। पा० ८।२।५३। क्षायो नित्यम्। स० ७।३।१०१ ]

**शुषः कः** ॥९०॥ [पा० ८।२।५१, स० ७।३।१०२]

शुषे परयोस्तनवतो को भवति। शुष्क , शुष्कवान्।

**पचो वः** ॥९१॥ [पा० ८।२।५२, स० ७।३।१०३]

पचे परयोस्तनवतोर्वो भवति। पक्व , पक्ववान्।

**ह्लादो ह्लद्** ॥९२॥

ह्लादेस्तनवतो परयोर्ह्लदादेशो भवति। प्रह्लन्न , प्रह्लन्नवान्। ण्यन्तस्य प्रह्लादित ।

[ ९२-९३। ह्लादो निष्ठायाम्। पा० ६।४।९५। ह्लाद इति योगविभाग· क्रियते क्तिन्यपि यथा स्यात्। मुद्रिता काशिका। ह्लादे ह्लत् क्तिन्निष्ठयो। स० ७।१।८३ ]

**क्तिनि** ॥९३॥

क्तिनि परतो ह्लादो ह्लदादेशो भवति। प्रह्लत्ति ।

**फुल्लक्षीबकृशोल्लाघाः** ॥९४॥

एते शब्दा निपात्यन्ते। फुल्ल , क्षीब·, कृश , उल्लाघ । प्रादि-रहिताना निपातनाद् इह न भवति। प्रफुल्ता [1]। कथम् उत्फुल्ल , संफुल्ल , परिकृश इति ? प्रादिसमासाद् भविष्यति।

[ अनुपसर्गात्फुल्लक्षीबकृशोल्लाघा । पा० ८।२।५५, फलेर्लत्व उत्पूर्वस्योप-सख्यानम्। पा० ८।२।५५।१। अत्यल्पमिदमुच्यत उत्पूर्वादिति। उत्फुल्लसंफुल्ल-योरिति वक्तव्यम्। भाष्यम्। परिगत कृश· परिकृश । काशिका। फलेरनु-पसर्गाल्ल । समुद्भ्या च। क्षीबकृशपरिकृशोल्लाघा । स० ७।३।१०४-१०६। [1]Ms प्रफुल्ला ]

**न ध्याख्यापृमूर्छिमदाम्** ॥९५॥ [पा० ८।४।५७]

ध्यादिभ्य परयोस्ततवतोर्यदुक्त तन्न भवति। ध्यातम्, ध्यातवान्। ख्यातम्, ख्यातवान्। पूर्त , पूर्तवान्। मूर्त , मूर्तवान्। मत्त·, मत्तवान्।

[ न पृमूर्छिमदिख्याध्यादेवत्राभ्य । स० ७।३।१०७ ]

**वित्तः प्रतीतभोगयोः** ॥९६॥

विन्दते क्तान्तस्य प्रतीते भोगे चार्थे नत्वाभावो निपात्यते। वित्त, प्रतीत । वित्तम्, वनम्। विन्नमन्यत्।

[वित्तो भोगप्रत्यययो । पा० ८।२।५८, वित्तो वनप्रतीतयो । स० ७।३।१०८]

**भित्तं शकले** ॥९७॥ [०कलम्। पा० ८।२।५९, स० ७।३।१०९]

भिदे क्तान्तस्य शकलेऽभिधेये नत्वाभावो निपात्यते। भित्तम्। शकलमित्यर्थ। शकल इति किम्? भिन्नम्। कथ भित्तभिन्नम्[1] इति? शकलमित्यर्थ ।

[[1]Should we read कथ भिन्न भित्तमिति with Hc iv 2 81 Vr? The Nyāsa explains भिन्नं द्विधाकृतमिति विशेषणशब्दोऽत्र भिन्नशब्द .]

**ससजुषो रुः** ॥९८॥ [पा० ८।२।६६, स० ७।३।११४]

सकारान्तस्य पदस्य सपूर्वस्य च[1] जुषो रुर्भवति। अग्नि । सजू । तद्वदतिदेशात् पयोभ्याम्, सजूर्भ्याम्।

[[1]Ms om ]

**अह्नः** ॥९९॥ [स० ७।३।११५]

अहनित्येतस्य पदस्य रुर्भवति। अह , अहोभ्याम्, अह.सु ।

[अहन्। पा० ८।२।६८]

**लुक्यरि रः** ॥१००॥

अरेफादौ पदे परतोऽह्नो रो भवति। अहर्ददाति, अहर्भुङ्क्ते। अरीति किम्? अहोरूपम्। अहोरात्रम्। कृत्स्नमहो रथन्तर साम गायति। सर्वमहो रमस्व। यातः शनै सर्वमहो रथेन[1]। लुकीति किम्? दीर्घाहा निदाघ ।

[ रोऽसुपि । पा० ८।२।६९, लुक्यरेफे र । स० ७।३।११६ । [1]चान्द्रे तु रेफमात्रेऽसौ निषेध । तथा च यात शनै कृत्स्नमहो रथेनेति प्रत्युदाहृत तै । कातन्त्रपरिशिष्टम् ११८० । ]

**प्रचेतसो राजनि वा** ॥१०१॥ [स० ७।३।११७]

प्रचेतसो राजनि परे रेफो वा भवति । प्रचेतो राजन्, प्रचेता राजन् ।

[ छन्दसि भाषाया च प्रचेतसो राजन्युपसख्यानम् । पा० ८।२।७०।१ ]

**प्रत्यादिष्वहरादीनाम्** ॥१०२॥

अहरादीना प्रत्यादिषु परतो रेफो वा भवति । अहर्पति , अह पति , अहन्पति । गीर्पति , गीष्पति , गी पति । धूर्पति , धूष्पति , धू पति ।

[ अहरादीना पत्यादिषूपसंख्यान कर्तव्यम् । अहर्पति अह पति । अहर्पुत्र अह पुत्र । गीर्पति गी पति । पा० ८।२।७० भाष्यम् । अहर्गिरादीना पत्यादिषु । स० ७।३।११८ ]

**दोऽनडुहः** ॥१०३॥

अनडुह पदस्य दकारो भवति । बह्वनडुत् कुलम् । अनडुद्भ्याम् । कथम् अनड्वान् ? [ ५।४।२६ ] [1]नुम्विधानसामर्थ्यान्न भविष्यति ।

[ १०३-१०४ । वसुस्रंसुध्वस्वनडुहा द. । पा० ८।२।७२, स्रन्सुध्वन्स्वनडुहा द । वसो सः । स० ७।३।१२०-१२१ । [1]'पुम्विधान° Ms ]

**वसुस्रंसुध्वंसां सः** ॥१०४॥

वस्वन्तस्य पदस्य स्रसुध्वंसोश्च सकारस्य दकारो भवति । विद्वत्कुलम्, विद्वद्भ्याम् । उखास्रत्, उखास्रद्भ्याम् । पर्णध्वत्, पर्णध्वद्भ्याम् । स इति किम् ? पपिवान् ।

**तिपि** ॥१०५॥ [स० ७।२।१२२]

तिपि परत सकारान्तस्य पदस्य दकारो भवति । अन्वशात् । स इत्येव । अन्वहन् । पदस्येत्येव । शास्ति ।

[ तिप्यनस्ते । पा० ८।२।७३ ]

**सिपि रुर्वा** ॥१०६॥

सिपि परत सकारान्तस्य पदस्य रुर्भवति दकारो वा। अचकास्त्वम्, अचकात् त्वम्। सिपीति किम्? अचकाद् भवान्।

[ सिपि धातो रुर्वा। पा० ८।२।७४, सिपि वा। स० ७।२।१२३ ]

**दः** ॥१०७॥

दकारान्तस्य पदस्य सिपि परतो रुर्भवति वा। अभिनस्त्वम्, अभिनत्त्वम्।

[ दश्च। पा० ८।२।७५, दो रु। स० ७।३।१२४ ]

**धातोर्वोरनचीको दीर्घः** ॥१०८॥ [स० ७।३।१२५]

धातोर्यौ रेफवकारावनच्परौ तयो परभूतयोरिको दीर्घो भवति। गीः, धूः, पूः, आस्तीर्ण, कीर्तयति, दीव्यति, सीव्यति, प्रतिदीव्ना। धातोरिति किम्? सर्पि, वायु, कुर्कुर, कुर्कुरीयति, चतुर्म्य, चतुर्यति। पठिता एव हि प्रकृतयो धातव इति रूढि। वोरिति किम्? गोधुक्, युक्ति। अनचीति किम्? विकिर, गिरति। इक इति किम्? चर्यते।

[ र्वोरुपधाया दीर्घ इक। हलि च। पा० ८।२।७६-७७ ]

**न सुपि यचि** ॥१०९॥

यकारादावजादौ च सुपि परतो दीर्घो न भवति। धुर्य, दिव्य, पुर्याम्, गिर्यो, गिरौ, गिर। सुपीति किम्? जीर्यति, दीव्यति। यचीति किम्? गीर्भ्याम्, धूर्भ्याम्।

[ न भकुर्छुराम्। पा० ८।२।७९। यि तद्धिते। स० ७।३।१२७ ]

**द्विर्त्वे** ॥११०॥

द्विर्वचने सति दीर्घो न भवति। रिर्यतु, रिर्यु। संविव्यतु, संविव्यु।

[ उपधादीर्घत्वेऽभ्यासजिव्रिचतुर्णां प्रतिषेध। उणादिप्रतिषेधश्च। पा० ८।२।७८। १-२। नाभ्यासकुर्छुराम्। स० ७।३।१२६ ]

**कुरुच्छुरोः ॥१११॥**

कुरु छुर इत्येनयोर्दीर्घो न भवति। कुर्यात्, कुर्व, कुर्म । छुर्यते, छुर्यात्, छुर्यासु [1]। उकारनिर्देश किम्? कुरे कूर्यात्। कुर्दादीना स्फूर्ज [धातु० १।७४] इति लिङ्गान्न भवति।

[न भकुर्छुराम्। पा० ८।२।७९, नाभ्यासकुर्छुराम्। स० ७।३।१२६]

**अदसोऽत्वे दादु दो मः ॥११२॥** [स० ७।३।१२८]

अदसस्त्यदाद्यत्वे सति दात्परस्योत्व भवति, दस्य च मत्वम्। अमुम्, अमुना। अत्व इति किम्? अदोऽत्र, अदस्यति।

[अदसोऽसेर्दादु दो म। पा० ८।२।८०]

**अद्रौ वा ॥११३॥** [स० ७।३।१२९]

अदसोऽद्र्यागमे सति दात् परस्योत्व वा भवति, दस्य च मत्वम्। अदमुयङ्, अमुमुयङ्, अमुद्र्यङ्, अदद्र्यङ्।

[अदसोऽद्रे पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत्।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते॥ ८।२।८० भाष्यम्।]

**एत ईत् ॥११४॥**

अदसो दात्परस्यैकारस्येकारो भवति, दश्च मत्वम्। अमीभ्य, अमीभि। दाद् इत्येव। अमुकेऽत्र। अमुयोरित्ययादेशे कर्तव्ये ईत्त्वलक्षणस्यासिद्धत्वान्न भविष्यति।

[एत ईद् बहुवचने। पा० ८।२।८१, स० ७।३।१३०]

**वाक्याचां प्लुतोऽन्त्यः ॥११५॥**

वाक्यस्य येऽचस्तेषामन्त्य प्लुतो भवतीत्येतदधिकृतं वेदितव्यम्।

[वाक्यस्य टे प्लुत उदात्त। पा० ८।२।८२, वाक्यटे प्लुत। स० ७।३।१३१]

**दूराह्वाने ॥११६॥**

दूराह्वाने वाक्याचामन्त्य प्लुतो भवति। आगच्छ भो देवदत्त३।

दूराह्वान इति किम् ? आगच्छ भो देवदत्त। वाक्याचाम् इत्येव। देवदत्तागच्छ।

[दूराद्धूते च। पा० ८।२।८४, दूराद्धूते। स० ७।३।१३२। As हूते is rather an unusual word, Candra substitutes आह्वान for it He might have used हूतौ, though even हूति is not so frequently used as आह्वान]

**अनन्त्येऽपि हेहै ॥११७॥**

अनन्त्येऽन्त्येऽपि वाक्यस्य हेहैशब्दौ दूराह्वाने प्लुतौ भवत। हे३ देवदत्त! है३ देवदत्त! देवदत्त हे३! देवदत्त है३! दूराह्वान इत्येव। हे देवदत्त। है देवदत्त।

[हैहेप्रयोगे हैहयो। पा० ८।२।८५, स० ७।३।१३३]

**गुर्वेकैकमनृद्वा ॥११८॥**

गुर्वक्षरमेकैकमृकारवर्जितं दूराह्वाने प्लुत वा भवति। देवद३त्त! दे३वदत्त! देवदत्त३! अनृद् इति किम् ? कृष्णमि३त्र! दूराह्वान इत्येव। हे देवदत्त।

[गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्। पा० ८।२।८६, गुरोरेकैकस्यानृतो वा। स० ७।३।१३४]

**अस्त्रीशूद्रप्रत्यभिवादे ॥११९॥**

स्त्रीशूद्रवर्जितस्य प्रत्यभिवादे वाक्याचाम् अन्त्य प्लुतो वा भवति। अभिवादये देवदत्तोऽहं भो, आयुष्मानेधि देवदत्त३! देवदत्त! स्त्रीशूद्रपर्युदास किम् ? अभिवादये गार्ग्यहं भो, आयुष्मती भव गार्गि! अभिवादये तुषजकोऽहं भो, कुशल्यसि, तुषजक ? वाक्याचाम् इत्येव। देवदत्त, कुशल्यसि ? असूयके कथम् ? असूयकस्त्वमसि, जाल्म, न त्वं प्रत्यभिवादमर्हसि [महाभाष्यम्] इति तत्र प्रत्यभिवादाभावान्न भविष्यति। भोराजन्यविशाम् अप्यनेनैव सिद्धम्। आयुष्मानेधि देवदत्त भो३! देवदत्त भो!

आयुष्मानेधि, इन्द्रशर्म३न् ! इन्द्रशर्मन् ! आयुष्मानेधि, इन्द्रपालित३ ! इन्द्रपालित !

[ प्रत्यभिवादेऽशूद्रे। पा० ८।२।८३। अशूद्रस्त्र्यसूयकेषु। भोराजन्यविशा वा। वा० १-२। अस्त्रीशूद्रप्रत्यभिवादे नामगोत्रयो। भोराजन्यविशा वा। स० ७।३।१३५-१३६ ]

**प्रत्युक्तौ हिः ॥१२०॥**

पृष्टप्रतिवचने हिशब्द प्लुतो वा भवति। अकार्षीर्हि कटम्, देवदत्त? अकार्षं हि३, अकार्षं हि। प्रत्युक्ताविति किम्? अकार्षीर्हि कटम्, देवदत्त? हिरिति किम्? माणवक, कटम् अकार्षी? अकार्षं ननु।

[ विभाषा पृष्टप्रतिवचने हे। पा० ८।२।९३, पृष्टप्रतिवचने हे। स० ७।३।१३७ ]

**उपालम्भे ॥१२१॥**

सप्रतिक्षेपोऽनुयोग उपालम्भ, तत्र वाक्याचामन्त्य प्लुतो वा भवति। अद्य श्राद्धम् इत्यात्थ३। अद्य श्राद्धम् इत्यात्थ[1]।

[ निगृह्यानुयोगे च। पा० ८।२।९४, निगृह्यानुयोगे। स० ७।३।१३८।
[1]अद्य श्राद्धेतिवादी युक्त्या स्वमतात्प्रच्याव्यैवमुपालभ्यते। हेमचन्द्र ।]

**अङ्गयुक्तं तिङाकाङ्क्षम् ॥१२२॥** [पा० ८।२।९६]

अङ्गशब्देन युक्त तिङन्तमन्यतिङाकाङ्क्ष प्लुत वा भवति। अङ्ग कूज३, अङ्ग कूज, इदानीं ज्ञास्यसि जाल्म। आकाङ्क्षमिति किम्? अङ्ग कूज।

[ भर्त्सनेऽङ्गयुक्त तिङाकाङ्क्षम्। स० ७।३।१३९ ]

**भर्त्सने द्विरुक्तं पर्यायेण ॥१२३॥**

भर्त्सने कृत द्विर्वचन पर्यायेण प्लुतं वा भवति। चौर चौर३, चौर३ चौर, घातयिष्यामि त्वाम्।

[ आम्रेडितं भर्त्सने। पा० ८।२।९५, भर्त्सने पर्यायेण। वा० १। द्विस्त्रिरुक्त पर्यायेण। स० ७।३।१४० ]

**असूयासंमत्योः पूर्वम्** ॥१२४॥

असूयाया समतौ च द्विरुक्तस्य पूर्वं प्लुतं वा भवति। माणवक३ माणवक, इदानीं ज्ञास्यसि जाल्म। माणवक माणवक। अभिरूपक३ अभिरूपक, शोभन· खल्वसि। अभिरूपक अभिरूपक।

[ स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनभर्त्सनेषु। पा० ८।२।१०३, असूयादिषु वावचनम्। वा०१। सम्मत्यसूयाकोपकुत्सनेषु पूर्वम्। स०७।३।१४१ ]

**विचारे** ॥१२५॥ [स० ७।३।१४२]

विचारविषये पूर्वं प्लुतं वा भवति। अहिर्नु३ रज्जुर्नु ? अहिर्नु रज्जुर्नु ?

[ विचार्यमाणानाम्। पूर्वं तु भाषायाम्। पा० ८।२।९७-९८ ]

**प्रतिश्रुतौ** ॥१२६॥ [स० ७।३।१४३]

प्रतिश्रवणे वाक्याचामन्त्य प्लुतो वा भवति। देवदत्त! किं मार्ष३ ? कि मार्ष[1] ?

[ प्रतिश्रवणे च। पा० ८।२।९९। [1]मार्षेति श्रवणाभिमुख्यद्योतको निपातः। हेमचन्द्र ]

**पूजिते** ॥१२७॥

अभिपूजितेऽचामन्त्य प्लुतो वा भवति। शोभन· खल्वसि देवदत्त३! देवदत्त!

[ अनुदात्तं प्रश्नान्ताभिपूजितयो। पा० ८।२।१००, अभिपूजिते। स० ७।३।१४४ ]

**चिदित्युपमार्थे** ॥१२८॥

चिच्छब्द उपमार्थे प्रयुज्यमाने वाक्याचाम् अन्त्य प्लुतो वा भवति। अग्निश्चिद् भाया३त्! अग्निश्चिद् भायात्। उपमार्थ इति किम्? कर्णवेष्टकाश्चित्कारय[1]।

[ चिदित्युपमार्थे प्रयुज्यमाने। पा० ८।२।१०१, स० ७।३।१४५। [1]कर्णवेष्टकानेवेत्यर्थं। हेमचन्द्र। ७।४।९४ ]

**निन्दाशीःप्रैष्येषु तिङाकाङ्क्षम् ॥१२९॥**

निन्दायामाशिषि प्रैष्ये च तिङन्तमन्याकाङ्क्षं प्लुतं वा भवति। स्वय[1] रथेन याति३, स्वय रथेन याति, उपाध्याय पदातिं गमयति। पुत्रांश्च लप्सीष्ठा३, लप्सीष्ठा, धनं च तात। कटं कुरु३, कटं कुरु, ग्रामं गच्छ।

[क्षियाशीःप्रैष्येषु तिङाकाङ्क्षम्। पा० ८।२।१०४, स० ७।३।१४६। [1]स्वयं ह्र। हेमचन्द्र।]

**अनन्त्यस्यापि प्रश्नाख्यानयोः ॥१३०॥** [पा० ८।२।१०५, स० ७।३।१४७]

प्रश्न आख्याने चानन्त्यस्यापि पदस्याचामन्त्य प्लुतो वा भवति। अगम३ पूर्वा३न् ग्रामा३न् देवदत्त३? अगम पूर्वान् ग्रामान् देवदत्त? अगम३ पूर्वा३न् ग्रामा३न्[1] भो३। अगमं पूर्वान् ग्रामान्[2] भो। प्लुतावैच इदुताविति न वक्तव्यम्। अन्ते स्थितयोस्तयोरेव तत्कालापेक्षता, अन्यथा हि नैतावुच्चारितौ स्याताम्। ऐ३तिकायन। औ३पगव।

[प्लुतावैच इदुतौ। पा० ८।२।१०६। [1]Ms पूर्वा३द् ग्रामा३द् [2]Ms. पूर्वाद् ग्रामाद्]

**एचः प्रश्नान्तपूजाविचारप्रत्यभिवादेष्वादिदुत्परः ॥१३१॥**

प्रश्नान्ते पूजाया विचारे प्रत्यभिवादे च एजन्तस्य पदस्याकार. प्लुत इदुत्परो भवति[1]। अगम३ पूर्वा३न् ग्रामा३न् अग्निभूता३इ? पटा३उ? पूजायाम्। ऋद्धोऽसि माणवक अग्निभूता३इ! पटा३उ! विचारे। होतव्य दीक्षितस्य गृहा३इ? पटा३उ? प्रत्यभिवादे। आयुष्मान् एध्यग्निभूता३इ! पटा३उ! प्रश्नान्तादिष्विति किम्? आगच्छाग्निभूते३! दस्यो दस्यो३, घातयिष्यामि त्वाम्।

[१३१-१३२। एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ। पा० ८।२।१०७। एच प्लुतविकारे पदान्तग्रहणम्। वा० १। प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति वक्तव्यम्। भाष्यम्। एचोऽप्रगृह्यस्य प्रश्नान्ताभि-

पूजितं विचारप्रत्यभिवादेष्वादिदुत्पर पदान्ते। स० ७।३।१४९। [1]Ms इदुत्परौ भवत ]

**नैतो द्वित्वे** ॥१३२॥

द्वित्वे वर्तमानस्यैतो न भवत्याकार. प्लुत। कच्चित् कुशल भवत्योः कन्ये३? एत इति किम्? आयुष्मन्तौ भूयास्ता कुमारका३उ।

**तयोर्य्वावचि** ॥१३३॥

तयोरिदुतोरचि य्वौ भवत। अग्ना३यिन्द्रम्। पटा३वुदकम्। अग्ना३यत्र, पटा३वत्र। दीर्घह्रस्वत्वबाधनार्थ वचनम्।

[ तयोर्य्वावचि सहितायाम्। पा० ८।२।१०८, स० ७।३।१५० ]

इति चान्द्रे व्याकरणे षष्ठास्याध्यायस्य तृतीय· पाद समाप्त।

**समः सुटि सः** ॥ १ ॥ [स० ७।४।१]

सम सुटि परत सकारो भवति। सँस्स्कर्ता, सस्स्कर्ता, संस्कर्ता।

[ सम सुटि। मतुवसो रु सम्बुद्धौ छन्दसि। पा० ८।३।१, खरवसानयो- र्विसर्जनीय। शर्परे विसर्जनीय। पा० ८।३।१५,३५। संपुंकाना सत्वम्। ८।३।१२।१ ]

**पुमः खय्यमि** ॥ २ ॥

पुमित्येतस्य मकारस्य खय्यम्परे परत· सकारो भवति। पुँस्कामा, पुंस्कामा। पुस्पुँत्र, पुस्पुत्र। खयीति किम्? पुदास। अमीति किम्? पुंक्षीरम्।

[ पुम खय्यम्परे। पा० ८।३।६, पुमोऽख्यागि खय्यम्परे। स० ७।४।२ ]

**नश्छव्यप्रशानः** ॥ ३ ॥ [स० ७।४।३]

नकारान्तस्य प्रशान्वर्जितस्य पदस्य छव्यम्परे परत सो भवति।

भवाँश्छादयति, भवाश्छादयति। भवाँस्तरति, भवास्तरति। छवीति किम्? भवान् करोति। अप्रशान इति किम्? प्रशाञ्चिनोति। अम्पर इत्येव। भवान् त्सरुकः।

[नश्छव्यप्रशान्। पा० ८।३।७]

[1]**कानः कानि** ॥ ४ ॥ [स० ७।४।४]

कान् इत्येतस्य नकारस्य कानि परतः सकारो भवति। कँस्कान्, कास्कान्।

[कानाम्रेडिते। पा० ८।३।१२। [1]Ms has कान् कानि but SK. shows that the correct reading, as is evident from the Vrtti, is कान कानि.]

**नॄनः पे रो वा** ॥ ५ ॥ [स० ७।४।५]

नॄन् इत्येतस्य नकारस्य पकारे परतो रो वा भवति। नॄँः पाहि, नॄंः पाहि, नॄन् पाहि। रवचनं ज्ञापकं पूर्वत्र रेफाभावस्य।

[नॄन् पे। पा० ८।३।१०। उभयथेत्यपि केचिदनुवर्तयन्ति। काशिका। नॄनः पि रीरुवा। जै० ५।४।५]

**अत्रानुनासिकः पूर्वस्य** ॥ ६ ॥ [स० ७।४।६]

अत्रातिक्रान्ते प्रकरण आदेशात्पूर्वस्यानुनासिको वा भवति। तथा चैवोदाहृतम्।

[अत्रानुनासिकः पूर्वस्य तु वा। पा० ८।३।२]

**अनुस्वारः** ॥ ७ ॥

अत्रानुस्वारः पूर्वस्यागमो वा भवति। तथा चैवोदाहृतम्।

[अनुनासिकात्परोऽनुस्वारः। पा० ८।३।४, अन्यत्रास्मात्परोऽनुस्वारः। स० ७।४।७]

**हलि मः** ॥ ८ ॥ [स० ७।४।८]

मकारस्य हलि परतोऽनुस्वारो भवति। कुण्डं हसति। कुण्डं याति।

हलीति किम्? वनम् अत्र। कुण्डम्। हलीत्यौपश्लेषिकत्वादाधारस्य पदपाठे न भवति। वनम्, याति। धनम्, तिष्ठति।

[ (हलि सर्वेषाम्।) मोऽनुस्वारः। पा० ८।३।२३ ]

**नश्चानन्त्यस्य झलि ॥ ९ ॥**

नकारस्य मकारस्य चापदान्तस्य झलि परतोऽनुस्वारो भवति। पयांसि। आचिक्रंसते। अनन्त्यस्येति किम्? भवान् भोक्ता। झलीति किम्? हन्यते गम्यते।

[ नश्चापदान्तस्य झलि। पा० ८।३।२४, स० ७।४।९ ]

**सम्राट् ॥१०॥**

राजतेः क्विपि समो मकारो निपात्यते। सम्राट्, सम्राजौ, सम्राजः, सम्राजम्।

[ मो राजि समः क्वौ। पा० ८।३।२५, राजि समो मः क्वौ। स० ७।४।१० ]

**हे मनयवलपरे ते वा ॥११॥** [स० ७।४।११]

हकारे मकारादिपरे परतो मकारस्य ते मनयवला आदेशा वा भवन्ति। किम् ह्मलयति, किं ह्मलयति। किन् ह्नुते, किं ह्नुते। किय्ँ ह्यः, किं ह्यः। किव्ँ ह्वलयति, किं ह्वलयति। किल्ँ ह्लादयति, किं ह्लादयति। ह इति किम्? किं ज्वलयति। मादिपर इति किम्? किं हसति।

[ हे मपरे वा। नपरे न। पा० ८।३।२६-२७, यवलपरे यवला वा। ८।३।२६।१ ]

**ङ्णोः कुक्टुकौ शरि ॥१२॥** [स० ७।४।१२]

ङकारान्तस्य णकारान्तस्य च पदस्य शरि परतः कुक्टुगागमौ वा भवतः। प्राङ्क् छेते, प्राङ् शेते। पूर्वान्तकरणाज् झयः पदान्ताद् [१५७] इति छत्वं भवति। प्राङ्क् षण्डे, प्राङ् षण्डे। प्राङ्क् साये, प्राङ् साये।

नाद्यन्तयो [ ९० ] इति षत्वप्रतिषेधो भवति। वण्ट् शेते, वण् शेते। वण्ट् षण्डे, वण् षण्डे। वण्ट् साये, वण् साये। न टो [ १३७ ] इति ष्टुत्वप्रतिषेधो भवति।

[ ङ्णोः कुक् टुक् शरि। पा० ८।३।२८। [1]Ms कत्व ]

**डः सो धुट्** ॥१३॥

डकारान्तात् परस्य सकारस्य धुड् वा भवति। श्वलिट्त्साये, श्वलिट् साये। परादिकरणान् न टोरिति [ १३७ ] ष्टुत्वप्रतिषेधो भवति।

[ ड सि धुट्। पा० ८।३।२९, सडः सोऽश्च्युतो धुट्। स० ७।४।१३ ]

**नः** ॥१४॥ [नश्च। पा० ८।३।३०, स० ७।४।१४]

नकारान्तात् परस्य सकारस्य धुड् वा भवति। भवान्त्साये, भवान् साये।

**शि तुक्** ॥१५॥ [पा० ८।३।३१, स० ७।४।१५]

शकारे परतो नकारान्तस्य तुग् वा भवति। भवाञ्च्छेते, भवाञ् शेते। पूर्वान्तकरण छत्वार्थम्। कुर्वञ्च्छेत इति बहिरङ्गस्य तुकोऽसिद्धत्वाद् रषाद् [ १०१ ] इति णत्व न भवति।

**मय उञोऽचि वः** ॥१६॥

मयः परस्य उञोऽचि परतो वकारो वा भवति। किम् वावपनम्, किम् उ आवपनम्। वत्वस्यासिद्धत्वाद् हलि° [ ८ ] इत्यनुस्वारो न भवति। तद् वस्य, तद् उ अस्य। मय इति किम्? गीरु उच्चरति। अचीति किम्? किमु प्रचरति।

[ मय उञो वो वा। पा० ८।३।३३, मय उञो वोऽचि। स० ७।४।१६ ]

**ङमो ह्रस्वाद् द्वे** ॥१७॥ [स० ७।४।१७]

ह्रस्वात् परे ये ङमस्तदन्तस्य पदस्याचि द्वित्व भवति। प्रत्यङ्ङास्ते। वण्णास्ते। पचन्नास्ते[1]। ङम इति किम्? दृषदास्ते। ह्रस्वा-

दिति किम्? भवानास्ते। अचीत्येव। प्रत्यङ् सिञ्चति। तदन्तविधिः किम्? दण्डिना।

[ङमो ह्रस्वादचि ङमुण्नित्यम्। पा० ८।३।३२]

**ढेऽनादौ ढलोपः** ॥१८॥

अपादादौ ढे परतो ढकारस्य लोपो भवति। लीढम्, गूढम्, वोढा। ष्टुत्वस्याश्रयणात् सिद्धम्। अनादाविति किम्? श्वलिड् ढौकते।

[ढो ढे लोप। पा० ८।३।१३। ढलोपेऽपदान्तग्रहणम्। वा० १। ढो ढे लोपोऽपदादौ। स० ७।४।१८]

**रो रि** ॥१९॥ [पा० ८।३।१४, स० ७।४।१९]

रेफे परतो रेफस्य लोपो भवति। पुना राजा। नीरक्तम्। दूरक्तम्। अग्नी रथेन। वायू रथेन।

**विरामे विसर्जनीयः** ॥२०॥ [स० ७।४।२०]

विरामे वर्तमानस्य रेफस्य विसर्जनीयो भवति। वृक्ष, अग्नि।

[२०-२१। खरवमानयोर्विसर्जनीय। पा० ८।३।१५]

**खरि** ॥२१॥ [स० ७।४।२१]

खरि परतो रेफस्य विसर्जनीयो भवति। वृक्ष खनति। वृक्ष पचति।

**शर्परे** ॥२२॥ [स० ७।४।२२]

शर्परे खरि रेफस्य विसर्जनीय एव भवति। कुप्वो Xक⁀पो न भवत.। शश क्षुरम्। अद्भि प्सातम्।

[शर्परे विसर्जनीय। पा० ८।३।३५]

**रोः सुपि** ॥२३॥ [पा० ८।३।१६, स० ७।४।२४]

रोरेव रेफस्य सुपि परतो विसर्जनीयो भवति। पय·सु, सर्पि षु। रोरिति किम्? गीर्षु, धूर्षु। पकार किम्? गी।

**भोभगोअघोभ्योऽशि लोपः ॥२४॥**

भो भगो अघो इत्येतेभ्य परस्य रोरशि लोपो भवति। भो अत्र, भो याति। भगो अत्र, भगो याति। अघो अत्र, अघो एहि, अघो इदम्। अशीति किम्? भोः खनति। एते चामन्त्रणेऽसख्या सकारान्ताः। केचित्तु भवद्भगवदघवता सम्बोधने सौ तकारस्य रुत्वम् अवशब्दस्य चौत्वं कुर्वन्ति। तेषा द्विवचनबहुवचनयो· स्त्रिया च न स्यु । भो ब्राह्मणौ, भो ब्राह्मणा·, भो ब्राह्मणि। भगो ब्राह्मणि, अघो ब्राह्मणि।

[२४-२५। भोभगोअघोअपूर्वस्य योऽशि। पा० ८।३।१७, अवर्णभोभगोअघोअपूर्वस्य लोपोऽशि। स० ७।४।२५। विभाषा भवद्भगवदघवतामोच्चावस्य। पा० ८।३।१२। सम्बुद्धावित्युच्यते तत्रेद न सिध्यति। भो ब्राह्मणा इति। तथा विभक्तौ लिङ्गविशिष्टग्रहणं नेतीह न प्राप्नोति। भो ब्राह्मणि। नैष दोष । अव्ययमेष भोःशब्दो नैषा भवत प्रकृतिरिति। भाष्यम्। ]

**आत् ॥२५॥**

अवर्णात् परस्य रोरशि लोपो भवति। क आस्ते। ब्राह्मणा हसन्ति।

**योऽचि वाऽनुञि ॥२६॥**

अवर्णात्परस्य रोरच्युवर्जिते यकारो वा भवति। कयास्ते, क आस्ते। अनुञीति किम्? स उ आगत·।

[भोभगोअघोअपूर्वस्य योऽशि। उञि च पदे। पा० ८।३।१७,२१, उञि। स० ७।४।२६]

**व्योरीषत्स्पृष्टौ च ॥२७॥**

वकारयकारयोरचि परत ईषत्स्पृष्टतरौ वकारयकारौ भवत, लोपश्च वा। द्वावत्र, द्वा अत्र। कयासते, क आसते। व्योरीषत्स्पृष्टयो· पुनर्वचनादतीवेषत्स्पृष्टतरता गम्यते। अनुञीत्येव। द्वावु आगतौ।

[व्योर्लघुप्रयत्नतर शाकटायनस्य। लोप शाकल्यस्य। पा० ८।३।१८-१९। अचीषत्स्पृष्टतरो यश्च। आदीषत्स्पृष्टश्च। व्योश्च ते। स० ७।४।२७-२९]

**छवि रः सः** ॥२८॥ [स० ७।४।३०]

छवि परतो रेफस्य विसर्जनीये प्राप्ते सकारो विधीयते। पुनश्छादयति। रथश्चरति। छवीति किम्? आखुर्याति। वायुर्भ्रमति।

[विसर्जनीयस्य स । पा० ८।३।३४ This is an improvement on the *Astādhyāyī* where there is the anuvrtti of खर्.]

**वा शरि** ॥२९॥ [पा० ८।३।३६, स० ७।४।३१]

शरि परतो रेफस्य सकारो वा भवति। गौश् शेते, गौ शेते। वृक्षस् साये, वृक्ष साये। वृक्षष् षण्डे, वृक्ष षण्डे।

**खरि लोपः** ॥३०॥

खर्परे शरि रेफस्य लोपो वा भवति। वृक्षा स्थातार, वृक्षास्स्थातारः, वृक्षाः स्थातार।

[वाशर्प्रकरणे खर्परे लोप । पा० ८।३।३६।१, खर्परे लोप । स० ७।४।३२]

**कुप्वोः ᳵकᳶपौ** ॥३१॥

कवर्गपवर्गयो परतो रेफस्य जिह्वामूलीयोपध्मानीयावादेशौ वा भवत। वृक्षᳵ करोति, वृक्ष करोति। वृक्षᳵ खनति, वृक्ष खनति। वृक्षᳶपतति, वृक्षः पतति। वृक्षᳶफलति, वृक्ष फलति। खरीत्येव। भानुर्गच्छति। वायुर्भ्रमति।

[कुप्वो ᳵकᳶपौ च। पा० ८।३।३७, कुप्वो ᳵकᳶपौ खरि। स० ७।४।३३]

**ससंख्यस्यानादौ सः** ॥३२॥

ससंख्यस्य यो रेफस्तस्य कुप्वोरपदाद्योः परत सकारो भवति। पयस्कल्पम्, पयस्पाशम्, पयस्कम्। ससंख्यस्येति किम्? प्रातःकल्पम्। अनादाविति किम्? पयः कामयते।

[सोऽपदादौ। पा० ८।३।३८। पाशकल्पककाम्येषु। काशिका। सोऽपदादावनव्ययस्य। वा० १। पाशप्कल्पप्केष्वनव्ययस्य स । स० ७।४।३४]

**रोः काम्ये** ॥३३॥

रोरेव रेफस्य काम्ये परत सकारो भवति। पयस्काम्यति। रोरिति किम्? गी काम्यति।

[रो काम्ये नियमार्थम्। पा० ८।३।३८।२, रो काम्यचि। स० ७।४।३५]

**इणः षः** ॥३४॥ [पा० ८।३।३९]

इण परस्य रेफस्य कुप्वोरपदाद्यो परत षकारो भवति। सर्पिष्पाशम्, यजुष्पाशम्। सर्पिष्कल्पम्, यजुष्कल्पम्। सर्पिष्क, धानुष्क। सर्पिष्काम्यति, यजुष्काम्यति। अनादावित्येव। सर्पि करोति। रो काम्य इत्येव। गी काम्यति। इत उत्तर स इति इण ष इति च वर्तते।

[तेष्विण ष। स० ७।४।३६]

**निर्दुर्बहिराविश्चतुष्प्रादुष्पुरसाम्** ॥३५॥

निरादीना रेफस्य कुप्वो परतो यथायोग सकारषकारौ भवत। निष्कृतम्, निष्पीतम्। दुष्कृतम्, दुष्पीतम्। बहिष्कृतम्, बहिष्पीतम्। आविष्कृतम्, आविष्पीतम्। चतुष्कपालम्, चतुष्पात्रम्। प्रादुष्कृतम्, प्रादुष्पीतम्। पुरस्कृतम्, पुरस्पीतम्। कथ तिस्र पुर करोतीति? लाक्षणिकत्वात्। नैष्कुल्यम्, दौष्पुरुष्यम् इति कृतपत्वस्य ष्यञ्विधानात् सिद्धम्।

[इदुदुपधस्य चाप्रत्ययस्य। पा० ८।३।४१। निर्दुर्बहिराविश्चतुर्प्रादुस्। काशिका। वृद्धिभूताना षत्व वक्तव्यम्। भाष्यम् ८।२।४१। नैष्कुल्यम् दौष्कुल्यम्। निः३ष्कुलम् दुः३ष्कुलम् दुः३ष्पुरुष। बहिरङ्गलक्षणयोर्वृद्धिप्लुतयोरसिद्धत्वात् षत्वं प्रवर्तते। काशिका ८।२।४१। निदुराविश्चतुष्प्रादुर्बहिषाम्। स० ७।४।३७]

**सुचो वा** ॥३६॥ [स० ७।४।३८]

सुजन्ताना रेफस्य कुप्वो परत षकारो वा भवति। द्विष्करोति, द्वि करोति। द्विष्पिबति, द्वि पिबति। त्रिष्करोति, त्रि करोति।

त्रिष्पिबति, त्रि पिबति। चतुष्करोति, चतु. करोति। चतुष्पिबति, चतु पिबति।

[ द्विस्त्रिश्चतुरिति कृत्वोऽर्थे। पा० ८।३।४३ ]

**इसुसोः सम्बन्धे** ॥३७॥

इसुसन्तयो रेफस्य कुप्वो परत सम्बन्धे सति षत्वं भवति वा। सर्पिष्करोति, सर्पि करोति। सर्पिष्पिबति, सर्पि· पिबति। यजुष्करोति, यजु करोति। यजुष्पठति, यजु पठति। सम्बन्ध इति किम्? तिष्ठतु सर्पि·, पिब त्वमुदकम्।

[ इसुसो सामर्थ्य। पा० ८।३।४४, इसुसोर्र्थपेक्षायाम्। स० ७।४।३९ ]

**प्लुतात्ति च** ॥३८॥

प्लुतात्परस्येसुसो रेफस्य कुप्वोस्तकारे च परत षकारो भवति। नि३ष्कुल। दु३ष्पुरुष। सर्पि३ष्टर। सर्पि३ष्टम।

[ प्लुताना तादौ च। पा० ८।३।४१।२ ]

**समासेऽनुत्तरस्य** ॥३९॥

इसुसन्तस्य समासेऽनुत्तरस्य कुप्वो परतो रेफस्य षकारो भवति। सर्पिष्कुम्भ, सर्पिष्कपालम्। धनुष्कोटि, यजुष्पात्रम्। समास इति किम्? सर्पि करोति। अनुत्तरस्येति किम्? परमसर्पि कुम्भ।

[ नित्य समासेऽनुत्तरपदस्थस्य। पा० ८।३।४५, स० ७।४।४१ ]

**अतः कृकमिकंसकुम्भपात्रकुशाकर्णीषु ससंख्यस्य** ॥४०॥

अकारात् परस्य ससंख्यस्य रेफस्य कृञादिषु परत सकारो भवति। अयस्कार, अयस्काम, अयस्कस, अयस्कुम्भ, अयस्पात्रम्, अयस्कुशा, अयस्कर्णी। अत इति किम्? गी कार·। तपर किम्? भा करणम्। कृञादिष्विति किम्? अय कील। ससख्यस्येति किम्? श्व·कार। समास इत्येव। पय करोति। अनुत्तरस्येत्येव। परमपय कार।

[ अनव्ययस्य for ससंख्यस्य। पा० ८।३।४६, स० ७।४।४२ ]

**अधःशिरसोः पदे** ॥४१॥ [स० ७।४।४३]

अधस शिरस इत्येतयो' रेफस्य पदशब्दे परत सकारो भवति। अधस्पदम्, शिरस्पदम्। समास इत्येव। अध पदम्। अनुत्तरस्येत्येव। परमशिर पदम्।

[अध शिरसी पदे। पा० ८।३।४७। [1]Contamination of अधसः शिरसश्च with अध शिर इत्येतयो Read with Kāś अध शिर इत्येतयो.]

**नमसः** ॥४२॥

नमसो रेफस्य कुप्वो परत सकारो भवति। नमस्कृत्य, नमस्कर्ता। समास इत्येव। नम कृत्वा।

[नमस्पुरसोर्गत्यो। पा० ८।३।४०, स० ७।४।४४। पुरस् will be found in rule 35 In the system of Pāṇini नमस् is optionally designated गति having been included in the group साक्षात्प्रभृति, but in the case of पुरस्, the designation गति is compulsory. Candra would appear to be the first to split up नमस्पुरसोः in this way]

**कृञि वा** ॥४३॥

करोतौ परतो नमसो रेफस्य सकारो वा भवति। नमस्करोति, नम. करोति। तिङर्थ आरम्भ।

[नमस्पुरसोर्गत्यो। पा० ८।३।४०, विभाषा कृञि। स० ७।४।४४। साक्षात्प्रभृतीनि च। पा० १।४।७२,७४, कृञो वा। ०नमसश्च। स०२।१।१५०-१५३]

**तिरसः** ॥४४॥

तिरसो रेफस्य कृञि परत. सकारो वा भवति। तिरस्कृत्य, तिरस्करोति, तिरः करोति। व्यवस्थितविभाषया तिर' कृत्वेति न भवति।

[तिरसोऽन्यतरस्याम्। पा० ८।३।४२, तिरसो वा। स० ७।४।४५]

**कस्कादयः** ॥४५॥

कस्कादय' शब्दा' साधवो भवन्ति। कस्क'। कौतस्कुत'। भ्रातु-

ष्पुत्र । शुनस्कर्ण । सद्यस्काल । सद्यस्क्री, क्रीणाते क्विप् । तत्र भवः क्रतु, साद्यस्क । कास्कान् इति पूर्वेणैव [ ४ ] सिद्धम् । सर्पिष्कुण्डिका, धनुष्कपालम्, यजुष्पात्रम्, इत्येषा पूर्वेणैव [ ३९ ] सिद्धे उत्तरपदार्थं वचनम् । परमसर्पिष्कुण्डिका, परमधनुष्कपालम्, परमयजुष्पात्रम् । अतोऽन्येषा न भवति । परमसर्पि कुम्भ । अयस्कान्त । आकृतिगणश्चायम्; तेन भास्करादयोऽप्यत्रैव द्रष्टव्या ।

[ कस्कादिषु च । पा० ८।३।४८, कस्क-कौतस्कुत शुनस्कर्ण-सद्यस्काल-साद्यस्क-भास्करा-ऽहस्करा-ऽयस्करा-ऽयस्कान्ता-ऽयस्कुण्ड-तमस्काण्ड-मेदस्पिण्ड-भ्रातुष्पुत्रादय । सर्पिष्कुण्डिका-धनुष्कपाल-बहिष्पूल-यजुष्पात्रेषूत्तरपदस्थस्यापि । स० ७।४।४६-४७ ]

## कोश्चादेशसनादिशासिवसिघसां सः षः ॥४६॥

कवर्गादिनश्च परस्यादेशस्य सकारस्य सनादिसम्बन्धिन शासिवसिघसा च षो भवति । सिषेच, सुष्वाप, पिपक्षति, चिकीर्षति, तुष्टूषति; वृक्षेषु, धातुषु, गोषु, कर्तृषु, अचैषीत्, शिष्ट, उषित, जक्षु । कोश्चेति किम् ? स्वपिति, यियासति । आदेशादीनामिति किम् ? विसिस्मिये[1] । स इति किम् ? कुरुत ।

[ अपदान्तस्य मूर्धन्य । इण्को । आदेशप्रत्यययो । शासिवसिघसीनां च । पा० ८।३।५५,५७,५९,६० । इण्कुभ्यामपदान्तस्यादेशप्रत्ययस्य स ष । स० ७।४।४८ । L reads the rule without the final ष, but Bhoja shows the correct reading [1]*Buddhacarita* X 3 ]

## नुम्विसर्जनीयशर्व्यवाये ॥४७॥

नुमादिभिर्व्यवधाने कवर्गादिनश्च परस्यादेशादिसकारस्य षत्व भवति । सर्पींषि, यजूंषि, सर्पि षु, यजु षु, सर्पिष्षु, यजुष्षु । कथं निंस्से, क्विपि सुपि च निंस्सु ? प्रत्येक वाक्यपरिसमाप्तेर्न भविष्यति ।

[ नुम्विसर्जनीयशर्व्यवायेऽपि । पा० ८।३।५८, स० ७।४।४९ । नुमादिभिः प्रत्येक व्यवाये षत्वमिष्यते न समस्तै । तेनेह न भवति । निंस्से निंस्स्व इति । ...अत्र हि नुमा सकारेण च शरा व्यवधानम् । ]

**स्तोः षणि** ॥४८॥

स्तौतेरेव सनि षभूते परत इण परस्य षत्व भवति। तुष्टूषति। समानजातीयस्य नियमादिह निरामो न भवति। प्रतीषिषति। अथवा कृतषत्वस्य द्विर्वचनात्। स्तोरिति किम्? सिसिक्षति, सुसूषते। षण्येवेति नियमो न भवति, णे पुनर्वचनात्। षणीति किम्? सिषेच। षत्वनिर्देश· किम्? सुपुप्सति। नकार किम्? [1]व्यतिसुषुपिषे इन्द्रम्। कथ सोषुपिषते? कृते षत्वे बाह्यनियमस्याप्रवृत्ते।

[४८-४९। स्तौतिण्योरेव षण्यभ्यासात्। स स्विदिस्वदिसहीना च। पा० ८।३।६१-६२। स्तौतिणीनामेवास्विदिस्वदिसहीना षण्यभ्यासात्। स० ७।४।५१। [1]*Kāśikā* has सुषुपिषे which is the reading of both Jinendrabuddhi and Haradatta They regard the Ātmanepada as a Vedic irregularity Our Vrtti tries to avoid the irregularity by prefixing व्यति to the verb, but the singular is difficult to explain ]

**णेरस्विदिस्वदिसहः** ॥४९॥

ण्यन्तस्य स्विदादिवर्जितस्य षणि परत इण परस्य षत्व भवति। सिषेचयिषति। स्विदादिपर्युदास. किम्? सिस्वेदयिषति, सिस्वादयिषति, सिसाहयिषति। स्विदादिपर्युदासाद् एव तत्सदृशाना षोपदेशाना ग्रहणात् पुन प्रसवोऽयम्, न विधि। सिस्मारयिषति।

**प्रादीनां सुसूसोस्तुस्तुभस्थासेनिसेधसिचसञ्जस्वञ्जाम्** ॥५०॥

प्रादीना य इण् तत परेषा स्वादीना सकारस्य षत्वं भवति। अभिषुणोति। अभिषुवति। अभिष्यति। अभिष्टौति। अभिष्टोभते। प्रतिष्ठास्यति। अभिषेणयति। प्रतिषेधति। शपा निर्देशात् सिध्यतेर्न भवति। प्रतिसिध्यति। अभिषिञ्चति। अभिषजति। परिष्वजते। प्रादीनामिति किम्? दधि सुनोति, मधु सुनोति। अयमपि पदादिलक्षणे प्रतिषेधे प्राप्ते पुन.प्रसवो न विधि। अतो नि षिञ्चतीति विसर्जनीयव्यवायेऽपि षत्वं

भवति। कथम् निर्गता सेचका अस्माद्देशात्, नि सेचको देश, वृक्ष वृक्षं प्रति सिञ्चति, अभि सिञ्चति, अपि सिञ्चेत् पलाण्डुम् इति? स्वादि-सम्बन्धिनामेव प्रादीना ग्रहणात्, पदान्तरसम्बन्धिनश्चैते। अभिरावयती-त्यादावप्यत एव सिद्धम्।

[ उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्। पा० ८।३।६५, उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतीनाम्। स्थासेनिसेध-सिचसञ्जस्वञ्जा च। स० ७।४।५२-५३ ]

**सदोऽप्रतेः** ॥५१॥

सदे प्रतिवर्जितस्य प्रादिपूर्वस्य षत्व भवति। निषीदति, विषीदति। अप्रतेरिति किम्? प्रतिषीदति।

[ सदिरप्रते। पा० ८।३।६६, सदेरप्रते। स० ७।४।५४ ]

**स्तम्भेः** ॥५२॥ [पा० ८।३।६७, पा० ७।४।५५]

प्रादिपूर्वस्य षत्व भवति। विष्टभ्नाति, प्रतिष्टभ्नाति।

**अवादौर्जित्यालम्बनाविदूर्येषु** ॥५३॥ [स० ७।४।५६]

अवात् परस्य स्तम्भेरौर्जित्यादिषु गम्यमानेषु षत्वं भवति। अहो वृषलस्यावष्टम्भ। अवष्टब्धो रिपु शूरेण। दण्डमवष्टभ्यास्ते। अवष्टब्धा सेना[1]। एतेष्विति किम्? अवष्टब्धो वृषल शीतेन।

[ अवाच्चालम्बनाविदूर्ययो। पा० ८।३।६८। और्जित्ये चेति चान्द्रा। सम् १।२५९। तथाच 'अवादौर्जित्यावलम्बनाविदूरेषु' इति चन्द्रसूत्रम्। पार्थिवा-वयवोपष्टम्भाच्चोपभोगसमर्थमित्यादिपदसिद्धिश्चास्मादेव धातो करणीया। गोयीचन्द्र। Vāmana is silent about और्जित्य which is found in Jainendra आश्रयाविदूरोर्क्ष्वेवाच्च v 4 51 [1]Ms अवष्टब्धे शेते ]

**वेश्च स्वनो भोजने** ॥५४॥ [पा० ८।३।६९, स० ७।४।५७]

वेरवाच्च परस्य स्वनो भोजनविषये षत्वं भवति। विष्वणति, अवष्वणति। भोजन इति किम्? विस्वनति मृदङ्ग।

**निपरेश्च सेवसिवुसहसुटाम्** ॥५५॥

निपरिभ्या वेश्च परेषा सेवादीना सुट्सम्बन्धिनश्च सकारस्य षत्वं भवति। निषेवते, परिषेवते, विषेवते। निषीव्यति, परिषीव्यति, विषीव्यति। निषहते, परिषहते, विषहते। परिष्करोति। निपरेश्चेति किम्? अनुसेवते।

[परिनिविभ्य सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्। पा० ८।३।७०, परिनिविभ्य सेवसिवुसहसुटाम्। स० ७।४।५८]

**स्तुस्वञ्जसिवादीनां वाड्व्यवाये** ॥५६॥ [स० ७।४।५९]

स्तौते स्वञ्ज सिवादीना च सकारस्याड्व्यवाये सति षत्वं वा भवति। न्यष्टौत्, न्यस्तौत्। पर्यष्वजत, पर्यस्वजत। व्यषीव्यत्, व्यसीव्यत्। न्यषहत, न्यसहत। पर्यष्करोत्, पर्यस्करोत्। निपरेश्चेत्येव। अन्वसीव्यत्।

[सिवादीना वाड्व्यवायेऽपि। पा० ८।३।७१]

**स्वादीनाम्** ॥५७॥

सुनोत्यादीनामड्व्यवाये सति प्रादिभ्य परेषा षत्व भवति। अभ्यषुणोत्, पर्यषुवत्, अभ्यष्यत्, अभ्यष्टौत्, अभ्यष्टोभत, पर्यष्ठात्, अभ्यषेणयत्, अभ्यषेधत्, अभ्यषिञ्चत्। कथम् [1]अनडुद्यज्ञमन्वसिञ्चद् इति? स्वादिसबन्धिनाम् एव प्रादीना ग्रहणान्न भविष्यति। अभ्यषजत्, पर्यष्वजत; न्यषीदत्, व्यष्टभ्नात्, दण्डम् अवाष्टभ्नात्, व्यष्वणत्, न्यषेवत।

[प्राक्सितादड्व्यवायेऽपि। पा० ८।३।६३, नित्यं सुनोत्यादीनामासेवात्। स० ७।४।६०। [1]Should we read अनुडुही? अनडुही is a Vedic form]

**स्थादीनां द्विरुक्तेन तस्य च** ॥५८॥

तिष्ठत्यादीनामेव स्वादिष्वन्तर्गताना द्विरुक्तेन व्यवाये प्रादिभ्य. परेषा षत्व भवति। तस्य द्विरुक्तस्य च। अभितष्ठौ, अभिषिषेणयिषति, निषिषेधयिषति, अभिषिषिक्षति। षणि नियमोऽपि' बाध्यते। अभिपिपद्क्षति,

परिषिष्वङ्क्षते, अभिषिषत्सति, अभितष्टम्भ, विपष्वाण, निषिषेवे। स्थादीनाम् इति किम्? अभिसुमूषति, अभिसिग्रासति।

[ स्थादिष्वभ्यासेन चाभ्यासस्य। पा० ८।३।६४, स्थादीनामभ्यासेनाभ्यासस्य च। स० ७।४।६१। [1]नियममपि Ms ]

**नेः सयसितयोः ॥५९॥**

ने परयो सयसितयो सकारस्य षत्व भवति। निषय, निषित।

[ ५९-६०। परिनिविभ्य सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्। पा०८।३।७०, परिनिविभ्य सयसितयो। स० ७।४।६२ ]

**विपरेः ॥६०॥**

विपरिभ्या परयो सयसितयो सकारस्य षत्व भवति। विषय, विषित। परिषय, परिषित।

**निरभ्यनोश्च स्यन्दोऽप्राणिनि वा ॥६१॥**

निरभ्यनुभ्यो विपरिभ्या च परस्य स्यन्दोऽप्राणिविषये षत्व भवति वा। नि ष्यन्दते तैलम्, नि स्यन्दते। अभिष्यन्दते, अभिस्यन्दते। अनुष्यन्दते, अनुस्यन्दते। विष्यन्दते, विस्यन्दते। परिष्यन्दते, परिस्यन्दते। अप्राणिनीति किम्? अनुस्यन्दते मत्स्य। पर्युदासश्चायम्, तेन प्राणिनोऽन्यस्मिन् भवति षत्वविकल्प। अनुष्यन्देते मत्स्योदके, अनुस्यन्देते[1]।

[ अनुविपर्यभिनिभ्य स्यन्दतेरप्राणिषु। पा० ८।३।७२। It will be noticed that Candra has निर् for Pāṇini's नि. अथ य प्राण्यप्राणी च कथ तत्र भवितव्यम्—अनुष्यन्देते मत्स्योदके इति, आहोस्विदनुस्यन्देते मत्स्योदके इति? यदि तावदप्राणी विधिनाश्रीयते, अस्त्यत्राप्राणीति कृत्वा भवितव्यमेव षत्वेन। अथ प्राणी प्रतिषेधेनाश्रीयत, अस्त्यत्र प्राणीति कृत्वा भवितव्यं प्रतिषेधेन। कि पुनरत्रार्थसतत्त्वम्? देवा ज्ञातुमर्हन्ति। भाष्यम्। प्राण्यप्राणिविषयस्यापि स्यन्दतेरय विकल्पो भवति। अनुष्यन्देते मत्स्योदके। अनुस्यन्देते। अप्राणिष्विति पर्युदासोऽय न प्रसज्यप्रतिषेध। काशिका। निरभ्यनुभ्यश्च स्यन्दतेरप्राणिषु वा। स० ७।४।६३। [1]Ms अनुष्यन्दते मत्स्योदकेन। अनुस्यन्दते ]

**वेः स्कन्दोऽततवतोः ॥६२॥**

वे परस्य स्कन्दिसकारस्य क्तक्तवतुभ्याम् अन्यत्र पत्वं वा भवति। विष्कन्ता, विस्कन्ता। विष्कन्तुम्, विस्कन्तुम्। अततवतोरिति किम्? विस्कन्न, विस्कन्नवान्।

[वे स्कन्देरनिष्ठायाम्। पा० ८।३।७३, स० ७।४।६४]

**परेः ॥६३॥**

परे परस्य स्कन्दिसकारस्य पत्वं वा भवति। परिष्कन्ता, परिस्कन्ता। परिष्कन्तुम्, परिस्कन्तुम्। योगविभागात् ततवतोरपि भवति। परिष्कन्न, परिस्कन्न। परिष्कन्नवान्, परिस्कन्नवान्। व्यवस्थितविभाषया प्राच्यभरतविषयप्रयोगे परिस्कन्न एव, अन्यत्र परिष्कण्णोऽपि।

[परेश्च। परिस्कन्द प्राच्यभरतेषु। पा० ८।३।७४-७५, परिस्कन्द प्राच्येषु। स० ७।४।६५]

**स्फुरिस्फुलोर्निर्निविभ्यः ॥६४॥** [स्फुर० । स० ७।४।६६]

निरादिभ्य परयो स्फुरिस्फुलो पत्व वा भवति। नि ष्फुरति, नि स्फुरति। नि ष्फुलति, नि स्फुलति। निष्फुरति, निस्फुरति। निष्फुलति, निस्फुलति। विष्फुरति, विस्फुरति। विष्फुलति, विस्फुलति।

[स्फुरतिस्फुलत्योर्निर्निविभ्य। पा० ८।३।७६]

**वेः स्कभ्नः षः ॥६५॥**

वे परस्य स्कभ्नाते पत्वं भवति, नित्य पुनर्विधानात। विष्कभ्नाति, विष्कम्भक, विष्कम्भिता। श्नानिर्देश किम्? विस्कम्नोति।

[वे स्कभ्नातेर्नित्यम्। पा० ८।३।७७, स० ७।४।६७]

**समासेऽङ्गुलेः सङ्गः ॥६६॥** [पा० ८।३।८०]

अङ्गुले परस्य सङ्गसकारस्य समासे सति पत्वं भवति। अङ्गुलिषङ्ग। समास इति किम्? अङ्गुले सङ्ग।

[६६-६७। समासेऽङ्गुलिभीरुभ्या सङ्गस्थानयो। स० ७।४।६८]

**भीरोः स्थानम्** ॥६७॥ [पा० ८।३।८१]

भीरो परस्य स्थानमित्येतस्य षत्व भवति। भीरुष्ठानम्। समास इत्येव। भीरो स्थानम्।

**अग्नेः स्तुत्** ॥६८॥ [०स्तुत । स० ७।४।६९]

अग्ने परस्य स्तुदित्येतस्य षत्व भवति। अग्निष्टुत्।

[ ६८-६९। अग्ने स्तुत्स्तोमसोमा । पा० ८।३।८२ ]

**ईतः सोमः** ॥६९॥

ईकारान्ताद् अग्निशब्दात् परस्य सोम इत्येतस्य षत्वं भवति। अग्नीषोमौ। ईत इति किम्? अग्निसोमो [ माणवकौ ]।

[ अग्नेर्दीर्घात्सोमस्य। पा० ८।३।८२।१, दीर्घात्सोमस्य। स० ७।४।७० ]

**ज्योतिरायुषश्च स्तोमः** ॥७०॥

ज्योतिष आयुषोऽग्नेश्च परस्य स्तोम इत्येतस्य षत्व भवति। [1]ज्योतिष्टोम, आयुष्टोम, अग्निष्टोम। समास इत्येव। अग्नि स्तोम दहति।

[ ज्योतिरायुष स्तोम । पा० ८।३।८३, ज्योतिरायुर्भ्यां च स्तोमस्य। स० ७।४।७१। [1]Ms has ज्योति ष्टोम आयु ष्टोम, but these are never read with a visarga in ritual literature, so we should have व्यवस्थितविभाषा in the case of the rule खरि लोप vi 4 30 ]

**मातृपितृभ्यां स्वसा** ॥७१॥ [पा० ८।३।८४]

मातु पितुश्च परस्य स्वसृ इत्येतस्य षत्व भवति। मातृष्वसा, पितृष्वसा। समास इत्येव। मातु स्वसा।

[ मातृपितृभ्या स्वसु । स० ७।४।७२ ]

**अलुकि वा** ॥७२॥

मातृपितृभ्या परस्य स्वसृ इत्येतस्य षष्ठ्या अलुकि सति षत्वं वा भवति। मातु ष्वसा, मातु स्वसा। पितु ष्वसा, पितु स्वसा। समास इत्येव। पितु स्वसा।

[ मातु पितुर्म्यामन्यतरस्याम् । पा० ८।३।८५, मातु पितुर्म्यां वा । स० ७।४।७३ Candra's rule is a fine instance of brevity ]

**अभिनिष्टानो वर्णे** ॥७३॥ [स० ७।४।७४]

अभिनिष्टान इति वर्णेऽभिधेये निपात्यते । वर्ण इति किम् ? अभिनिस्तानो मृदङ्गस्य ।

[ अभिनिस स्तन शब्दसंज्ञायाम् । पा० ८।३।८६ । विसर्गे वाच्य इति भागवृत्तिकृतो मतम्, विसगे वर्णे च वाच्य इति वामनस्य मतम्, अभिनिष्टानो वर्णे इति चन्द्रमतम् । तथा च माघ (२।१३)—वच स्पष्टाभिनिष्टानमिदमादाय माधव इति । गोयीचन्द्र १।२७३ ]

**[1]प्रादुष्प्रादिभ्यो यच्यस्तेः** ॥७४॥

प्रादुश्शब्दात् प्रादिभ्यश्चेणन्तेभ्य परस्य यकारादावजादौ च परतोऽस्ते सकारस्य षत्वं भवति । प्रादु ष्यात्, प्रादु षन्ति । निष्यात्, निषन्ति । दुःष्यात्, दु षन्ति । प्रादुष्प्रादिभ्य इति किम् ? दधि स्यात् । यचीति किम् ? प्रादु स्त· । अस्तेरिति किम् ? विसृतम्, अनुसृतम् । अनुसूते क्विप् अनुसू, तस्यापत्यम् आनुसेय., शुभ्रादित्वाड् [ २।४।५३ ] ढक् । कथम्—यद् अत्र मा प्रति स्याद् इति ? अस्तिसबन्धिनाम् एव प्रादीना ग्रहणान् न भविष्यति । तथा । सर्पिषोऽपि स्यात् । अपि सर्पिष स्याद् इति व्यभिचारात् ।

[ उपसर्गप्रादुर्भ्यामस्तिर्यच्पर. । पा० ८।३।८७, प्रादुरुपसर्गेभ्योऽस्तेर्यच्परस्य । स० ७।४।७५ । [1]प्रादु.प्रादिभ्यः L but see rule 35 ]

**सुविनिर्दुर्भ्यः समसूतिसुपाम्** ॥७५॥

स्वादिभ्य. परेषा सम सूति सुप् इत्येतेषा सकारस्य षत्वं भवति । सुबिति स्वपेर्यण इकि कृते रूपम् । सुषमम्, विषमम्, नि षमम्, दुःषमम् । सुषूति., विषूति , नि षूति , दु षूति । सुषुप्त , विषुप्त., निःषुप्तः, दु·षुप्तः । विषुषुपुरिति पूर्वस्य विशब्दनिमित्तात्, परस्यापि

षुशब्दनिमित्तात्। अन्ये तु कृतषत्वस्य द्विर्वचनं कुर्वन्ति। तैः पूर्वत्रासिद्धीयमद्विर्वचने [भाष्यम् ६।१।९] इति वक्तव्य स्यात्। सुब्रूपनिर्देशः किम्? विसुष्वाप।

[सुविनिर्दुर्भ्यः सुपिसूतिसमाः। पा० ८।३।८९। 'पूर्वत्रासिद्धीयमद्विर्वचने' इति कृते षत्वे ततो द्विर्वचनम्। काशिका। सुविनिर्दुर्भ्यः समसूत्योः। स्वपेरपः। स० ७।४।७६-७७]

**नदीष्णः कुशले ॥७६॥**

नदीष्ण इति निपात्यते स्नातु चेत् कुशलो भवति। यस्तु स्रोतसा ह्रियते, स नदीस्नः।

[७६-७७। निनदीभ्यां स्नातेः कौशले। पा० ८।३।८९॥ नद्याः स्नस्य कौशले। स० ७।४।७८]

**नेः स्नातः ॥७७॥** [०स्नातस्य च। स० ७।४।७९]

नेः परस्य स्नात इत्येतस्य षत्व भवति। निष्णात कटकरणे। कुशल इत्येव। निस्नात।

[Goyīcandra says under कृते षत्वे द्वि। निषण्णौ Sam 1 236: निस्नातस्यैव षत्वमिति चान्द्रा, तदनेकप्रमाणदर्शनोपक्षेपेण दूषितम्।]

**प्रतेः सूत्रे ॥७८॥** [स० ७।४।८०]

प्रते परस्य स्नात इत्येतस्य सूत्रेऽभिधेये षत्व भवति। प्रतिष्णातं सूत्रम्। प्रतिस्नातोऽन्य।

[सूत्रं प्रतिष्णातम्। पा० ८।३।९०]

**प्रष्ठोऽग्रगामी ॥७९॥** [०गामिनि। पा० ८।३।९२, स० ७।४।८१]

प्रष्ठ इति निपात्यतेऽग्रगामी चेत्। प्रस्थोऽन्य।

**वेः स्त्रो नाम्नि ॥८०॥**

वे परस्य स्तृणातेः सञ्ज्ञाया गम्यमानाया षत्वं भवति। विष्टरो

वृक्ष· । विष्टरम् आसनम्। विष्टारपङ्क्तिश्छन्द· । नाम्नीति किम्? विस्तरो वाक्यस्य, विस्तार पटस्य ।

[ वृक्षासनयोर्विष्टर । पा० ८।३।९३, स० ७।४।८२, छन्दोनाम्नि च । पा० ८।३।९४, छन्दोनाम्नि विष्टार । स० ७।४।८३ ]

**गवियुधेः स्थिरः ॥८१॥**

गवियुधिभ्या परस्य स्थिर इत्येतस्य षत्वं भवति। गविष्ठिर·, युधिष्ठिर । गवीति निर्देशात सप्तम्या बहुलम् [ ५।२।११ ] इत्यलुक्। नाम्नीत्येव। गवि स्थिर , युधि स्थिर ।

[ गवियुधिभ्या स्थिर । पा० ८।३।९५, गवियुधिभ्या स्थिरस्य। स० ७।४।८४ ]

**कपेः स्थलस्य ॥८२॥**

कपे परस्य स्थल इत्येतस्य षत्वं भवति। कपिष्ठलो नाम गोत्रस्य प्रवर्तक· । नाम्नीत्येव । कपिस्थलम्।

[ कपिष्ठलो गोत्रे। पा० ८।३।९१, कपे स्थलस्य गोत्रे। स० ७।४।८५ ]

**विकुशमिपरिभ्यः ॥८३॥** [स० ७।४।८६]

एतेभ्यः परस्य स्थल इत्येनस्य षत्व भवति। विष्ठलम्, कुष्ठलम्, शमिष्ठलम्, परिष्ठलम्। निपातनाद् ध्रस्वत्वम्।

[ विकुशमिपरिभ्य· स्थलम्। पा० ८।३।९६ ]

**अम्बाम्बगोभूमिद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिबर्हिर्दिव्यग्निभ्यः स्थः ॥८४॥**

अम्बादिभ्य. परस्य स्थ इत्येतस्य षत्व भवति। अम्बष्ठ , आम्बष्ठः, गोष्ठः, भूमिष्ठ·, द्विष्ठ , त्रिष्ठ , कुष्ठ·, शेकुष्ठ , शङ्कुष्ठ., अङ्गुष्ठ , मञ्जिष्ठः, पुञ्जिष्ठ , बर्हिष्ठ·, दिविष्ठ·, अग्निष्ठ ।

[ अम्बाम्बगोभूमिसव्येऽपद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः

स्थ । पा० ८।३।९७, अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्कङ्गुमञ्जिपुञ्जिबर्हि-रञ्जिपरमेदिविभ्य स्थस्य । स० ७।४।८७ ]

**एति संज्ञायामकोः ॥८५॥**

एकारे परत सकारस्याकवर्गादिण परस्य षत्वं भवति । हरिषेण, वायुषेण । एतीति किम् ? हरिसिंह । संज्ञायाम् इति किम् ? पृथुसेनो राजा । अकोरिति किम् ? विष्वक्सेन । इण इत्येव । गङ्गसेन ।

[ एति सञ्ज्ञायामगात् । पा० ८।३।९९, एत्यको संज्ञायाम् । स० ७।४।९० ]

**नक्षत्रादितो वा ॥८६॥** [स० ७।४।९१]

नक्षत्रादिदन्तात परस्य सकारस्यैति परत संज्ञाया षत्व वा भवति । रोहिणिषेण, रोहिणिसेन । रेवतिषेण, रेवतिसेन । इत इति किम् ? पुनर्वसुषेण । अकोरित्येव । शतभिषक्सेन ।

[ नक्षत्राद्वा । पा० ८।३।१०० ]

**ह्रस्वात् सुपस्ति ॥८७॥**

ह्रस्वादिणन्तात् परस्य सकारस्य सुपो विहिते तकारादौ परतः षत्वं भवति । तरतमनयटत्वतल्तस्यप प्रयोजयन्ति । सर्पिष्टरम्, सर्पिष्टमम्, चतुष्टयम्, यजुष्ट्वम्, यजुष्टा, सर्पिष्ट, निष्टयाश्चण्डालादय । ह्रस्वादिति किम् ? गीस्तरम् । सुप इति किम् ? भिन्धुस्तराम् । तीति किम् ? सर्पिःसात् । विहितविशेषण किम् ? अग्निस्तरति ।

[ ह्रस्वात्तादौ तद्धिते । पा० ८।३।१०१, ह्रस्वात्तादौ तिङि प्रतिषेधः । वा० १ । त्वतल्तस्यपयेष्वदीर्घात् । तरप्तमपोरतिङ । स० ७।४।९२-९३ ]

**निसस्तपि सकृत् ॥८८॥**

निस सकारस्य तपि परत षत्वं भवति, सकृच्चेत्प्रवृत्ति । निष्टपति, निष्टप्त । सकृदिति किम् ? निस्तपति ।

[ निसस्तपतावनासेवने । पा० ८।३।१०२, निसस्तपतावनासेवायाम् । ७।४।९४ ]

**सुषामादयः** ॥८९॥

सुषामादय शब्दा साधवो भवन्ति। शोभन सामास्य, सुषामा। नि.षामा। दु षामा। सुषेध । नि षेध । दु षेध.। अतत्प्राद्यर्थ आरम्भः, सिधो गतौ [ ९३ ] इति च प्रतिषेधबाधनार्थ । सुषन्धि.। दु:षन्धिः। नि:षन्धि । सुष्ठु। दुष्ठु । अपष्ठु । सव्येष्ठा। मञ्जिष्ठा। परमेष्ठी। गौरिषक्थ सञ्ज्ञायाम्। नौषेचिक। दुन्दुभिषेचनम्। आकृतिगणोऽयम्।

[ सुषामादिषु च। पा० ८।३।९८, स्थस्थास्थिनूस्थृणामिति वक्तव्यम्। भाष्यम् ८।३।९७। अपदु सुवनिभ्य स्थ। सव्येष्टृपरमेष्ठिनौ सूतब्रह्मणो:। सुदुर्निभ्य सामसेधसन्धे। नौषेधिका-गौरिषक्थ-प्रतिष्णिका-दुन्दुभिषेवण-तुराषाडादय। स० ७।४।८८-८९, ९५-९६। नौषेचिकेत्यत्र वृत्तौ चन्द्रवृत्तौ च दृश्यते, नौषेचनमिति तु जयादित्य। गोयीचन्द्र १।२३३ ]

**नाद्यन्तयोः** ॥९०॥

पदस्यादावन्ते च वर्तमानस्य षत्व न भवति। दधि सिञ्चति। अग्निस्तरति।

[ ९०-९१। सात्पदाद्यो। पा० ८।३।१११, न सात्पदाद्यो:। स० ७।४।९७ ]

**सात्** ॥९१॥

सात षत्व न भवति। अग्निसात्।

**सिचो यङि** ॥९२॥ [पा० ८।३।११२, स० ७।४।९८]

सिञ्चतेर्यङि षत्व न भवति। सेसिच्यते, अभिसेसिच्यते। यङीति किम्? अभिषिषिक्षति। ङकार किम्? अभिषिच्यते।

**सिधो गतौ** ॥९३॥

सेधतेर्गतौ गम्यमानाया षत्वं न भवति। अभिसेधयति गा:। गताविति किम्? निषेधयति।

[ सेधतेर्गतौ। पा० ८।३।११३, स० ७।४।९९ ]

**निप्रतेः स्तब्धः** ॥९४॥

निप्रते परस्य स्तब्ध इत्येतस्य षत्व न भवति। निस्तब्ध, प्रति-स्तब्ध। निप्रतेरिति किम्? विष्टब्ध।

[प्रतिस्तब्धनिस्तब्धौ च। पा० ८।३।११४, निप्रतिभ्यां स्तब्धस्य। स० ७।४।१००]

**सोढः** ॥९५॥ [पा० ८।३।११५]

सहे सोढ् इत्येवरूपस्य षत्वं न भवति। निसोढा, निसोढुम्। ओत्वढत्वनिर्देश किम्? निषहते।

[सहेरोद्वत। स० ७।४।१०१]

**प्रादिभ्यः स्तम्भुसिवुसहां चङि** ॥९६॥

प्रादिभ्य परेषा स्तम्भादीना चङि परत षत्वं न भवति। अभ्य-स्तम्नात्, पर्यसीषिवत्, पर्यसीषहत्। प्रादिग्रहणाद् द्विरुक्तनिमित्त षत्वं भवत्येव। तथा चैवोदाहृतम्।

[स्तम्भुसिवुसहा चङि। पा० ८।३।११६, उपसर्गात् स्तम्भुसिवुसहां चङि। स० ७।४।१०२]

**सोः स्यसनोः** ॥९७॥

सुनोते स्यसनो परत षत्व न भवति। अभिसोष्यति, पर्यसोष्यत्। सुसूषतीति स्तो षणि [४८] इति नियमान्न भविष्यति। अभिसुसूषतीति [५८] स्थादिनियमान्न भविष्यति। एवं तर्हि। अभिसुसूषते **क्विप्**, अभिसुसू। स्यसनोरिति किम्? सुषाव।

[सुनोते स्यसनो। पा० ८।३।११७, स० ७।४।१०३]

**सदिस्वञ्जेर्लिटि** ॥९८॥

लिटि परत सदिस्वञ्जे षत्व न भवति। निषसाद। पूर्वस्य तु परेण व्यवधानाद् भवत्येव। परिषस्वजे।

[सदे परस्य लिटि। पा० ८।३।११८, सदो लिटि प्रतिषेधे स्वञ्जेरुप-संख्यानम्। वा० १। सदिस्वञ्ज्यो परस्य लिटि। स० ७।४।१०४]

**धातोः सीलुङोश्च धो ढः ॥९९॥**

धातोरिणन्तात् परयो सीलुङोर्लिटश्च सम्बन्धिनो धकारस्य ढकारो भवति। च्योषीढ्वम्, अच्योढ्वम्, चकृढ्वे। धातोरिति किम्? आसिषीध्वम्। सीलुङोश्चेति किम्? रतुध्वे। इण इत्येव। पक्षीध्वम्।

[**इण षीध्वलुङ्लिटा धोऽङ्गात्। पा० ८।३।७८, धातोरिण षीध्वलुङ्लिटां धो ढ। स० ७।४।१०५**]

**वेटः ॥१००॥**

इण पराद् इट परेषा सीलुङ्लिटा धकारस्य ढकारो भवति वा। लविषीढ्वम्, लविषीध्वम्। अलविढ्वम्, अलविध्वम्। लुलुविढ्वे, लुलुविध्वे। उपदिदीयिढ्वे, उपदिदीयिध्वे। इण इत्येव। आसिषीध्वम्।

[**विभाषेट। पा० ८।३।७९, इटो वा। स० ७।४।१०६**]

**रषान् नो ण एकपदे ॥१०१॥**

रेफषकाराभ्या परस्यैकपदे वर्तमानस्य णत्व भवति। आस्तीर्णम्, मुष्णाति, मातॄणाम्। योऽसावृवर्णे रेफस्तस्याश्रयणाण्णत्व भवत्येव। एकपद इति किम्? अग्निर्नयति।

[**रषाभ्यां नो ण समानपदे। पा०८।४।१, रषृभ्यो व्यवहितस्यापि समानपदे नो ण। स० ७।४।१०७**]

**पूर्वपदान्नाम्नि ॥१०२॥**

पूर्वपदस्थाभ्या रेफषकाराभ्या परस्य नकारस्योत्तरपदस्थस्य सज्ञायाम् एव णत्व भवति। द्रुणसः, खरणसः। नाम्नीति किम्? चर्मनासिकः। पूर्वपदस्योत्तरपदापेक्षत्वादुत्तरपदस्थस्यैव नियमान्निवृत्ति। इह तु भवत्येव। खारपायण, मातृभोगीण। ऋगयनादिभ्य [ ३।३।४५ ] इति ज्ञापकादृगयनमिति न भवति।

[**पूर्वपदात्सञ्ज्ञायामग। पा० ८।४।३, अप्रतिषेधो वा यथा, सर्वनामसंज्ञायाम्। वा० ६। इहेदानी कि निपातनम्? इहापि निपातनमस्ति। किम्?**

अणृगयनादिभ्य [४।३।७३] इति। भाष्यम्। पूर्वपदस्थेभ्य सञ्ज्ञायामनृगयनादीनाम्। स० ७।४।१०८ [1]Ms has the masc form ऋगयन, but ऋगयन is neut like पारायण ]

**वनं पुरगामिश्रकासिध्रकाशारिकाग्रेकोटरात् ॥१०३॥**

पुरगादिभ्य परस्यैव नाम्नि वननकारस्य णत्व भवति। पुरगावणम्, मिश्रकावणम्, सिध्रकावणम्, शारिकावणम्, अग्रेवणम्, निपातनादेत्वम्; कोटरावणम्। पुरगादिभ्य इति किम्? कुबेरवनम्, असिपत्त्रवनम्।

[वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्य। पा० ८।४।४, पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यो वनस्य। स० ७।४।१११]

**प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यपीयूक्षाखदिरात् ॥१०४॥**

प्रादिभ्य परस्य वननकारस्य णत्व भवति। प्रवणम्, निर्वणम्, अन्तर्वणम्, शरवणम्, इक्षुवणम्, प्लक्षवणम्, आम्रवणम्, कार्ष्यवणम्, पीयूक्षावणम्, खदिरवणम्।

[प्रनिरन्त शरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसञ्ज्ञायामपि। पा० ८।४।५, प्रनिरन्तरग्रेशरेक्षुप्लक्षाम्रकार्श्यखदिरपीयूक्षाभ्योऽसञ्ज्ञायामपि। स० ७।४।११२]

**वौषधिवृक्षाद् द्वित्र्यचोऽनिरिकादेः ॥१०५॥**

ओषधिवृक्षाद् द्व्यचस्त्र्यचश्चेरिकादिवर्जिताद्रेफषकारवत परस्य वननकारस्य णत्व वा भवति। दूर्वावणम्, दूर्वावनम्। शिरीषवणम्, शिरीषवनम्।

ओषध्य फलपाकान्ता लता गुल्माश्च वीरुध।
फली वनस्पतिर्ज्ञेयो वृक्षा पुष्पफलोपगा॥

ओषधिवृक्षादिति किम्? विदारीवनम्। द्वित्र्यच इति किम्? देवदारुवनम्। अनिरिकादेरिति किम्? इरिकावनम्। तिमिरवनम्।

[विभाषौषधिवनस्पतिभ्य। पा० ८।४।६, द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम्। इह मा भूत्। देवदारुवनम्। इरिकादिभ्य प्रतिषेधो वक्तव्य.। भाष्यम्। अनिरिकातिमिर-चीरिका कर्मारेभ्यो द्वित्र्यज्भ्य ओषधिवृक्षेभ्यो वा। स० ७।४।११३।

The stanza quoted in the Vrtti is found in the Kāś, Sam, etc. with the second half first Hc follows our Vrtti ]

**अह्नोऽतः ॥१०६॥**

अदन्ताद् रेफषकारवत परस्याह्ननकारस्य णत्वं भवति। पूर्वाह्णः, अपराह्णः। अत इति किम्? निरह्न, दुरह्न। अकारनिर्देशः किम्? दीर्घाह्नी शरत्।

[ अह्नोऽदन्तात्। पा० ८।४।७, अह्नस्यादन्तात्। स० ७।४।११४ ]

**त्रिचतुर्भ्यां हायनो वयसि ॥१०७॥**

त्रिचतुर्भ्यां परस्य हायननकारस्य वयसि गम्यमाने णत्व भवति। त्रिहायणो वत्स, चतुर्हायण। वयसीति किम्? त्रिहायणा शाला।

[ त्रिचतुर्भ्यां वयसि हायनस्य। स० ७।४।११५। अथेह कथं भवितव्यम्—द्वौ हायनावस्या शालाया द्विहायना त्रिहायनेति? हायनो वयसि स्मृत.। वयोवाचिनो हायनशब्दस्य ग्रहणम्। न चैष वयोवाची। अथ णत्वं कस्मान्न भवति? णत्वमपि वयोवाचिन एव। भाष्यम् ४।१।१७। Under the same rule we find in the Jayāditya *Kāśikā* णत्वमपि त्रिचतुर्भ्यां हायनस्येति वयस्येव स्मर्यते. Candra evidently follows J who has चतुस्त्रेर्वयसि हायन v 4 108 ]

**वाहनं वाह्यात् ॥१०८॥**

वाहननकारस्य वाह्यवाचिनो रेफषकारवत परस्य षत्वं भवति। इक्षुवाहणम्, शरवाहणम्। वाह्यादिति किम्? दाक्षिवाहनम्।

[ वाहनमाहितात्। पा० ८।४।८, अहिताद्वाहनस्य। स० ७।४।११६ ]

**पानं देशे ॥१०९॥** [पा० ८।४।९]

पाननकारस्य पूर्वपदस्थाभ्या रषाभ्या परस्य देशे गम्यमाने णत्वं भवति। पीयत इति पानम्, क्षीर पानम् एषा वर्तते, क्षीरपाणा उशीनराः। सुरापाणा प्राच्या, सौवीरपाणा बाह्लीका., कषायपाणा गान्धाराः। देश इति किम्? क्षीरपान भाजनम्।

[ पानस्य देशे। स० ७।४।११७ ]

**वा भावकरणयोः** ॥११०॥ [पा० ८।४।१०, स० ७।४।११८]

भावे करणे च वर्तमानस्य पानशब्दस्य पूर्वपदस्थाभ्या रेफषकाराभ्या परस्य णत्वं वा भवति। क्षीरपाणं वर्तते, क्षीरपानम्। कषायपाण वर्तते, कषायपानम्। क्षीरपाण भाजनम्[1], क्षीरपानम्। कषायपाण भाजनम्[1], कषायपानम्।

[ [1]Ms भोजनम् ]

**गिरिनद्यादीनाम्** ॥१११॥

गिरिनद्यादीना नकारस्य णत्वं वा भवति। गिरिणदी, गिरिनदी। चक्रणितम्बा, चक्रनितम्बा[1]। वक्रणदी, वक्रनदी।

[ वाप्रकरणे गिरिनद्यादीनामुपसंख्यानम्। पा० ८।४।१०।१। गिरिणदी गिरिनदी। चक्रनितम्बा चक्रनितम्बा। भाष्यम्। Kielhorn does not mention any variant गिरिचक्रादिभ्यो नदीनितम्बादीनाम्। स० ७।४।११९। [1]Ms has वक्रणितम्बा वक्रनितम्बा because of the similarity of the letters व and च, both in Devanāgarī and Bengali scripts. Hence Sam has the rules वक्रान्नितम्बस्य। नद्या गिरेश्च। 1 325–326 The Kātantra Pariśista says गिरिनद्यपि गिरिनद्धं वक्रनितम्बा तथैव माषोनम्। वक्रनदी च गणेऽस्मिन् विनिश्चितो गिरिनितम्बोऽपि॥ Śak Gana has चक्रनितम्ब Hc ii 3 62 has both वक्रनितम्बा and चक्रनितम्बा. ]

**समस्तान्तसमीपयोरयुवादीनाम्** ॥११२॥

समस्तान्ते तत्समीपे च यो नकारस्तस्य पूर्वपदनिमित्ताद्रेफषकारवतो णत्वं वा भवति। माषवापिणौ माषवापिनौ। माषवापिणी माषवापिनी। माषवापाणि, माषवापानि[1]। माषवापेण, माषवापेन। समस्तान्तग्रहण किम्? गर्गभगिनी। यदा तु गर्गाणा भगो गर्गभग, सोऽस्या अस्तीति गर्गभगिणीति तदा[2] णत्व भवत्येव। अयुवादीनाम् इति किम्? आर्ययूना। क्षत्रिययूना। प्रपक्वानि। परिपक्वानि। प्रपक्वेन। परिपक्वेन। पूर्वपदाद्

[ १०२ ] इति नियमान्निवृत्तस्य पुन प्रसवोऽयम्, न विधि । अतो माषवापान्, व्रीहिवापान् इति णत्व न भवति ।

[ प्रातिपदिकान्तनुम्विभक्तिषु च । पा० ८।४।११ । प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणमसमासान्तप्रतिषेधार्थम् । तत्र युवादिप्रतिषेध । वा० १,३ । उत्तरपदान्तस्यायुवाह्न । नुसुपोरपक्कात् । स० ७।४।१२०-१२१ । [1]माषवापिणि, माषवापिनि Ms [2]तदा dropped in Ms Cf *Kāsikā* तदा मातृभोगीणवन्नित्येन णत्वेन भवितव्यम् । ]

**कुमदेकाचः** ॥११३॥

कवर्गवत एकाचश्चोत्तरपदस्य समस्तान्ते तत्समीपे च यो नकारस्तस्य णत्व भवति, नित्य पुनर्विधानात् । वस्त्रयुगिणौ, वस्त्रयुगिण , वस्त्रयुगाणि, वस्त्रयुगेण । वृत्रहणौ, वृत्रहणि, क्षीरपाणि, क्षीरपेण । ब्रह्मघ्नीति न भवति घा ह [ १३४ ] इति प्रतिषेधात् ।

[ एकाजुत्तरपदे ण । कुमति च । पा० ८।४।१२-१३, नित्यमेकाच्युत्तरपदे । कुमति च । ७।४।१२२-१२३ ]

**प्राद्यन्तरोऽदुरो णः** ॥११४॥

दुरोऽन्येभ्य प्रादिभ्योऽन्त शब्दाच् च परस्य णादेशनकारस्य णत्वं भवति । प्रणमति, परिणमति, प्रणायक , परिणायक । अन्तर्णयति, अन्तर्णीत । अर्थत प्रत्यासत्तेस्तक्रियासम्बन्धिनामेव प्रादीना ग्रहणादिह न भवति । प्रगता नायका अस्माद् देशात्, प्रनायको देश इति । अदुर इति किम् ? दुर्नय । ण इति किम् ? प्रनर्दति ।

[ उपसर्गादसमासेऽपि णोपदेशस्य । पा० ८।४।१४, अन्त शब्दस्याङ्किविधिसमासणत्वेषूपसङ्ख्यानम् । १।४।६५।१, सुदुरो प्रतिषेधो नुम्विधितत्वषत्वणत्वेषु । १।४।६०।७, उपसर्गाद्दुरो णोपदेशस्य । स० ७।४।१२४ । अन्तर्णत्वाङ्किविधिषु । स० १।१।१३० ]

**हिनुमीनानि** ॥११५॥

हिनु मीना आनि इत्येतेषा प्रादिभ्य परेषा णत्व भवति । प्रहि-

णोति, प्रहिणुत । प्रमीणाति, प्रमीणीत । प्रवपाणि, परिवपाणि। प्रवपानि मासानीति न भवत्यनर्थकत्वात् ।

[ हिनुमीना । आनि लोट् । पा० ८।४।१५-१६, हिनुमीनानीनाम् । स० ७।४।१२५ ]

**नेर्गदनदपतपददाधामावादिहवहशमहनयासाद्राप्साचिवपिषु ॥११६॥**

प्रादिभ्य परस्य नेर्गदादिषु परतो णत्व भवति। प्रणिगदति, प्रणिनदति, प्रणिपतति, प्रणिपद्यते, प्रणियच्छति, प्रणिददाति, प्रणिदयते, प्रणिद्यति, प्रणिधयति, प्रणिदधाति, प्रणिमिमीते, प्रणिमयते, प्रणिमाति, प्रणिवाति, प्रणिदेग्धि, प्रणिवहति, प्रणिशाम्यति, प्रणिहन्ति, प्रणियाति, प्रणिष्यति, प्रणिद्राति, प्रणिप्साति, प्रणिचिनोति, प्रणिवपति। अटो गदादिभक्तत्वात् तद्व्यवायेऽपि भवति । प्रण्यगदत् ।

[ नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च। पा० ८।४।१७, नेर्गदनदपतपदघाधामाङ्स्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च। स० ७।४।१२६ ]

**अकखादावषान्ते पाठे वा ॥११७॥**

प्रादिभ्य परस्य नेर्णत्वं वा भवति, न चेदुपदेशे ककारखकारादि षान्तो वा धातु परो भवति। प्रणिभिनत्ति, प्रनिभिनत्ति। अकखादाविति किम्? प्रनिकरोति, प्रनिखादति। अषान्त इति किम्? प्रनिपिनष्टि। पाठ इति किम्? प्रनिचकार, प्रनिचखाद, प्रनिपेक्ष्यतीत्यत्रापि पर्युदासो यथा स्यात्, [1]प्रणिवेष्टेत्यत्र मा भूत् ।

[ शेषे विभाषाकखादावषान्त उपदेशे। पा० ८।४।१८, वान्यत्र कखादावषान्त उपदेशे। स० ७।४।१२७। [1]प्रणिवेष्टा इत्यत्र। ]

**अनोऽन्ते च ॥११८॥**

प्रादिभ्य परस्यानितेर्नकारस्य पदान्ते चापदान्ते च वर्तमानस्य

णत्व भवति। प्राणिति, पराणिति, हे प्राण्। अथवा अनितिसमीपे यो रेफस्तस्माद् अनितेर्णत्वं भवति। तेनेह न भवति। पर्यनिति। प्राणिणिषति, प्राणिणद् इति णत्वे कृते द्विर्वचन भविष्यति। पूर्वत्रासिद्धीयम् अद्विर्वचने[1]।

[अनिते। अन्त। पा० ८।४।१९-२०, परेरनिते। अन्ते च। स० ७।४।१२८-१२९। [1]See under 75 ]

**हनः ॥११९॥**

प्रादिभ्य· परस्य हन्तेर्नकारस्य णत्व भवति। प्रहण्यते, परिहणनम्। प्रघ्नन्ति, परिघ्नन्तीति न भवति घा ह [ १३४ ] इति प्रतिषेधात्।

[ हन्तेरत्पूर्वस्य। पा० ८।४।२२, हन्ते। स० ७।४।१३१ ]

**व्मोर्वा ॥१२०॥**

वकारमकारयो· परतो हन्तेर्नकारस्य प्रादिभ्य परस्य णत्व वा भवति। प्रहण्वः, प्रहन्व·। प्रहण्म, प्रहन्म।

[ वमोर्वा। पा० ८।४।२३, स० ७।४।१३२ ]

**अन्तरोऽयनस्य चादेशे ॥१२१॥**

अन्त·शब्दात् परस्य हन्तेरवयवस्य नकारस्यायनस्य चादेशे वाच्ये[1] णत्व भवति। अन्तर्हणनम्, अन्तरयणम्। अदेश इति किम्? अन्तर्हननो देशः, अन्तरयन।

[अन्तरदेशे। अयनं च। पा० ८।४।२४-२५, अन्तरोऽयनस्य चादेशे। स० ७।४।१३३। [1]Ms चादेशदाते L, चादेशाभिधाने after Kāś. ]

**सुप्यचः ॥१२२॥**

सुब्विषये योऽच् तस्मात् परो यो नकारस्तस्य प्रादिस्थान्निमित्ताण् णत्वं भवति। प्रयाणम्, प्रयायमाणम्, प्रयाणीयम्, अप्रयाणिः, प्रयायिणौ, प्रहाणः। सुपीति किम्? प्रभिनत्ति, प्रपुनाति। अच इति किम्? प्रभुग्नः।

[ कृत्यच.। पा० ८।४।२९, अचो निष्ठाया। ७।४।१३४ ]

**निर्विण्णः** ॥१२३॥ [स० ७।४।१३५]

निर पस्य विदे क्तान्तस्य निर्विण्ण इति निपात्यते। अत एव वचनान् निर्भिन्नादौ न भवति।

[ कूटस्थस्य णत्वे निर्विण्णस्योपसंख्यानम्। पा० ८।४।२९।१ ]

**णेर्वा** ॥१२४॥ [स० ७।४।१३७]

ण्यन्ताद् विहित सुब्विषये योऽच् तस्मात् परो यो नकारस्तस्य प्रादिस्थान्निमित्ताण्णत्व वा भवति। प्रयापणम्, प्रयापनम। प्रयाप्यमाणम्, प्रयाप्यमानम्। प्रयापणीयम्, प्रयापनीयम। अप्रयापणि, अप्रयापनि। प्रयापिणौ, प्रयापिनौ[1]।

[ णेर्विभाषा। पा० ८।४।३०। [1]अप्रयापिणौ, अप्रयापिनौ। Ms ]

**हलादेरिजुपान्तात्** ॥१२५॥

हलादेरिजुपान्तात् परो योऽच् तत परो यो नकारस्तस्य प्रादिस्थान् निमित्ताण्णत्व वा भवति। प्रकोपणम्, प्रकोपनम्। हलादेरिति किम्? प्रेहणम्, प्रोहणम्। इजुपान्तादिति किम्? प्रवपणम्। अच इत्येव। प्रभुग्न।

[ हलश्चेजुपधात्। पा० ८।४।३१, हलादेरिजुपधात्। स० ७।४।१३८ ]

**नुमीजादेर्हलः** ॥१२६॥

नुमि सतीजादेरेव हलन्तात् परो योऽच् तत परस्य नकारस्य प्रादिस्थान्निमित्ताण्णत्व भवति। प्रेङ्खणम्, प्रेङ्गणम्। नुमीति किम्? इजादेरेव हल इति नियमे प्रापण इति न स्यात्। इजादेरिति किम्? नुम्येव हल इति नियमे प्रवपण इति न स्यात्। हल इति किम्? ण्यन्तादपि नित्य स्यात्।

[ इजादे सनुम। पा० ८।४।३२, नुमीजादेर्हल। स० ७।४।१३९ ]

**वा निक्षनिसनिन्दाम्** ॥१२७॥

निक्षादीना प्रादिस्थान् निमित्तान् नकारस्य णत्व वा भवति। प्रणिक्षणम्, प्रनिक्षणम्। प्रणिसनम्, प्रनिंसनम्। प्रणिन्दनम्, प्रनिन्दनम्। णोपदेशत्वान् नित्ये प्राप्ते विकल्प ।

[वा निसनिक्षनिन्दाम्। पा० ८।४।३३, स० ७।४।१४० ]

**न भाभूपूङ्कमिगमिप्यायीवेपाम्** ॥१२८॥ [०पूकमि० प्यायि०। पा० ८।४।३४]

भादीना प्रयोगेऽच उत्तरस्य प्रादिस्थान्निमित्ताण्णत्वं न भवति। प्रभानम्, प्रभवनम्, प्रपवनम्, प्रकमनम्, प्रगमनम्, प्रप्यायनम्, प्रवेपनम्। ण्यन्तानामपि भादीना प्रयोगोऽस्त्येवेति णत्व न भवति। प्रभापनम्। पूञो ग्रहणात् पूङो न भवति। प्रपवणम्।

[भादिषु पूञ्ग्रहणम्। ण्यन्तस्य चोपसङ्ख्यानम्। पा० ८।४।३४।१-२, न भाभूपूञ्कमिगमिप्यायीवेपा णेश्च। ७।४।१४१ ]

**षः पदे** ॥१२९॥

पदे परतो य· षकारस्तस्मात् पर[1] णत्वं न भवति। निष्पानम्, सर्पिष्पानम्। ष इति किम्? निर्याणम्। पद इति किम्? सुसर्पिष्केण।

[षात्पदान्तात्। पा० ८।४।३५, षात्पदे। स० ७।४।१४२. [1]Ms परो]

**नशेः ष्कः** ॥१३०॥ [स० ७।४।१४३]

नशे षान्तस्य कान्तस्य च णत्व न भवति। प्रनष्ट, प्रनङ्क्ष्यति। ष्क इति किम्? प्रणश्यति।

[नशे षान्तस्य। पा० ८।४।३६, नशेरश। वा० १ ]

**अन्ते** ॥१३१॥

पदान्ते वर्तमानस्य नकारस्य णत्व न भवति। वृक्षान्।

[पदान्तस्य। पा० ८।४।३७, स० ७।४।१४४ ]

**चुड्तुलशर्व्यवाये** ॥१३२॥ [स० ७।४।१४५]

चवर्गटवर्गतवर्गैर्ळकारेण शर्भिश्च व्यवधाने णत्व न भवति। अर्चनम्, मूर्छनम्, सर्जनम्, किराटेन, कर्मठेन, दृटेन, करणेन, कीर्तनम्, चतुर्थेन, मर्दनम्, आरावनम्, प्रेन्वनम्, इवि दिवि धिवि [धातु० १।२०२,२०४] इत्यस्य रूपम्, विरलेन, रशना, रसना। एभिरिति किम्? करणम्, गिरिणा, मूर्खेण, अर्घेण, दर्पेण, रेफेण, पूर्वेण, वृंहणम्, उरXकेण, उर केण, उर͡पेण, उर पेण।

[ अट्कुप्वाङ्नुम्व्यवायेऽपि। पा० ८।४।२ ]

**सुपानाङ्मयेन** ॥१३३॥

सुबन्तेन व्यवाये णत्व न भवति, आङ्[1] मयट च वर्जयित्वा। मापकुम्भवापेन, चतुरङ्गयोगेन। अनाङ्मयेनेति किम्? पर्याणद्धम्, आर्द्रगोमयेण।

**[ पदव्यवायेऽपि। पा० ८।४।३८, पदव्यवायेऽतद्धिते। वा० १, अतद्धितपरानाडा पदेन। स० ७।४।१४६।** [1]Generally आङं is used in such cases ]

**घा हः** ॥१३४॥

घकारेण हादेशेन व्यवाये णत्व न भवति। सुघ्न, शत्रुघ्न। पूर्वपदात् नाम्नि [ १०२ ] इति प्राप्ते प्रतिषेध। प्राघानि। हन [ ११९ ] इति प्राप्ते। ह इति किम्? अर्घेण।

**[ हन्तेरत्पूर्वस्य। पा० ८।४।२२, कुव्यवाये हादेशेषु प्रतिषेध। ८।४।२।४, हन्तेर्घेण। स० ७।४।१४७ ]**

**क्षुभ्नादीनाम्** ॥१३५॥

क्षुम्ना इत्येवमादीना नकारस्य णत्वं न भवति। क्षुभ्नाति। तृप्नोति। नृनमन, पूर्वपदान्नाम्नि [ १०२ ] इति प्राप्ते। नन्दिनन्दननगराणा हरे। हरिनन्दी, हरिनन्दनम्, हरिनगरम्। नृतेर्यङि। नरीनृत्यते। नर्तनम्। परिनर्तनम्। गहनम्। परिगहनम्। नाम्नि [ १०२ ] इति प्राप्ते। नन्दनम्। परिनन्दनम्। णोपदेशस्य [१।१।४वृ,पा०८।४।१४] इति प्राप्ते। निवास।

परिनिवास । निवेश । परिनिवेश । अग्नि । हर्यग्नि, शरभाग्नि । अनूप । दर्भानूप, नाम्नि [ १०२ ] इति प्राप्ते । आचार्यभोगीन । आचार्यानी । क्षुम्नादिराकृतिगण ।

[ क्षुभ्नादिषु च । पा० ८।४।३९ । क्षुभ्नाति-तृप्नोत्याचार्यभोगीनाऽऽचार्यानी-सर्वनाम-नृनमनानाम् । नृतेर्यङि । नृत्त-नर्तन-नट-नद्ध-नदी-नगर-निवेश-निवासा-ग्न्यनूप-नन्दि-नन्दन-नहन-नदनादीनाम् । स० ७।४।१४८-१५० ]

**स्तोः श्चुष्टुभ्यां तौ** ॥१३६॥ [स० ७।४।१५१]

सकारतवर्गयो शकारचवर्गाभ्या षकारटवर्गाभ्या च सन्निपाते तौ शकारचवर्गौ षकारटवर्गौ च यथाक्रम भवत । सकारस्य शकारेण । वृक्षश् शेते । चवर्गेण । वृक्षश्चिनोति, वृक्षश्छादयति । तवर्गस्य शकारेण । अग्नि-चिच्छेते । चवर्गेण । अग्निचिच्चिनोति, सोमसुच्छादयति, अग्निचिज्जयति, सोमसुज्झयति । अग्निचिञ्ञकार । मस्जेर्मज्जति, जश्त्वेन सकारस्य दकार, चुत्वेन च जकार । यज्ञ, याच्ञा । सकारस्य षकारेण । वृक्षष्षण्डे । टवर्गेण । वृक्षष्टीकते, वृक्षष्ठकार । तवर्गस्य षकारेण । पेष्टा । टवर्गेण । अग्निचिट्टीकते, सोमसुट्ठकार, अग्निचिड्डीन, सोमसुड्ढौकते, अग्नि-चिण्णकार । अट्ट । अट्टते[1] । अड्ड । अड्डुनि । निमित्तेषु यथासख्य नास्ति, तो षि [ १३८ ] शाद् [ १३९ ] इति च प्रतिषेधात् । आदेशे तु भवत्येव ।

[ स्तो श्चुना श्चु । ष्टुना ष्टु । पा० ८।४।४०-४१, स्तोश्चुष्टुभ्या तौ । स० ७।४।१५१ [1]Ms अट्टति ]

**न टोरनवतिनगर्योरादेः** ॥१३७॥

टवर्गात् परस्य नवतिनगरीवर्जितस्य पदस्यादेर्यदुक्त तन्न भवति । श्वलिट् साये, श्वलिट् तरति । टोरिति किम् ? यजुष्ट्वम् । अनवतिनगर्यो-रिति किम् ? षण्णवति, षण्णगरी । आदेरिति किम् ? ईड । ईट्टे । षण्णाम् ।

[ न पदान्ताट्टोरनाम्। पा० ८।४।४२, अत्यल्पमिदमुच्यतेऽनामिति। अनाम्नवतिनगरीणां चेति वक्तव्यम्। भाष्यम्। न पदान्ताट्टोरनाम्नवतिनगरीणाम्। स० ७।४।१५२ ]

**तोः षि** ॥१३८॥ [पा० ८।४।४३, स० ७।४।१५३]

तवर्गस्य षकारे परतो यदुक्तं तन्न भवति। अग्निचित् षण्डे। भवान् षण्डे।

**शात्** ॥१३९॥ [पा० ८।४।४४, स० ७।४।१५४]

शकारादुत्तरस्य तवर्गस्य यदुक्तं तन्न भवति। विश्नः, प्रश्नः।

**यरो ञमि ञम् वा** ॥१४०॥

यरो ञमि परतो ञमादेशः प्रत्यासन्नो भवति वा। वाङ् ञकारः, वाग् ञकारः। वाङ् मधुरा, वाग् मधुरा। त्वङ् नयति, त्वग् नयति। वाङ्मयम्, त्वङ्मयम् इति व्यवस्थितविभाषया नित्यं भवति। क्वचिन् न भवति। यत्नः, यज्ञः, याच्ञा।

[ यरोऽनुनासिकेऽनुनासिको वा। पा० ८।४।४५, यरोऽनुनासिके प्रत्यये भाषायां नित्यवचनम्। वा० १। पदान्तस्य यरो ञमि ञम् वा। स० ७।४।१५५ ]

**अचो रहाद् द्वे** ॥१४१॥

अचः परौ यौ रेफहकारौ ताभ्यां परस्य यरो द्वे वा भवतः। अर्क्कः, अर्कः। ब्रह्म्मा, ब्रह्मा। अच इति किम्? ह्रुते।

[ अचो रहाभ्यां द्वे। पा० ८।४।४६, स० ७।४।१५७ ]

**अनचि** ॥१४२॥

अचः परस्य यरो द्वे वा भवतः, न चेदच् परो भवति। दद्ध्यत्र, दध्यत्र। मद्ध्वत्र, मध्वत्र। वाक्क्, वाक्। अचि तु न भवति। दधि, मधु।

[ अनचि च। पा० ८।४।४७, अवसाने च। वा० ३। तत्तर्हि वक्तव्यम्? न वक्तव्यम्। नायं पर्युदासो यदन्यदच इति। किं तर्हि? प्रसज्यप्रतिषेधोऽयम् अचि नेति। महाभाष्यम् as emended by Kaiyata ]

**यणो मयः** ॥१४३॥ [स० ७।४।१५९]

यण परस्य मयो द्वित्वं वा भवति। उल्क्का, उल्का। वाल्म्मीक॰, वाल्मीक। अथवा मय परस्य यणो द्वित्वं वा भवति। दद्ध्यत्र, दध्यत्र। मद्ध्वत्र, मध्वत्र।

[द्विर्वचने यणो मय। पा० ८।४।४७।१। किमुदाहरणम्? यदि यण इति पञ्चमी मय इति षष्ठी उल्क्का वल्म्मीकमित्युदाहरणम्। अथ मय इति पञ्चमी यण इति षष्ठी दध्य्यत्र मद्ध्वत्रेत्युदाहरणम्। भाष्यम्।]

**शरः खयः** ॥१४४॥ [स० ७।४।१६०]

शर परस्य खयो द्वित्व वा भवति। स्थ्थानम्, स्थानम्। अथवा खयः परस्य शरो द्वित्वं वा भवति। वत्स्स, वत्स। क्ष्षीरम्, क्षीरम्।

[पा० ८।४।४७।२। किमुदाहरणम्? यदि शर इति पञ्चमी खय इति षष्ठी स्थ्थाली स्थ्थातेत्युदाहरणम्। अथ खय इति पञ्चमी शर इति षष्ठी वत्स्स. क्ष्षीरम् अप्स्सरा इत्युदाहरणम्। भाष्यम्।]

**नाक्रोशे पुत्रस्यादिनि तत्परे च** ॥१४५॥

आक्रोशे गम्यमाने पुत्रस्यादिनि तत्परे च परतो द्वित्व न भवति। पुत्रादिनी, पुत्रपुत्रादिनी। आक्रोश इति किम्? पुत्त्रादिनी शिशुमारी। पुत्त्रपुत्त्रादिनी। आदिनीति किम्? पुत्त्रहती, पुत्त्रजग्धी।

[नादिन्याक्रोशे पुत्रस्य। पा० ८।४।४८, नादिन्याक्रोशे पुत्रस्येति तत्परे च। वा हतजग्धपरे च। वा० १-२। न पुत्रस्यादि। पुत्रादिनोराक्रोशे। स० ७।४।१६१-१६२]

**शरोऽचि रात्** ॥१४६॥ [स० ७।४।१६३]

शरोऽचि परतो रात् परस्य द्वित्वं न भवति। विमर्ष, आदर्श॰। शर इति किम्? अर्क्क। अचीति किम्? कार्श्र्यम्[1]। रादिति किम्? वत्स्स।

[शरोऽचि। पा० ८।४।४९. [1]Ms. कार्श्र्य

**दीर्घात्** ॥१४७॥

दीर्घात् परस्य न द्वे भवत । दात्रम्, मूत्रम् ।

[ दीर्घादाचार्याणाम् । पा० ८।४।५२ ]

**खरि चर्झलः** ॥१४८॥

खरि परतो झलश्चर्भवति । भेत्ता, लिप्सा । खरीति किम्? भिद्यते । झल इति किम्? कण्ठ ।

[ खरि च । पा० ८।४।५५, चर्खरि । स० ७।४।१६५ ]

**वा विरामे** ॥१४९॥ [स० ७।४।१६६]

विरामे वर्तमानस्य झलश्चर्वा भवति । वाक्, वाग् । श्वलिट्, श्वलिड् ।

[ वावसाने । पा० ८।४।५६ ]

**अणोऽनुनासिकः** ॥१५०॥

विरामे वर्तमानस्याणोऽनुनासिकत्वं वा भवति । दधिँ, दधि । मधुँ, मधु । व्यवस्थितविभाषया क्वचिन् न भवति । अग्नी, वायू, अमू, अमी ।

[ अणोऽप्रगृह्यस्यानुनासिक । पा० ८।४।५८, स० ७।४।१६७ ]

**अनुस्वारस्य ययि यम्** ॥१५१॥ [स० ७।४।१६८]

अनुस्वारस्य ययि परतो यमादेश प्रत्यासन्नोऽनुनासिको भवति । शङ्किता, उञ्छिता, कुण्ठिता[1], नन्दिता, कम्पिता । ययीति किम्? कंस । अनुनासिक इत्येव । ययम्यते, ररम्यते ।

[ अनुस्वारस्य ययि परसवर्णः । पा० ८।४।५८ । [1]कण्ठिता L ]

**पदादौ वा** ॥१५२॥

पदादौ ययि परतोऽनुस्वारस्य यमादेशोऽनुनासिको वा भवति । सय्ँयत्ता, संयत्ता । सव्ँवत्सर, संवत्सर । तल्ँलोक, तं लोक । दिव्यञ्चक्षु,

दिव्यं चक्षु । सुखम्पुण्य, सुख पुण्य । ययीत्येव । पर श्रेय । अनुनासिक इत्येव । बल राजा ।

[ वा पदान्तस्य । पा० ८।४।५९, पदान्ताभ्यासयोर्वा । स० ७।४।१६९ ]

**तोर्लि** ॥१५३॥ [पा० ८।४।६०, स० ७।४।१७०]

तवर्गस्य लकारे परतो यमासन्नो भवति । इपल्लुनाति । भवाँल्लुनाति ।

**उदः स्थास्तम्भोस्तः** ॥१५४॥

उद परयो स्थास्तम्भोरादेस्तकारो भवति । उत्थाता, उत्तम्भिता । स्थास्तम्भोरिति किम् ? उत्स्नाता । कथम् उत्कन्दको रोग इति ? कन्देर्भविष्यति ।

[ उद स्थास्तम्भ्वो पूर्वस्य । पा० ८।४।६१, उद स स्थास्तम्भोर्लोप । रोगे स्कन्दे । स० ७।४।१७१-१७२ ]

**हलो झरां झरि सस्थाने लोपो वा** ॥१५५॥

हल· परेषा झरा झरि समानस्थाने परतो लोपो वा भवति । प्रत्त इति त्रयस्तकारा, द्वित्वजश्चतुर्थ । तत्र मध्यमयोर्लोपो वा भवति । मरुत्त इति चत्वारस्तकारा, द्वित्वज पञ्चम । मध्यमाना लोपो वा भवति । हल इति किम् ? दत्तम् । झरामिति किम् ? शार्ङ्गम् । झरीति किम् ? प्रियसक्थ्ना । सस्थान इति किम् ? तर्प्ता । शय्येति द्वित्वस्य विकल्पितत्वाल्लोपो न वक्तव्य । एवम् अदितेरपत्यम् आदित्य इति । आदित्यो देवतास्येत्यादित्य· । आपत्ययकारत्वाल्लोपो भविष्यति ।

[ हलो यमा यमि लोप । पा० ८।४।६४, स० ७।४।१७३, झरो झरि सवर्णे । पा० ८।४।६५, झरा झरि सवर्णे च । स० ७।४।१७४ ]

**झयो हो झय्** ॥१५६॥

झय: परस्य हकारस्य झयादेशो वा भवति । वाग् घसति, वाग् हसति । श्वलिड् ढसति, श्वलिड् हसति । अग्निचिद्धसति, अग्निचिद् हसति । त्रिष्टुब् भसति, त्रिष्टुब् हसति । हकारस्थाने प्रत्यासत्तेर्घोषवतो घोषवन्त

इति तृतीया' प्रसक्ता' । महाप्राणस्य स्थाने महाप्राणा एव प्रत्यासन्नतराश्चतुर्थां भवन्ति । झय इति किम्? भवान् हसति ।

[ झयो होऽन्यतरस्याम् । पा० ८।४।६२, जशो हो झष् । स० ७।४।१७५ ]

शश्छोऽमि ॥१५७॥

झय' परस्य शकारस्यामि परतश्छकारो वा भवति । वाक् छेते, वाक् शेते । श्वलिट् छेते, श्वलिट् शेते । तच्छ्लोकेन, तच् श्लोकेन । तच्छ्मश्रुणा, तच् श्मश्रुणा । अमीति किम्? तच् श्च्योतति ।

[ शश्छोऽटि । पा० ८।४।६३ । छत्वममि तच्छ्लोकेन तच्छ्मश्रुणेति प्रयोजनम् । वा० १ । चय. शश्छोऽमि । स० ७।४।१७६. Rāma Tarkavāgīśa says under Mugdhabodha 62 वाक्छ्लक्ष्ण. वाक्श्लक्ष्ण', वाक्छ्मशानम्, वाक्श्मशानम् । अनयो परयो. शस्य नेच्छन्ति चान्द्रा He was thinking not of Candra but of Sarvavarman who says वर्गप्रथमेभ्य. शकारः स्वरयवरपरश्छकारं न वा । 43 ]

चयः शरि द्वितीयः ॥१५८॥

चय' शरि परतो द्वितीयो वा भवति । भवथ्सु, भवत्सु । ख्षीरम्, क्षीरम् । अफ्सरा', अप्सरा । शरीति किम्? सत्यम् ।

[ चयो द्वितीया शरि पौष्करसादे. । पा० ८।४।४८।३, शरि द्वितीय' । स० ७।४।१७७ ]

इति चान्द्रे व्याकरणे षष्ठोऽध्याय. समाप्त'[1] ।

समाप्त चेदं चान्द्रव्याकरणम् ।

[1]Added in another hand· श्रीमदाचार्यधर्मदासस्य कृतिरियम् ॥ शुभं भवतु ॥ समाप्तं चेद चान्द्रव्याकरणम् । शुभम् ॥

# अथ वर्णसूत्राणि

## नमो मञ्जुघोषाय

स्थानकरणप्रयत्नेभ्यो वर्णा जायन्ते ॥१॥

तत्र स्थानम् ॥ २ ॥

कण्ठोऽकुहविसर्जनीयानाम् ॥ ३ ॥

कण्ठतालुकमिदेदैताम् ॥ ४ ॥

कण्ठोष्ठमुदोदौताम् ॥ ५ ॥

मूर्धा ऋटुरषाणाम् ॥ ६ ॥

दन्ता लृतुलसानाम् ॥ ७ ॥

नासिकानुस्वारस्य ॥ ८ ॥

स्वस्थानानुनासिका ङञणनमाः ॥ ९ ॥

तालिवचुयशानाम् ॥ १० ॥

ओष्ठावुपूपध्मानीयानाम् ॥ ११ ॥

दन्तोष्ठं वकारस्य ॥ १२ ॥

जिह्वामूलं जिह्वामूलीयस्य ॥ १३ ॥

करणम् ॥ १४ ॥

जिह्वाग्रं दन्त्यानाम् ॥ १५ ॥

जिह्वोपाग्रं शिरस्यानाम् ॥ १६ ॥

जिह्वामध्यं तालव्यानाम् ॥ १७ ॥

शेषाः स्वस्थानकरणा ॥ १८ ॥

प्रयत्नो द्विविध आभ्यन्तरो बाह्यश्च ॥ १९ ॥

तत्राभ्यन्तरः ॥ २० ॥

संवृतत्वं विवृतत्वं स्पृष्टत्वमीषत्स्पृष्टत्वं च ॥ २१ ॥

विवृतत्वं स्वराणामूष्मणां च ॥ २२ ॥

तेभ्यो विवृततरत्वमेदोतोः ॥ २३ ॥

ताभ्यामैदौतोस्ताभ्यामप्याकारस्य ॥२४॥

स्पृष्टत्व स्पर्शानाम् ॥ २५ ॥

ईषत्स्पृष्टत्वमन्तःस्थानाम् ॥ २६ ॥

बाह्य ॥ २८ ॥

वर्गाणां प्रथमद्वितीयाः शषसा विसर्जनीयजिह्वामूलीयोपध्मानीयाश्च विवृतकण्ठाः श्वासानुप्रदाना अघोषाः ॥ २९ ॥

प्रथमतृतीयपञ्चमा अन्तस्थाश्चाल्पप्राणा· ॥ ३० ॥

इतरे महाप्राणा ॥ ३१ ॥

तृतीयचतुर्थपञ्चमाः सानुस्वारान्तःस्थहकारा. संवृतकण्ठा नादानुप्रदाना घोषवन्त. ॥ ३२ ॥

द्वितीयचतुर्थो. शषसहाश्चोष्माण. ॥३३॥

कादयो मावसानाः स्पर्शा. ॥ ३४ ॥

अन्तःस्था यरलवा. । इत्येष बाह्यप्रयत्न. ॥ ३५ ॥

अत्र चावर्णो ह्रस्वो दीर्घः प्लुत इति त्रिधा भिन्नः ॥ ३६ ॥

प्रत्येकमुदात्तानुदात्तस्वरितभेदेन सानुनासिका ऽनुनासिकभेदेन चाष्टादशधा भवति ॥ ३७ ॥

एवमिवर्णोवर्णावृवर्णश्च ॥ ३८ ॥

ऌवर्णस्य दीर्घा न सन्ति तेन स द्वादशधा भवति ॥ ३९ ॥

सन्ध्यक्षराणा ह्रस्वाभावात् तान्यपि द्वादशधा ॥ ४० ॥

एकमात्रिको ह्रस्व· ॥ ४१ ॥

द्विमात्रिको दीर्घ. ॥ ४२ ॥

त्रिमात्रिकः प्लुत. ॥ ४३ ॥

उच्चैरुदात्तः ॥ ४४ ॥

नीचैरनुदात्तः ॥ ४५ ॥

समाहार· स्वरितः ॥ ४६ ॥

स्वस्थानानुनासिको निरनुनासिकश्च ॥ ४७ ॥

अन्तःस्था द्विप्रभेदा रेफवर्जिताः सानुनासिका निरनुनासिकाश्च ॥ ४८ ॥

इति चान्द्रवर्णसूत्राणि समाप्तानि[1]।

---

[1]इति चन्द्रगोमिकृतं वर्णसूत्रं समाप्तम् इति पाठान्तरम्।

# अथ परिभाषासूत्राणि

अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् ॥ १ ॥
लक्षणप्रतिपदोक्तयो प्रतिपदोक्तस्यैव ॥ २ ॥
नामग्रहणे लिङ्गविशिष्टस्यापि ॥ ३ ॥
प्रकृतिग्रहणे यङ्लुगन्तस्यापि ॥ ४ ॥
एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ॥ ५ ॥
निरनुबन्धग्रहणे न सानुबन्धकस्य ॥ ६ ॥
आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ७ ॥
[ यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते । ]
तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ ८ ॥
यस्मिन् विधिस्तदादावल्ग्रहणे ॥ ९ ॥
सर्वत्र तदन्तविधिरन्यत्रच्छतुक्स्वरसन्धेः ॥ १० ॥
ग्रहणवतान्ते न तदन्तविधि ॥ ११ ॥

[ Should we read ग्रहणवता लिङ्गेन न तदन्तविधि. ? The Mahābhāsya has ग्रहणवता प्रातिपदिकेन तदन्तविधि· प्रतिषिध्यते । ]

अन्यार्थे तद्गुणसंविज्ञानमपि ॥ १२ ॥
सन्निपातलक्षणो विधिरनिमित्त तद्विघातस्य ॥ १३ ॥
उच्चरितप्रध्वंसिनोऽनुबन्धा. ॥ १४ ॥
एकदेशविकृतमनन्यवत् ॥ १५ ॥
एकदेशेऽन्यत्र न व्यपदेशोऽपि तत्कृत तद्भावेऽपि तदव्यपदेशात् ॥ १६ ॥
व्यपदेशिवद्भाव एकस्मिन् ॥ १७ ॥
आद्यन्तवदेकोऽप्यच् ॥ १८ ॥
निर्दिश्यमानस्यादेशा ॥ १९ ॥
स्थानिवदादेश ॥ २० ॥
णौ कृत च ॥ २१ ॥
स्थानेऽन्तरतम· ॥ २२ ॥
प्रत्यासत्ते. प्रकृतिवदनुकरणम् ॥ २३ ॥
पूर्वत्रासिद्धीयमद्विर्वचने ॥ २४ ॥
प्रत्येक वाक्यपरिसमाप्ति ॥ २५ ॥
समुदाये वाक्यपरिसमाप्ति ॥ २६ ॥
सापेक्षमसमर्थम् ॥ २७ ॥
उक्तार्थानामसयोग ॥ २८ ॥
[ उक्तार्थानामप्रयोगः । ]
अनिर्दिष्टार्था विधयः स्वार्थे भवन्ति[1] ॥ २९ ॥

[ [1]ध्नन्ति Ms ]
अनन्तरस्य विधिः प्रतिषेधो वा ॥ ३० ॥
येन नाप्राप्ते यो विधिः प्राप्तः स तस्य बाधको भवति ॥ ३१ ॥
[ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति । ]
असति सम्भवे बाधनं भवति ॥ ३२ ॥
सत्यपि सम्भवेऽबाधे बाधा ॥ ३३ ॥
अस्ति च सम्भवो यदुभयं स्यात् ॥ ३४ ॥
पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते ॥ ३५ ॥
मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते न परान् ॥ ३६ ॥
यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते ॥ ३७ ॥
यस्य तु विधेर्निमित्तमेव नासौ बाध्यते ॥ ३८ ॥
एकयोगनिर्दिष्टानामप्येकदेशोऽनुवर्तते न त्वेकविभक्तिनिर्दिष्टानाम् ॥ ३९ ॥
चानुकृष्टमुत्तरत्र नानुवर्तते ॥ ४० ॥
कार्यानुबन्धादधिकारानुवृत्तिः ॥ ४१ ॥
भिन्नसम्बन्धे प्रतियोगे प्रतिघाते चाधिकाराणां निवृत्तिः ॥ ४२ ॥
इष्टे तदधिकाराणां प्रवृत्तिनिवृत्ती ॥ ४३ ॥
भाव्यमानोत् सवर्णं गृह्णाति ॥ ४४ ॥
[ Should we read भाव्यमानोऽप्युत् ? ]
असिद्धं बहिरङ्गमन्तरङ्गे ॥ ४५ ॥
अत्रानन्तर्ये न बहिरङ्गपरिभाषा ॥ ४६ ॥
अन्तरङ्गबहिरङ्गयोरन्तरङ्गो विधिर्बलीयान् ॥ ४७ ॥
नामविधेरन्तरङ्गात् सर्वतो लोपः ॥ ४८ ॥
श्रुतानुमितयोः श्रौतो बलीयान् ॥ ४९ ॥
निरवकाशा विधयः सावकाशान् विधीन् बाधन्ते ॥ ५० ॥
सहचरितप्रत्यासत्तेस्तदितरेतरयोगः ॥ ५१ ॥
विशेषविधिः सामान्यात् ॥ ५२ ॥
गौणमुख्ययोर्मुख्ये सम्प्रत्ययः ॥ ५३ ॥
इतरेतरं कार्यमसद्वत् ॥ ५४ ॥
व्यवस्थितविभाषया योगविभागाद्वेष्टसिद्धिः ॥ ५५ ॥
वर्त्स्यत्प्रवृत्त्या शास्त्रे कार्यम् ॥ ५६ ॥
गमकत्वे कार्ययोगः ॥ ५७ ॥
शब्दाधिक्यमधिकार्थं कार्याधिक्यं गमयति ॥ ५८ ॥
[ उद्वृत्तो हि ग्रन्थः समधिकफलमाचष्टे । ]

प्रकृतिप्रवृत्ते· पुनर्वृत्तावविधिर्निष्ठितस्य ॥ ५९ ॥
विप्रतिषेधे यद्बाधित तद्बाधितमेव ॥ ६० ॥
पुन प्रसङ्गविज्ञानात् सिद्धम् ॥ ६१ ॥
व्यवधानेऽप्युक्तिप्रामाण्यात् ॥ ६२ ॥
[ येन नाव्यधान तेन व्यवहितेऽपि वचनप्रामाण्यात् । महाभाष्यम् । ]
निमित्ताभावे नैमित्तिकस्याप्यभाव. ॥ ६३ ॥
सन्नियोगशिष्टयोरेकतराभाव उभयोरप्यभावः ॥ ६४ ॥
नञिवयुक्ते सदृशसम्प्रत्यय ॥ ६५ ॥
व्याख्यानतो विशेषप्रतिपत्ति. ॥ ६६ ॥
न हि सन्देहादलक्षणम् ॥ ६७ ॥
In the Mahābhāsya 66 and 67 are read as one Paribhāsā
विवक्षाव्याप्तेरिष्टावसाय· ॥ ६८ ॥
विवक्षात. कारकावसायः ॥ ६९ ॥
उपपदविभक्ते. कारकविभक्तिर्बलीयसी ॥ ७० ॥
सूत्रे लिङ्गवचनमप्रमाणमविवक्षितत्वात् ॥ ७१ ॥
वाच्यवल्लिङ्गवचने ॥ ७२ ॥
अव्यक्ते गुणसन्देहे नपुसकलिङ्ग प्रयुज्यते ॥ ७३ ॥

[ The omission of लिङ्ग will turn it into an Anustup hemistich अनिर्ज्ञातेऽर्थे गुणसन्देहे च नपुंसकलिङ्गं प्रयुज्यते । महाभाष्यम् । ]

लिङ्गमशिष्यं लोकाश्रयत्वात् ॥ ७४ ॥
अर्थवशाद्विभक्तिवचनलिङ्ग[वि]परिणाम ॥ ७५ ॥
नानुबन्धकृतमनेकाल्त्वम् ॥ ७६ ॥
कृताकृतप्रसङ्गो विधिर्नित्य. ॥ ७७ ॥
ज्ञापकेऽर्थमनित्यम् ॥ ७८ ॥

[ Should we read ज्ञापकसिद्धम् or ज्ञापककृतम् for ज्ञापकेऽर्थम् as अर्थ is masc ? ]

अनित्यमागमशासनम् ॥ ७९ ॥
स्वार्थे णिस् नित्यम् ॥ ८० ॥
प्रादीना क्रियायोगित्वं विशेषद्योतित्वे स्वभावात् ॥ ८१ ॥
अभिधानप्रत्यया. सनादिसमासा भूतपूर्वगतिरत्रास्ति ॥ ८२ ॥
अक्षराधिक्यादपि योगविभागो गरीयान् ॥ ८३ ॥
अर्थापत्त्या शास्त्रे सिद्धिरुक्तिप्रामाण्यात् ॥ ८४ ॥
सिद्धशब्दोद्देशान्नेतरेतराश्रयदोषः ॥ ८५ ॥
स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ ८६ ॥

इति चन्द्रपरिभाषासूत्राणि समाप्तानि ।

# सूत्रानुक्रमणी

---